THE

# KÂSHÎ-SANSKRIT-SERIES

*( HARIDÂS SANSKRIT GRANTHAMĀLĀ )*

**126.**

( Mīmāmsa Section, No. 7. )



॥ श्रीः ॥

श्रीमन्माधवाचार्यविरचिता

# जैमिनीयन्यायमाला

तद्विरचितेन विस्तरेण विभूषिता ।

( तृतीयाध्यायान्ता )



PUBLISHED BY

JAYA KRISHNADAS—HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

THE

# KASHI SANSKRIT SERIES.

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

**126**

---

( Mīmāmsa Section, No. 7 )

THE

# Jaiminīya Nyāyamālā

Of

**MĀDHAVĀCHĀRYA**

WITH HIS OWN COMMENTARY

## THE NYĀYAMĀLĀVISTARA

**( Part I, Chapter I–III )**

*Edited with*

*The Explanation of Examples and notes*

BY


MĪMĀMSĀSIROMAṆI, MĪMĀMSAKABHŪṢAṆA

**PT. A. RĀMANĀTHA S'ĀSTRY**

Prof. S. V. S. College, Tirupati.

and

MIMĀMSĀCHĀRYA

**PT. PATTĀBHIRĀMA S'ĀSTRY**

*Asst. Professor of Mīmamsā B. H. U.*



PUBLISHED BY

**JAYA KRISHNA DÂS HARIDÂS GUPTA**

*The Chowkhamba Sanskrit Series Office.*

*BENARES.*

---

1937

ह रि दा स सं स्कृ त ग्र न्थ मा ला स मा ख्य-

काशी-संस्कृत-सीरिज़्पुस्तकमालायाः

१२६

मीमांसाविभागे (७) सप्तमं पुष्पम् ।

श्रीमन्माधवाचार्यविरचिता

# जैमिनीयन्यायमाला

तद्विरचितेन विस्तरेण विभूषिता ।

( तृतीयाध्यायान्ता )

मीमांसाशिरोमणिना, मीमांसाकभूषणेन

तिरुपतिसंस्कृतविद्यालयाध्यापकेन

पं० अ० रामनाथशास्त्रिणा

हिन्दूविश्वविद्यालये पूर्वमीमांसाध्यापकेन

मीमांसाचार्येण पं० पट्टाभिरामशास्त्रिणा च

रचितया विषयवाक्यविवरण्या समलङ्कृत्य संशोधिता ।

प्रकाशकः—

जयकृष्णदास—हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

१९९४

* श्रीः *

श्रीवेङ्कटेशश्शरणम् ॥

# किञ्चित् प्रास्ताविकम् ।

अयमिदानीं जैमिनीयन्यायमालाख्यस्सविस्तरस्सुप्रथितः पूर्वमीमांसाग्रन्थ आरब्धपुनर्मुद्रणः प्राप्तावशेषोऽपि अंशत एव प्रकाशं प्राप्यते छात्राणामुपकृतये । ग्रन्थस्यास्याऽध्यापनकार्यमसकृदावहन्नहं बहुधा बहुत्र मुद्रितस्याऽप्यस्य प्रायशस्सारल्यमाबिभ्रतोऽपि क्वचित् विषयवाक्यादौ विवरणमपेक्षमाणस्य समुचितसंस्करणाभावेनाऽदसीयं लाभं यथावदनुभवितुं क्लिश्यतश्छात्रसङ्घानवलोक्य खिन्नमनाः पुनः पुनरचिन्तयम्—यदि कश्चिदस्य पुनर्मुद्रणे कृतादरो भवेत्, तमहमुपकुर्यामात्मीयेन शोधनसाहाय्येनेति । आशयमिममात्मनः कदाचिदत्राऽऽगतानां काशीहिन्दूविश्वविद्यालये पूर्वमीमांसाधर्मशास्त्रयोः प्रधानाध्यापकानामस्मत्पूज्यभ्रातृचरणानां सविधे न्यवेदयम् । ते च कार्यस्यास्याऽत्यावश्यकतां कियतश्चन कालादेव पश्यन्तस्समुचितं मदीयं निवेदनं काशीस्थसुप्रसिद्धचौखम्बापुस्तकावलीनेत्रे गीर्वाणवाणीपरिवर्धनदत्तचित्ताय श्रीमते जयकृष्णदासगुप्तमहोदयायाऽकथयन् । स च समनन्तरमेवाऽङ्गीकृततत्कार्यभारो मामभ्यर्थयामास विषयवाक्यविवरणरूपां काञ्चन लघ्वीं टिप्पणीं लिखितुं श्रीपूज्यभ्रातृचरणद्वारा । मया च छात्रोपकृतिमेव विशिष्टां मन्यमानेन लघ्वी सरलपदसन्दब्धा विषयवाक्यविवरणी टिप्पणी काचन विलिख्य दत्ता । सा च मन्ये विषयमिमं प्रविविक्षतां बालानामवश्यमवलम्बयष्टिर्भवेदिति । तेषु तेष्वधिकरणेषु भाष्यवार्तिकादौ विषयवाक्यत्वेन शाखान्तरवाक्यानामुपादाने सत्यपि अनेन ग्रन्थकारेण तत्समानाकाराणि सत्युपलम्भे तैत्तिरीयशाखागतान्येवोपात्तानि । अतो मयाऽपि तान्येव वाक्यानि यथासंभवं विवृतानि ।

चित्राधिकरणे (१. ४. ३.) आज्यादिस्तोत्रविवरणार्थं काश्चिद्विष्टुतयः, तासां विधयश्च समाम्नाताः । तत्स्वरूपं च नितरां विवरणमपेक्षत इति तत्प्रकारोऽत्र निरूप्यते। त्रिवृत्पञ्चदशादयः स्तोमा; आज्यपृष्ठादिस्तोत्रगतास्संख्याविशेषाः । तानि च स्तोत्राणि उद्गातृप्रस्तोतृप्रतिहर्त्राख्यैस्सामवेदीयैस्त्रिभिः ऋत्विग्भिर्गातव्यानि । ते चर्त्विजस्त्रयः तत्तत्क्रतुषु सोमयागात्मकेषु सोमरसग्रहणादिव्यापरेषु कृतेषु सदोनामके मण्डपे औदुम्बर्यास्स्थूणायास्समीपे उपविश्य गायेयुः । गानसमये उद्गाता औदुम्बर्यपाश्रयः उदङ्मुखः उपविशेत् । प्रस्तोता उद्गातुर्दक्षिणभागे पश्चिमाभिमुख उपविशेत् । प्रतिहर्ता तूद्गातुर्वामभागे पूर्वाभिमुख उपविशेत् । एवमुपविष्टेषु तेषु प्रस्तोता प्रथमं स्तोत्रमारभेत । आरम्भकाले स्तोत्रगणनार्थं औदुम्बरीः कुशा भूमौ निक्षिपेत् । तत्र त्रिवृत्स्तोमस्य कुशानिक्षेपप्रकार इत्थम्—

## ( १ ) उद्यती विष्टुतिः—

| प्रथमः पर्यायः | द्वितीयः पर्यायः | तृतीयः पर्यायः |
| --- | --- | --- |
| प्र० ऋक् | द्वि० ऋक् | तृ० ऋक् |
| तिसृभ्यो हिंकरोति स प्रथमया | ,, स मध्यमया | ,, स उत्तमया |

## ( २ ) परिवर्तिनी विष्टुतिः—

| प्र० पर्यायः | द्वि० पर्यायः | तृ० पर्यायः |
| --- | --- | --- |
| तिसृभ्यो हिङ्करोति स पराचीभिः प्र०ऋ० द्वि०ऋ० तृ०ऋ० | ,, स पराचीभिः प्र०ऋ० द्वि०ऋ० तृ०ऋ० | ,, स पराचीभिः प्र०ऋ० द्वि०ऋ० तृ०ऋ० |

## ( ३ ) कुलायिनी विष्टुतिः—

| प्र० पर्यायः | द्वि० पर्यायः | तृ० पर्यायः |
| --- | --- | --- |
| तिसृभ्यो हिङ्करोति स पराचीभिः प्र०ऋ० द्वि०ऋ० तृ०ऋ० | ,, द्वि०ऋ० तृ०ऋ० प्र०ऋ० | ,, तृ०ऋ० प्र०ऋ० द्वि०ऋ० |

एवं त्रिवृत्स्तोमस्य त्रिविधोऽपि विष्टुतिप्रकारः प्रदर्शितः ।

## अथ पञ्चदशस्तोमस्यैका पञ्चपञ्चिनी विष्टुतिः प्रदर्श्यते—

| प्र० पर्यायः | द्वि० पर्यायः | तृ० पर्यायः |
| --- | --- | --- |
| पञ्चभ्यो हिंकरोति | ,, | ,, |
| स तिसृभिः, स एकया, स एकया। | स एकया, स तिसृभिः, स एकया। | स एकया, स एकया, स तिसृभिः। |
| प्र०ऋ० द्वि०ऋ० तृ०ऋ० | प्र०ऋ० द्वि०ऋ० तृ०ऋ० | प्र०ऋ० द्वि०ऋ० तृ०ऋ० |
| ‖‖ । । | । ‖‖ । | । । ‖‖ |

## सप्तदशस्तोमस्य प्रथमा दशसप्ताख्या विष्टुतिः—

| प्र० पर्यायः | द्वि० पर्यायः | तृ० पर्यायः |
| --- | --- | --- |
| पञ्चभ्यो हिंकरोति | ,, | सप्तभ्यो हिंकरोति |
| स तिसृभिः, स एकया, स एकया। | स एकया, स तिसृभिः, स एकया। | स एकया, स तिसृभिः, स तिसृभिः |
| प्र०ऋ० द्वि०ऋ० तृ०ऋ० | प्र०ऋ० द्वि०ऋ० तृ०ऋ० | प्र०ऋ० द्वि०ऋ० तृ०ऋ० |
| ‖‖ । । | । ‖‖ । | । ‖‖ ‖‖ |

एवं पञ्चदशसप्तदशस्तोमयोराद्याया ग्रन्थोक्ताया एवैकैकस्या विष्टुतेः कुशानिक्षेपप्रकारः प्रदर्शितः। कुशाशब्देन स्त्रीप्रत्ययान्तेन प्रादेशमात्रः एकत्र तष्टः औदुम्बरः काष्ठविशेष उच्यते। ताश्च कुशाः स्तोत्रीयसंख्यागणनार्थमेवोपयुज्यन्ते। अत्र सर्वत्राऽपि नीचैस्त उपरि पठनीयम्। प्रत्यङ्मुखोपविष्टेन प्रस्तोत्रा स्वाग्रतः क्रियमाणत्वाच्च उपरि भागः पश्चिमा दिगिति चाऽनुसन्धेयम्। स्तोत्रीयविष्टुतिप्रकारो दिङ्मात्रमिह प्रदर्शितः। परं तत्तत्क्रतुषु पठनीयस्तोत्रगतत्वेन विहिता स्तोमा नवविधाः त्रिवृदाद्याः अष्टचत्वारिंशदन्ताः। तेषां विष्टुतिप्रकाराश्च ताण्ड्यमहाब्राह्मणे विहिताः। तत्तद्विष्टुतिषु कुशानिक्षेपप्रकाराश्चाऽस्मद्भ्रातृचरणैः स्वसंस्कृतताण्ड्यमहाब्राह्मणभूमिकायां विस्तरशो निरूपितास्तत एवाऽवगन्तव्याः।

निवेदनेऽत्र ग्रन्थविषये आचार्यश्रीमाधवविषये तत्समयसम्बन्धे चाऽस्ति बहु वक्तव्यम्। तत्सर्वं ग्रन्थमुद्रणसामग्र्यसम्पादनानन्तरकरणीयमिति धिया नेदानीं

किञ्चिदुच्यते । मन्ये यदि वाञ्छति भगवान् भक्ताभीष्टपूरकः शेषाचलनिवासी तर्ह्य-चिरादेव तत् सम्पादयिष्यति स एव ।

कृत्वैतत्संक्षिप्तं विवरणं विषयवाक्यानामन्येषां चाऽधिकरणमध्योद्धृतानां वाक्यानां तत्तत्स्थलनिर्देशपूर्वकं द्रणसंशोधनाय तत्र निकटवर्तिने हिन्दूविश्वविद्यालये पूर्व-मीमांसामध्यापयते पण्डितवराय **पट्टाभिरामशास्त्रिणे** मीमांसाचार्याय भारो दत्तः । स विद्वद्वरः स्वकृतं तत्तत्स्थलीयकठिनपदविवरणमप्यत्रैव संयोज्य पूर्वसंस्क-रणस्थान् ग्रन्थासम्बद्धाननुपयुक्तांश्च सूत्रसंयोजनादीन् परित्यज्य यावदपेक्षितं संगृह्णानः उदाहृतवाक्यानां यावदुपलम्भं स्थलनिर्देशे तत्तत्स्थल एवाऽधष्टिप्पण्यां कृतेऽपि पुन-रन्तेऽप्यध्येतृजनसौकर्याय तत्पद्दिकामप्येकां विरचय्य प्रकाशयन् सुन्दरमिदं चकार संस्करणमिति प्रथमं सोऽर्हति महतीं धन्यवादपरम्पराम् ।

अतिसङ्कुचितैतच्छास्त्रप्रचारे कालेऽस्मिन् ग्रन्थस्याऽस्य सत्स्वपि बहुषु संस्करणेषु कार्यमिदमात्मने नाऽतिप्रयोजनं जानन्नपि श्रीमानयं बाबू जयकृष्णदासगुप्तमहोदयः स्वस्य प्रत्नविद्याविलासित्वं दीनच्छात्रदुःखापनोदनैकफलं मन्वानो मदीयं निवेदनं मनसिकृत्य सपद्येव समपीपदत् कार्यमिदम् , अल्पेनैव च मूल्येन दातुमिच्छतीति च सोऽपि परमं भाजनं धन्यवादस्य ।

अध्यापनादिकार्ये पूज्यास्मद्भ्रातृचरणैस्साकं ग्रन्थान्तरसंस्करणकार्ये चाऽनारतमु-द्यतेनाऽनेन पण्डितवरेण **पट्टाभिरामशास्त्रिणा** मया च क्वचित् क्वचित् उन्मीलिताक्षं शोधितेऽप्यत्र ग्रन्थे पुरुषस्वभावतयाऽक्षिविषयमनागता यदि केचन दोषास्स्युः, तदर्थमहं स च क्षन्तव्यौ विद्वद्वरैर्दोषप्रमार्जनपरैरिति सादरमभ्यर्थये बुधजनान् ।

महोत्सवे
**मार्गशीर्ष शुक्ल ७.**
संवत् १९९४ वै.

इत्थं विद्वद्वरवशंवदः
**अ० रामनाथशास्त्री.**

॥ श्रीः ॥

# जैमिनीयन्यायमालायास्तृतीयाध्यायान्ताया अधिकरणसूची ॥

## तृतीयाध्यायस्य चतुर्थः पादः



## तृतीयाध्यायस्य पञ्चमः पादः



## तृतीयाध्यायस्य षष्ठः पादः

### तृतीयाध्यास्य सप्तमः पादः





### तृतीयाध्यायस्याऽष्टमः पादः

जैमिनीयन्यायमालायाः तृतीयाध्यायान्तायाः
अधिकरणसूची समाप्ता ।

---

* श्रीः *

* ॐ परब्रह्मणे नमः *

श्रीमाधवप्रणीता

सविस्तरा

# जैमिनीयन्यायमाला ॥

( न्यायमालाविस्तरः )

वागीशाद्याः सुमनसस्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
युक्तिं मानवतीं विदन्स्थिरधृतिर्भेदे विशेषार्थभा-
गाप्तोहः क्रमकृत्प्रयुक्तिनिपुणः श्लाघ्यातिदेशोन्नतिः ।
नित्यस्फूर्त्यधिकारवान् गतसदावाधस्स्वतन्त्रेश्वरो
जागर्ति श्रुतिमत्प्रसङ्गचरितः श्रीबुक्कणक्ष्मापतिः ॥ २ ॥
यद्ब्रह्म प्रतिपाद्यते प्रगुणयत्तत्पञ्चमूर्तिप्रथां
तत्राऽयं स्थितिमूर्तिमाकलयति श्रीबुक्कणक्ष्मापतिः ।
विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका
तेनाऽस्य स्वगुणैरखण्डितपदं सार्वज्ञ्यमुद्द्योतते ॥ ३ ॥
इन्द्रस्याऽऽङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि-
र्धौम्यो धर्मसुतस्य वैन्यनृपतेस्स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥*
स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः ।
अकरोज्जैमिनिमते न्यायमालां गरीयसीम् ॥ ५ ॥
तां प्रशस्य सभामध्ये वीरश्रीबुक्कभूपतिः ।
कुरु विस्तरमस्यास्त्वमिति माधवमादिशत् ॥ ६ ॥
स भव्याद्भारतीतीर्थयतीन्द्रचतुराननात् ।
कृपामव्याहतां लब्ध्वा परार्ध्यप्रतिमोऽभवत् ॥ ७ ॥
निर्माय माधवाचार्यो विद्वदानन्ददायिनीम् ।
जैमिनीयन्यायमालां व्याचष्टे बालबुद्धये ॥ ८ ॥

---

* आदितः श्लोकचतुष्टयं लेमू व्याख्याने च लिखितं ग्रन्थकारेण ।

बृजवल्लभ द्विवेदी
केकड़ी (अजमेर)

न्यायमालाया आदौ स्वकीयग्रन्थत्वद्योतनाय स्वमुद्रारूपमनेकार्थगर्भं देवतानमस्कारप्रतिपादकं श्लोकं पठति--

( न्यायमाला )

**वागीशाद्यास्सुमनसस्सर्वार्थानामुपक्रमे ।**
**यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥ १ ॥**

इष्टदेवतां नमस्कृत्य चिकीर्षितार्थपरिपालनाय पालके स्वामिनि विद्यमानं महिमानमनुस्मरति--

**(१)युक्तिं मानवतीं विदन्स्थिरधृतिर्भेदे विशेषार्थभा-**
**गाप्तोहः क्रमकृत्प्रयुक्तिनिपुणः श्लाघ्यातिदेशोन्नतिः ।**
**नित्यस्फूर्त्यधिकारवान् गतसदाबाधः स्वतन्त्रेश्वरो**
**जागर्ति श्रुतिमत्प्रसङ्गचरितः श्रीबुक्कणक्ष्मापतिः ॥ २ ॥**

अत्र चिकीर्षिते धर्मशास्त्रे वर्तमानानां द्वादशानामध्यायानां ये प्रतिपाद्या अर्थाः, ये च नीतिशास्त्रोक्ता राजधर्माः, ते सर्वेऽप्यस्मिन्भूपतावुपलभ्यन्ते । नीतिपक्षे–युक्तिर्योगः, सन्धिः । सा च युक्तिर्मानवती । मानः सत्कारः, चतुर्षु सामभेददानदण्डेषूपायेषु प्रथम उपायः । वैरिणो बुद्धिभेदो द्वितीयः । एताभ्यां दानदण्डावप्युपलक्ष्येते । एतैश्चतुर्भिरुपायैर्विशेषेणाऽर्थं धनं भजति प्राप्नोति । एतावता शत्रुक्षयः कथितः । अवशिष्टेन स्वराज्यपरिपालनप्रकारः प्रतिपाद्यते—आप्तेष्वमात्यप्रभृतिषु पुरुषेषु अयमीदृशस्य व्यापारस्य योग्यो नाऽन्यस्येत्येवमूहापोहकुशलः । राजसभायामेते तपस्विनः पूज्या विप्रा दक्षिणभाग उपवेशनीयाः, एते च भृत्या वामभाग इति क्रमं करोतीति क्रमकृत् । तत्तद्ग्रामेष्वधिकृतान् पुरुषानुचितबुद्धिप्रदानेन प्रयोक्तुं निपुणः । समुद्रपर्यन्तत्वेनातिबहुलस्य देशस्योन्नतिः समस्तभोग्यवस्तुसम्पत्तिः । सा च परराष्ट्रनिवासिभिः श्लाघ्यते । इदं कर्तव्यम्, इदं नेत्येवं कार्याकार्यविषया स्फूर्तिः । तस्यामधिकारोऽस्य राज्ञो नित्यः, सर्वत्राऽप्रतिहतबुद्धित्वात् । गतो निवारितः सतां तपस्विनामाबाधो विघ्नो येनाऽसौ गतसदाबाधः । देशान्तराधिपतीनां राज्ञामेतदधीनत्वेनाऽपरप्रेष्यत्वादयं स्वतन्त्रः । जगदीश्वरस्य विद्यातीर्थमुनेर्भोगमूर्तित्वेनाऽयमीश्वरः । यस्य सभायां गोष्ठीरूपः प्रसङ्गो

---

१. अत्र मानवतीं, भेदे, विशेषार्थभाक् , आप्तोहः, क्रमकृत् , प्रयुक्तिनिपुणः, श्लाघ्यातिदेशोन्नतिः, अधिकारवान् , सदाबाधः, स्वतन्त्रेश्वरः, प्रसङ्गचरितः, इत्येतैः पदैः क्रमेण प्रथमद्वितीयतृतीयनवमपञ्चमचतुर्थसप्तमाष्टमषष्ठदशमैकादशद्वादशाध्यायगता विषयाः प्रमाणभेदशेषत्वोहक्रमप्रयुक्तिसामान्यविशेषातिदेशाधिकारबाधतन्त्रप्रसङ्गाख्या अभिधीयन्त इति बोध्यम् ।

वेदार्थविषयत्वेन श्रुतिमान् , यदीयं चरितमपि निरन्तरं वेदोक्तरहस्यार्थानुष्ठानरूपत्वेन श्रुतिमद्भवति, सोऽयं श्रुतिमत्प्रसङ्गचरितः । एवंविधो बुक्कभूपतिरन्तः परमेश्वरध्याने, बहिः प्रजापालने च नित्यं जागर्ति । यथा नीतिशास्त्रोक्तेषु सामभेदादिष्वयं कुशलः, तथा सर्वज्ञावतारत्वाद्धर्मशास्त्रोक्तेषु प्रमाणादिप्रसङ्गान्तेष्वध्यायार्थेषु कुशलः । ते चाऽध्यायार्था उपरिष्टात्प्रदर्श्यन्ते ॥

राज्ञस्सर्वज्ञत्वं सोपपत्तिकं प्रकटयति 'यद्ब्रह्म प्रतिपाद्यत' इत्यादिना—

**यद्ब्रह्म प्रतिपाद्यते प्रगुणयत्तत्पञ्चमूर्तिप्रथां**
**तत्राऽयं स्थितिमूर्तिमाकलयति श्रीबुक्कणक्ष्मापतिः ।**
**विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका**
**तेनाऽस्य स्वगुणैरखण्डितपदं सार्वज्ञ्यमुद्द्योतते ॥ ३ ॥**

सर्वासूपनिषत्सु प्रतीयमानं यत्परं ब्रह्म तदेव शैवागमेषु सृष्टिस्थितिसंहारनिरोधनानुग्रहलक्षणपञ्चकृत्यसिध्यर्थमीशानतत्पुरुषाघोरवामदेवसद्योजातलक्षणानां पञ्चानां मूर्तीनां प्रथां प्रसिद्धिं विस्तारं वा प्रगुणयति प्रकटीकरोतीति प्रतिपाद्यते । तत्र तासु मूर्तिष्वयं भूपालः स्थितिमूर्तिं धत्ते । तस्या मूर्तेरात्मनि लसन्विद्यातीर्थमुनिः कृत्स्नस्य जगतोऽनुग्राहिका मूर्तिरित्युच्यते । यस्मादयं भूपो वेदान्तोक्तं परं ब्रह्म, यस्माच्चाऽऽगमोक्ता महेश्वरस्य स्थितिमूर्तिः, यस्माच्च श्रीविद्यातीर्थमुनिस्तदात्मनि संनिधाय प्रकाशते, तस्मात्सर्वज्ञत्वमस्य राज्ञ उत्कर्षेणाऽऽविद्वदङ्गनागोपालमविवादेन प्रतिभासते ॥

उक्तगुणोपेतस्य राज्ञो मन्त्रिणं नानापुराणप्रसिद्धदृष्टान्तैर्हितकारितया प्रशंसति—

**इन्द्रस्याऽऽङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि-**
**र्धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ।**
**प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो**
**यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥**

चिकीर्षितग्रन्थे श्रद्धातिशयमुत्पादयितुं कर्तृगौरवं प्रकटयति—

**श्रुतिस्मृतिसदाचारपालको माधवो बुधः ।**
**स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः ॥ ५ ॥**

सर्ववर्णाश्रमानुग्रहाय पुराणसारपराशरस्मृतिव्याख्यानादिना स्मार्तो धर्मः पूर्वं व्याख्यातः । इदानीं द्विजानां विशेषानुग्रहाय श्रौतधर्मव्याख्यानाय प्रवृत्तः ॥

ग्रन्थमारिप्सुर्गुरुमूर्त्युपाधिकं सकलवेदशास्त्रप्रवर्तकत्वेनाऽत्रोचितेष्टदेवतारूपं परमेश्व-

रमादौ नमस्कृत्य श्रोतृप्रवृत्तिसिध्यर्थं विषयप्रयोजने दर्शयंस्तं ग्रन्थं प्रतिजानीते—

**प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।**
**जैमिनीयन्यायमाला श्लोकैस्सङ्गृह्यते स्फुटम् ॥ ६ ॥**

जैमिनिप्रोक्तानि धर्मनिर्णायकान्यधिकरणानि न्यायाः । तेऽस्य ग्रन्थस्य विषयः । पठितुं सुशकैः कतिपयैरेव श्लोकैस्तेषां स्फुटीभावः प्रयोजनम् । न्यायमाला सङ्गृह्यत इति ग्रन्थनामनिर्देशपूर्विका प्रतिज्ञा ॥

करिष्यमाणस्य ग्रन्थस्य प्रकारं दर्शयति—

**एको विषयसन्देहपूर्वपक्षावभासकः ।**
**श्लोकोऽपरस्तु सिद्धान्तवादी प्रायेण कथ्यते ॥ ७ ॥**
**चत्वारोऽवयवा एकश्लोकेनोक्ताः क्वचित्क्वचित् ।**
**यत्र क्वाऽपि बहुश्लोकैरुच्यन्तेऽतो न विस्तरः ॥ ८ ॥**

एकैकस्याऽधिकरणस्य विषयः, सन्देहः, सङ्गतिः, पूर्वपक्षः, सिद्धान्तश्चेति पञ्चावयवाः । तत्र सङ्गतिरनन्तरमेव व्युत्पादयिष्यमाणेन प्रकारेण प्रत्यधिकरणं स्वयमेवोहितुं शक्यते । अवशिष्टानां चतुर्णामवयवानां सङ्ग्राहकाः क्वचिद्बहवः श्लोकाः, क्वचिदेक इत्यावापोद्वापाभ्यामन्ततः प्रत्यधिकरणं श्लोकद्वित्वे सङ्ख्या पर्यवस्यति । अतो बहुत्वाद्बिभ्यता ग्रन्थगौरवशङ्का न कर्तव्या ॥

तमेव ग्रन्थगौरवाभावं स्पष्टीकुर्वन् रूपकव्याजेन सुबोधत्वं दर्शयति—

**सर्वथाऽपि सहस्रे द्वे नाऽतिक्रामति सङ्ग्रहः ।**
**मीमांसासागरस्तेन क्रीडापुष्करिणी भवेत् ॥ ९ ॥**

श्लोकेन श्लोकाभ्यां श्लोकैर्वा यथासम्भवं न्यायस्सङ्गृह्यते । सर्वथाऽपि सहस्रन्यायसङ्ग्रहरूपो ग्रन्थः श्लोकसहस्रद्वयपूर्तेरर्वागेव समाप्स्यते, न तु सहस्रद्वयमतिक्रामति । भाष्यटीकादीनां बहुत्वाद्दुरवगाहत्वाच्च मीमांसा सागरसमा पूर्वमासीत् । क्रियमाणेनाऽनेन ग्रन्थेन दोषद्वयरहितेन राजपुत्राणां बालानां क्रीडार्थं निर्मितया नाभिदघ्न्या पुष्करिण्या समा भविष्यति । यद्यपि शास्त्रदीपिकादौ क्वचित्क्वचित्सङ्ग्रहश्लोकोऽस्ति, तथाऽपि न सर्वत्र विद्यते । यत्राऽस्ति, तत्राऽपि विषयसंशययोरसङ्ग्रहान्न श्लोकपाठमात्रेणाऽधिकरणमुपन्यसितुं शक्यते । अतो न काऽपि गतार्थत्वं शङ्कनीयम् ॥

सङ्गतिं व्युत्पादयति—

**शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा ।**
**शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम् ॥ १० ॥**

शास्त्रसङ्गतिः, अध्यायसङ्गतिः, पादसङ्गतिश्चेति त्रिधा सङ्गतिः । सा च शास्त्रादीनां त्रयाणामसाधारणे विषये ज्ञाते सति स्वयमेवोहितुं शक्या ॥

शास्त्रस्याऽध्यायानां चाऽसाधारणं विषयं दर्शयति--

**धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः ।**
**प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ॥ ११ ॥**
**अधिकारोऽतिदेशश्च सामान्येन विशेषतः ।**
**ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥ १२ ॥**

लक्षणान्यध्यायाः । द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी । तादृशस्य द्वादशलक्षणोपेतस्य शास्त्रस्य धर्मो विषयः । प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषयाः । **प्रथमेऽध्याये**-(१)विध्यर्थवादादिरूपं प्रमाणं निरूपितम् । **द्वितीये**-यागदानादिकर्मभेदः । **तृतीये**-प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम् । **चतुर्थे**-गोदोहनस्य पुरुषार्थत्वप्रयुक्त्याऽनुष्ठानम् , न तु क्रत्वर्थत्वप्रयुक्त्येत्येवमादयः । **पञ्चमे**-क्रमनियतिविधेयत्वादयः । **षष्ठे**-कर्तुरधिकारो, नान्धादेरित्यादयः । **सप्तमे**-"समानमितरच्छ्येनेने"त्यादिप्रत्यक्षवचनेन, अग्निहोत्रादिनाम्नाऽनुमितवचनेन च सामान्यतोऽतिदेशः । **अष्टमे**-"सौर्यं चरुं निर्वपेत्" इत्यत्र निर्वापः, तद्धितेन देवतानिर्देशः, एकदेवतात्वं, औषधद्रव्यकत्वमिति लिङ्गेनाऽऽग्नेयपुरोडाशेतिकर्तव्यतैव, नाऽन्यस्येत्येवमादिर्विशेषतोऽतिदेशः । **नवमे**-प्रकृतौ "अग्नये जुष्टं निर्वपामी"ति पठिते मन्त्रे विकृतौ सौर्यचरावग्निपदपरित्यागेन सूर्यपदप्रक्षेपेण 'सूर्याय जुष्टं निर्वपामी'त्येवमाद्यूहः । **दशमे**-कृष्णलेषु(२) चोदकप्राप्तस्याऽवघातस्य वितुषीकरणासम्भवेन लोप इत्येवमादिर्बाधः । **एकादशे**-बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इति तन्त्रम् । **द्वादशे**-प्रधानस्य पशोरुपकारायाऽनुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्युपकार इत्यादिप्रसङ्गः ॥

पादानामसाधारणं विषयं दर्शयति--

**विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम् ।**
**प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम् ॥ १३ ॥**

**प्रथमे** पादे-विधिरूपं मानमीरितम् । **द्वितीये**-अर्थवादरूपम् । अर्थवादो मन्त्रस्याऽप्युपलक्षकः । **तृतीये**-स्मृतिरूपम् । स्मृतिराचारमप्युपलक्षयति । **चतुर्थे**-उद्भिच्चित्रादिनामरूपम् ॥

---

१. अत्रादिपदेन मन्त्रस्मृत्याचारनामधेयसामर्थ्यवाक्यशेषा ग्राह्याः ।
२. अतिदेशप्राप्तस्येत्यर्थः ।

**उपोद्घातः कर्मभेदमानं तस्याऽपवादगीः ।**
**प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः ॥ १४ ॥**

**द्वितीयाध्यायस्य प्रथमे** पादे—आख्यातमेवाऽपूर्वबोधकम्, अपूर्वसदसद्भावश्चेत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः । **द्वितीये**—(१)धातुभेदपुनरुक्त्यादिभिः कर्मभेदः । **तृतीये**—रथन्तरादीनां कर्मभेदप्रामाण्यापवादः । **चतुर्थे**—नित्यकाम्ययोः प्रयोगयोर्भेदः ॥

**श्रुतिर्लिङ्गं च वाक्यादिविरोधप्रतिपत्तयः ।**
**अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः ॥ १५ ॥**

**तृतीयाध्यायस्य प्रथमे** पादे—शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता । **द्वितीये**—लिङ्गम् । **तृतीये**—वाक्य(२)प्रकरणादि । **चतुर्थे**—निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः, श्रुत्यादेः परस्परविरोधसदसद्भावश्च । **पञ्चमे**—(३)प्रतिपत्तिकर्माणि । **षष्ठे**—अनारभ्याधीतानि । **सप्तमे**—बहुप्रधानोपकारकप्रयाजादीनि । **अष्टमे**—याजमानानि ॥

**प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता ।**
**फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः ॥ १६ ॥**

**चतुर्थाध्यायस्य प्रथमे** पादे—प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिकेत्यादि प्रधानप्रयोक्तृत्वं विचारितम् । **द्वितीये तु**—अप्रधानं वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम् । **तृतीये**—जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता । **चतुर्थे**—राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता ॥

**श्रुत्यादिभिः क्रमस्तस्य विशेषो वृध्द्यवर्धने ।**
**श्रुत्यादेर्बलिता चेति पञ्चमाध्यायपादगाः ॥ १७ ॥**

**पञ्चमाध्यायस्य प्रथमे** पादे—(४)श्रुत्यर्थपाठादिभिः क्रमो निरूपितः । **द्वितीये**—वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादिक्रमविशेषः । **तृतीये**—(५)पञ्च-

---

१. अत्रादिपदेन संख्यासंज्ञागुणप्रकरणान्तराणि ग्राह्याणि ।

२. आदिपदेन स्थानसमाख्ययोर्ग्रहणम् ।

३. उपयुक्तस्याऽऽकीर्णकरतानिवर्तकं कर्म प्रतिपत्तिकर्मेत्यभिधीयते ।

४. आदिपदेन स्थानमुख्यप्रवृत्तयो बोध्याः ।

५. 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती'ति वाक्यपञ्चकविहिता यागाः पञ्च प्रयाजपदेनाऽभिधीयन्ते ।

प्रयाजादीनामावर्तनेनैकादश्यमित्यादिवृद्धिः, अदाभ्यग्रहचित्रिण्योरनावृत्तिरित्यादिवृद्ध्यभावश्च। **चतुर्थे**--क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः॥

**अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने।**
**दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः॥ १८॥**

**षष्ठाध्यायस्य प्रथमे** पादे--कर्माधिकारः कर्तुरस्ति, अन्धादेर्नास्ति, स्त्रिया अस्ति, स च पत्या सहेत्येवमादिनाऽधिकारी निरूपितः। **द्वितीये**--सत्राधिकारिणां प्रत्येकं कृत्स्नं फलम्, दर्शपूर्णमासयोः कर्त्रैक्यनियमः, काम्यं कर्म समापनीयमित्येवमादयोऽधिकारिधर्मा उक्ताः। **तृतीये**--द्रव्यस्य प्रतिनिधिरस्ति, देवादीनामग्न्यादीनामधिकारिणश्च स नास्तीत्यादिनिरूपणम्। **चतुर्थे**--पदार्थलोपनं विचारितम्। अवत्तनाशे सत्याज्येन यजेत, इडाज्यस्य नाशे सति शेषान्न ग्राह्यमित्यादिकम्। **पञ्चमे**--कालापराधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तम्, ज्योतिष्टोमस्यैकादयो दीक्षाः, द्वादशाहस्य द्वादश दीक्षाः, इत्यादि निरूपितम्। **षष्ठे**--सत्राधिकारिणस्तुल्यकल्पा एव, सत्रं विप्रस्यैवेत्येवमादिकं चिन्तितम्। **सप्तमे**--पित्रादिकं न देयम्, महाभूमिर्न देयेत्येवमादिर्देयविचारः। **अष्टमे**--लौकिकाग्नावुपनयनहोमः, स्थपतीष्टिस्तथैवेत्येवमाद्यग्निविचारः कृतः॥

**प्रत्यक्षोक्त्यतिदेशोऽस्य शेषस्सामनिरूपणम्।**
**नामालिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः॥ १९॥**

**सप्तमाध्यायस्य प्रथमे** पादे--'समानमितरच्छयेनेने'त्यादि प्रत्यक्षवचनातिदेशः। **द्वितीये**--रथन्तरशब्देन गानमात्राभिधायिना गानस्यैवातिदेश्यत्वमित्येतादृशः पूर्वोक्तातिदेशस्य शेषो विचारितः। **तृतीये**--अग्निहोत्रनाम्नाऽतिदेशः। **चतुर्थे**--निर्वापौषधद्रव्यादिलिङ्गातिदेशः॥

**स्पष्टलिङ्गादथाऽस्पष्टात्प्रबलादपवादतः।**
**अतिदेशविशेषास्स्युरष्टमाध्यायपादगाः॥ २०॥**

**अष्टमाध्यायस्य प्रथमे** पादे स्पष्टेन लिङ्गेनाऽतिदेशविशेषः। तद्यथा--सौर्यचरावतिदेशकानि निर्वापः, तद्धितेन देवतानिर्देशः, एकदेवतात्वम्, औषधद्रव्यकत्वमित्यादीनि स्पष्टान्याग्नेयलिङ्गानि। **द्वितीये तु**--अस्पष्टैर्लिङ्गैरतिदेशः। तद्यथा--वाजिने हविस्सामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते। तत्र लिङ्गमस्पष्टम्, शीघ्रं तद्बुध्यनुत्पादनात्। **तृतीये**--प्रबलेन लिङ्गेनाऽतिदेशः। तद्यथा-आभिचारिकेष्टावाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविष्षु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदैवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याऽग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः। प्र-

वलञ्च द्विदैवत्यत्वम् । शब्दोच्चारणमात्रेण सहसा प्रतिभासात् । क्रमस्तु विलम्बितप्रतीत्या दुर्बलः । **चतुर्थे**--(१)दर्विहोमेष्वतिदेशोऽपोद्यते ॥

**ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः ।**
**नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः ॥ २१ ॥**

**नवमाध्यायस्य प्रथमे** पादे--उपोद्घातपूर्वकमूहविचारप्रारम्भः । तत्र प्रयाजदयो(२) धर्मा अपूर्वप्रयुक्ताः । अवघातमन्त्रादिष्वविवक्षितं व्रीह्यग्न्यादिस्वरूपं, साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः । सवित्रश्विपूषशब्दानां विकृतिषु नाऽस्त्यूहः । अग्निशब्दस्याऽस्त्यूह इत्यादिक ऊहविचारारम्भः । **द्वितीये**--सपरिकरस्सामोहः । **तृतीये**--मन्त्रोहः । **चतुर्थे**--मन्त्रोहप्रसङ्गापतितो विचारः ॥

**द्वारलोपोऽस्य विस्तारः कार्यैकत्वं समुच्चयः ।**
**ग्रहसामप्रकीर्णानि नञर्थश्चाऽष्टपादगाः ॥ २२ ॥**

**दशमाध्यायस्य प्रथमे** पादे--बाधहेतुर्द्वारलोपो निरूपितः । तद्यथा--'स्वयं कृता वेदिर्भवती'त्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः । कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनाऽवघातस्य बाधः । **द्वितीये**--संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः । **तृतीये**--बाधकारणं कार्यैकत्वम् । तद्यथा--प्रकृतौ गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्यम् । तथा विकृतिरूपे भूनाम्न्येकाहे धेनुरूपाया दक्षिणायास्तदेव कार्यम् । ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते । **चतुर्थे**--नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैर्नारिष्ठहोमैस्सह समुच्चीयन्त इत्यादिस्समुच्चयः । **पञ्चमे**--षोडशिग्रहः प्रकृतिगामी । स चाऽऽग्रयणपात्रादेव ग्रहीतव्य इत्यादिर्बाधप्रसङ्गागतो ग्रहादिविचारः । **षष्ठे**--'एकं साम तृचे गेयम्' इत्यादिर्बाधप्रसङ्गागतस्सामविचारः । **सप्तमे**--पश्वङ्गे प्रत्यङ्गं हविर्भेदः, न कृत्स्नः पशुर्हविर्भेदः । गृहमेधीयमपूर्वं कर्मेत्यादिर्बाधप्रसङ्गागतः प्रकीर्णविचारः । **अष्टमे**--'नानुयाजेष्वि'ति पर्युदासः, 'न सोम' इत्यर्थवादः, 'नातिरात्र' इति प्रतिषेध इत्यादिर्बाधोपयुक्तो नञर्थविचारः ॥

**उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः ।**
**आवापविस्तृतिश्चैकादशाध्यायस्य पादगाः ॥ २३ ॥**

**एकादशाध्यायस्य प्रथमे** पादे--तन्त्रस्योपोद्घातो वर्णितः । **द्वितीये**--त-

---

१. याज्यापुरोनुवाक्याभ्यां विना केवलस्वाहाकारान्तमन्त्रप्रदेयतया विहिता होमा दर्विहोमाः कथ्यन्ते ।

२. अङ्गानीत्यर्थः ।

न्त्रावापौ संक्षेपेणोक्तौ । **तृतीये**––तन्त्रमुदाहरणबाहुल्येन प्रपञ्चितम् । **चतुर्थं**––तथैवाऽऽवापः प्रपञ्चितः ।

**प्रसङ्गस्तन्त्रिनिर्णीतिस्समुच्चयविकल्पने ।**
**द्वादशाध्यायपादार्था इति पादार्थसङ्ग्रहः ॥ २४ ॥**

**द्वादशाध्यायस्य प्रथमे** पादे–पशुधर्माणां पशुपुरोडाशे प्रसङ्गः, सौमिकवेदेरुत्तरकालीनकर्मसु प्रसङ्ग इत्यादिविचारः । **द्वितीये**–सवनीयपशोस्तन्त्रित्वम्, न तु सवनीयपुरोडाशानाम् । विकृतिस्तन्त्रिणी, न प्रकृतिः, अन्वारम्भणीया विकृतिष्वपि स्यात्, न तु प्रकृतावेवेत्यादिविचारः । **तृतीये**–त्वग्वाससोस्समुच्चयः । आघारगतानामृजुत्वसन्ततत्वादीनां समुच्चय इत्यादिकं प्राधान्येन, यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयापवादत्वेनेत्युभयं चिन्तितम् । **चतुर्थे च**–ऐन्द्राबार्हस्पत्ययाज्यानुवाक्यायुगलयोर्विकल्प इत्यादिकं प्राधान्येन, याज्यानुवाक्ययोस्समुच्चय इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम् । तदेवं द्वादशाध्यायगतेषु षष्टिसंख्याकेषु पादेषु प्रतिपाद्या अर्थास्सङ्गृहीताः ॥

ननु यथोक्तेभ्यः पादार्थेभ्योऽन्येऽप्यर्था बहवस्तत्तत्पादेषु विचार्यन्ते, तेषां कथं तत्तत्पादान्तर्भाव इत्याशङ्क्याऽऽह––

**उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः ।**
**तत्तत्पादगतत्वेन विचारान्तरमुन्नयेत् ॥ २५ ॥**

यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः, कश्चिदपवादः, कश्चित्प्रसङ्गपतितः, कश्चिदनुप्रसङ्गपतित इत्येवं पादान्तर्भाव उन्नेयः ॥

ननु सन्त्वेवमध्यायानां पादानां च व्यवस्थिता अर्थाः । तदीयस्तु क्रमः कथमवगन्तव्य इत्यत आह––

**शास्त्रे पूर्वोत्तरीभावोऽध्यायानामभिधास्यते ।**
**पादानां तु तमत्रैव लेशाद्व्युत्पादयामहे ॥ २६ ॥**

एकस्मिन्नध्याये समाप्ते सत्यध्यायान्तरारम्भे तयोरध्याययोः पूर्वापरीभावो वक्ष्यते ॥

प्रथमाध्यायगतानां पादानां पूर्वोत्तरीभाव उदाहृते सति तद्व्युत्पत्त्या पादान्तरेष्वपि तस्योत्प्रेक्षितुं शक्यतया तमुदाहरति––

**विधिस्साक्षान्मितिर्धर्मे तस्य शेषोऽर्थवादगीः ।**
**वेदमूला स्मृतिर्नाम वाक्यांशोऽमीष्वतः क्रमः ॥ २७ ॥**

जिज्ञास्यत्वेन प्रतिज्ञाते धर्मे विधिवाक्यं साक्षात्प्रमाणमिति तद्विचारः प्रथमे पादे युक्ता। अर्थवादवाक्यस्य विधिद्वारा प्रमाण्याद्विध्यनन्तरभावित्वम्। स्मृतिवाक्यस्य सार्थवादविधिरूपवेदमूलतया प्रामाण्यादर्थवादोत्तरभावित्वम्। नामधेयस्य वाक्यैकदेशत्वेन पूर्वोक्तत्रिविधवाक्यविचारोत्तरकालीनत्वम्। अनेन न्यायेनोत्तराध्यायगतपादानां परस्परं क्रम उन्नेयः॥

इत्थं शास्त्रस्याऽध्यायानां पादानां च क्रमविशेषविशिष्टानामसाधारणप्रतिपाद्यमर्थं निरूप्य तन्निर्णयफलं दर्शयति--

**ऊहित्वा सङ्गतीस्तिस्रस्तथाऽवान्तरसङ्गतिम्।**
**ऊहेताऽऽक्षेपदृष्टान्तप्रत्युदाहरणादिकाम्॥ २८॥**

शास्त्रादिप्रतिपाद्यार्थसम्बन्धितयाऽधिकरणे योजिते सति तस्याऽधिकरणस्य शास्त्रसङ्गतिः, अध्यायसङ्गतिः, पादसङ्गतिश्चेति तिस्र ऊहिता भवन्ति। तद्यथा—प्रथमाध्यायस्य प्रथमपादस्य द्वितीयाधिकरणे धर्मस्य लक्षणप्रमाणराहित्यं पूर्वपक्षीकृत्य तत्सद्भावः प्रतिपादितः। तस्याऽधिकरणस्य धर्मसम्बन्धितया धर्मविचारशास्त्रे सङ्गतिः। प्रमाणविचाररूपत्वात्प्रथमाध्याये सङ्गतिः। विधिवाक्यस्य प्रमाणत्वेनोपन्यासात्प्रथमपादे सङ्गतिः। यथैतत्सङ्गतित्रयमूहितम्, तथा पूर्वोत्तराधिकरणयोः परस्परमवान्तरसङ्गतिरूहनीया। सा चाऽनेकरूपा—आक्षेपसङ्गतिः, दृष्टान्तसङ्गतिः, प्रत्युदाहरणसङ्गतिः, प्रासङ्गिकसङ्गतिः, उपोद्घातसङ्गतिः, अपवादसङ्गतिश्चेत्येवमादिरूपा॥

तासामाक्षेपादिसङ्गतीनामूहं व्युत्पादयति--

**पूर्वन्यायस्य सिद्धान्तयुक्तिं वीक्ष्य परे नये।**
**पूर्वपक्षोक्तयुक्तिं च तत्राऽऽक्षेपादि योजयेत्॥ २९॥**

तदेतत्सर्वं योजयित्वा प्रदर्श्यते--प्रथमेऽध्याये प्रथमपादस्य प्रथमाधिकरणगतो धर्मविचारशास्त्रं वैधमिति सिद्धान्तः। अर्थज्ञानहेतावध्ययने नियमविधेस्संभवादिति तद्युक्तिः। द्वितीयाधिकरणे--धर्मे लक्षणं प्रमाणञ्च नास्तीऽति पूर्वपक्षः, लौकिकाकारहीनत्वात्, प्रत्यक्षाद्यप्रवृत्तेश्चेति तद्युक्तिः। तया युक्त्या धर्मस्य लक्षणप्रमाणरहितत्वे सति नरविषाणसमो धर्म इति तद्विचारशास्त्रस्य विधेयत्वमनुपपन्नमित्याक्षेपसंगतिः। यथा प्रथमाधिकरणे नियमविधिसंभवेन हेतुना विचारशास्त्रस्य विधेयत्वमुक्तम्, तथा द्वितीयाधिकणे लौकिकाकारहीनत्वप्रत्यक्षाद्यप्रवृत्तिरूपेण हेतुना धर्मे लक्षणप्रमाणे न स्त इति दृष्टान्तसङ्गतिः। यथा प्रथमाधिकरणसिद्धान्ते पूर्वोक्तयुक्तिरवलोक्यते, तथा द्वितीयाधिकरणे काञ्चिदपि युक्तिं न पश्याम इति प्रत्युदाहरणसङ्गतिः। एते दृष्टान्तप्रत्युदाहरणसङ्गती मन्दबुद्धिभिरपि सर्वत्रोत्प्रेक्षितुं शक्येते। पञ्चमाधिकरणे विधिवाक्यस्य निरपेक्षत्वात्प्रामाण्यं वर्णितम्। तस्य च वाक्यस्य शब्दार्थयोर्मध्ये शब्दकोटिनि-

विष्टत्वाद्वाक्यप्रसङ्गेन शब्दनित्यत्वं षष्ठाधिकरणे वर्ण्यत इति प्रासङ्गिकसङ्गतिः । सप्तमाध्यायस्य चतुर्थे पादे द्वितीयाधिकरणेन सौर्यादिविकृतिषु वैदिकमङ्गजातमुपदेष्टुं तदुपयोगित्वेन प्रथमाधिकरणे धर्मसापेक्षत्वं साधितम् । तत्र प्रथमाधिकरणमुपोद्घातः । सेयमुत्तराधिकरणेन सह पूर्वाधिकरणस्योपोद्घातसङ्गतिः । प्रथमाध्यायस्य तृतीयपादस्य प्रथमाधिकरणे—अष्टकादिस्मृतेः प्रामाण्यमुक्तम् । द्वितीयाधिकरणे—सर्ववेष्टनस्मृतेः पूर्ववत्प्राप्तप्रामाण्यमपोद्यते । सेयमपवादसङ्गतिः । अनया दिशा सर्वत्र सङ्गतिरूहनीया ॥



## प्रथमं जिज्ञासाधिकरणम् ॥

## अथाऽतो धर्मजिज्ञासा ॥ १ ॥

इत्थं सङ्गतीर्व्युत्पाद्याऽथ प्रत्यधिकरणं विषयसंशयपूर्वपक्षसिद्धान्तांश्चतुरोऽवयवान् संजिघृक्षुः प्रथमाध्यायस्य प्रथमे पादे प्रथमाधिकरणं भट्टमतेनाऽऽरचयति—

**स्वाध्यायोऽध्येय इत्यस्य विधानस्य प्रयुक्तितः ।**
**विचारशास्त्रं नाऽऽरभ्यमारभ्यं वेति संशयः ॥ ३० ॥**
**अर्थधीहेतुताऽधीतेर्लोकसिद्धावघातवत् ।**
**नियामकं न चैवाऽतो वैधारम्भो न संभवी ॥ ३१ ॥**
**दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकम् ॥**
**अर्थनिर्णायकं शास्त्रमत आरभ्यतां विधेः ॥ ३२ ॥**

"चोदनालक्षणोऽर्थो धर्मः" इत्यारभ्य "अन्वाहार्ये च दर्शनात्" इत्येतदन्तं जैमिनिप्रोक्तं सूत्रजातं धर्मविचारशास्त्रम् । तदेतस्य प्रथमाधिकरणस्य विषयः । (१)'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिरक्षरग्रहणमात्रपर्यवसायीति केचिन्मन्यन्ते । अपरे त्वेवमाहुः—

१. अस्याऽर्थः—स्वस्य अध्यायः स्वाध्यायः । अत्र स्वशब्दः आत्मकुलपरम्परावाचकः । अध्यायशब्दश्शाखावच्छिन्नवेदपरः । अध्येतव्य इत्यत्र अधिपूर्वकेङ्धातोरध्ययनमर्थः । अध्ययनं नाम गुरुमुखोच्चारणपूर्वकशिष्यानूच्चारणम् । तव्यप्रत्ययस्य लक्षणया आर्थीभावना अर्थः । तस्याश्चाऽऽर्थीभावनायां स्वाध्यायस्य कर्मत्वेन अध्ययनस्य करणत्वेन चाऽन्वयः । तथाच अध्ययनेन गुरुमुखोच्चारणानूच्चारणेन स्वाध्यायं स्वकुलपरम्परागतैकशाखावच्छिन्नं वेदं भावयेत् प्राप्नुयादिति श्रुतशाब्दबोधः ।

अर्थज्ञानरूपदृष्टप्रयोजनायेदमध्ययनं विधीयते । अर्थज्ञानं विचारमन्तरेण न संभवति । ततो विधिर्विचारशास्त्रस्य प्रयोजक इति ।)

तत्रैवं संशयः—इदं विचारशास्त्रं विधिप्रयुक्त्या नाऽऽरम्भणीयम् ? उताऽऽरम्भणीयमिति इति ।

तत्र अर्थज्ञानायाऽध्ययनस्य विधिरिति वदन् वादी प्रष्टव्यः—'किम्(१)अत्यन्तमप्राप्तमध्ययनं विधीयते ? किं वा पक्षेऽप्राप्तमवघातवन्नियम्यते ? इति । (२)नाऽऽद्यः—'विमतं वेदाध्ययनमर्थज्ञानहेतुः, अध्ययनत्वात्, भारताध्ययनवत्, इत्यनुमानेनैव विधिनिरपेक्षेण प्राप्तत्वात् । तर्ह्यस्तु द्वितीयः पक्षः । अवघातवन्नियमविधित्वसंभवात् । यथा नखैरवघातेन वा तण्डुलनिष्पत्तिसंभवात्पक्षेऽप्राप्तोऽवघातो विधिनाऽवश्यं कर्तव्य इति नियम्यते, तथा लिखितपाठेन गुरुपूर्वकाध्ययनेन वाऽर्थज्ञानसंभवात्पक्षेऽप्राप्तमध्ययनं विधिना नियम्यत इति चेत्—न; वैषम्यात् । अवघातनिष्पन्नैरेव तण्डुलैरवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः, नान्यथा । अतो(३)दर्शपूर्णमासापूर्वमवघातस्य नियमहेतुः । अत्र तु लिखितपाठजन्येनैवार्थज्ञानेन क्रत्वनुष्ठानसिद्धेरध्ययनस्य नियमहेतुर्नास्ति । अतो द्विविधविध्यसंभवादर्थज्ञानहेतुविचारशास्त्रारम्भस्य वैधत्वं नाऽस्ति । तर्हि श्रूयमाणस्य विधेः का गतिरिति चेत्, स्वर्गायाऽक्षरग्रहणमात्रं विधेयमिति वदामः । अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन कल्पनीयः(४) "स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्" इति सूत्रेण विश्वजित्यश्रूयमाणमप्यधिकारिणं संपादयितुं तद्विशेषणं स्वर्गफलं युक्त्या स्थापितम् । तद्वदध्ययनेऽप्यस्तु । एतदेवाऽभिप्रेत्योक्तम्—

(५)"विनाऽऽपि विधिना ज्ञानलाभान्नहि तदर्थता ।
कल्प्यस्तुविधिसामर्थ्यात्स्वर्गो विश्वजिदादिवत्" ॥

---

१. 'अग्निहोत्रं जुहोती' त्यत्रेव किमपूर्वविधित्वं प्रकृते स्वीक्रियते अथवा 'व्रीहीनवहन्तो' त्यत्रेव नियमविधित्वं स्वक्रियत इति प्रश्नस्य तात्पर्यम् ।

२. अपूर्वविधिस्थलेऽत्यन्ताप्राप्तार्थप्रापकत्वस्याऽऽवश्यकत्वात्, प्रकृते विधीयमानस्य स्वाध्यायाध्ययनस्याऽर्थज्ञानहेतुत्वं लोकत एवाऽवगतमिति अत्यन्ताप्राप्तार्थप्रापकत्वस्याऽभावान्नाऽपूर्वविधित्वमिति भावः ।

३. 'व्रीहीनवहन्ती' त्यस्य दर्शपूर्णमासप्रकरणे पाठात्तदन्यथानुपपत्या नियमस्स्वीकृतः—अवहननिष्पन्नैरेव तण्डुलैर्दर्शपूर्णमासापूर्वं सम्पादयेदिति । प्रकृते त्वध्ययनविधेरनारभ्याधीतत्वेन नियमप्रयोजकप्रकरणादेरभावात् न नियमविधित्वसम्भव इति भावः।

४. (जै.सू.४.३.१५) यस्मिन् विधिवाक्ये फलविशेषो न श्रूयते तद्विषयमिदं सूत्रम् । सः कल्पनीयः फलविशेषः, स्वर्गः स्यात् स्वर्गो भवितुमर्हति । कुतः? सर्वान् प्रत्यविशिष्टत्वात् सर्वैरपि पुरुषैरविशेषेणाऽभिलषितत्वात् । पुत्रपश्वादयो हि पुरुषाणां कदाचिदभिलाषविषया न भवेयुरपि, स्वर्गस्तु न तथा, पुनः पुनरनुभूयमानोऽपि निरतिशयत्वेन तत्राऽरुच्यनुदयादिति सूत्रार्थः ।

५. शा. दी. पृ. ३.

एवं च सति(१) 'वेदमधीत्य स्नायात्' इति शास्त्रमनुगृह्यते । अस्मिंश्च शास्त्रे वेदाध्ययनसमावर्तनयोर्नैरन्तर्यं प्रतीयते । त्वत्पक्षे तु—अधीतेऽपि वेदे धर्मविचाराय गुरुकुल एवाऽधिवासः कर्तव्यः । तथा सति तन्नैरन्तर्यं बाध्येत । तस्माद्विचारशास्त्रस्य वैधत्वाभावात्पाठमात्रेण (२)स्वर्गादिसिद्धेः, समावर्तनशास्त्राच्च धर्मविचारशास्त्रं नाऽऽरम्भणीयमिति **पूर्वः पक्षः** ।

अत्रोच्यते—यदुक्तं लोकसिद्धत्वान्नाऽप्राप्तविधिरिति, तत्तथैवाऽस्तु । नियमविधित्वं तु न वारयितुं शक्यम् । यथा दर्शपूर्णमासजन्यं परमापूर्वमवघातनियमजन्यस्याऽवान्तरापूर्वस्य कल्पकम्, एवमत्राऽप्यशेषक्रतुजन्यमपूर्वजातं क्रतुज्ञानसाधनाध्ययननियमजन्यस्याऽपूर्वस्य कल्पकं भविष्यति । नियमादृष्टानङ्गीकारे च श्रूयमाणो विधिरनर्थकस्स्यात् । न च विश्वजिन्न्यायेन स्वर्गार्थत्वं युक्तम्, दृष्टफलेऽर्थज्ञाने सम्भवत्यदृष्टस्य कल्पयितुमशक्यत्वात् । अत एवोक्तम्—

(३)"लभ्यमाने फले दृष्टे नाऽदृष्टपरिकल्पना ।
विधेस्तु नियमार्थत्वान्नाऽऽनर्थक्यं भविष्यति" ॥ इति ॥

नन्वेवमपि श्रुतव्याकरणाद्यङ्गस्याऽधीतवेदस्य पुरुषस्याऽर्थज्ञानसम्भवाद्विचारशास्त्रस्य वैयर्थ्यमिति चेत्—न ; ज्ञानमात्रसम्भवेऽपि निर्णयस्य विचाराधीनत्वात् । (४)'अक्ताः शर्करा उपदधाती'त्यत्र घृतेनैव, न तैलादिनेत्ययं निर्णयो व्याकरणेन निरुक्तेन निगमेन वा न सिध्यति । विचारशास्त्रं तु 'तेजो वै घृतमि'ति वाक्यशेषादर्थं निर्णेष्यति । अतो विचारो वैधः । 'वेदमधीत्य स्नायादि'ति शास्त्रं त्वध्ययनस-

---

१. आप. गृ. ५. १२. १. बौ. गृ. ६. १.

२. अत्रादिपदेन 'यदृचोऽधीते पयसः कूल्या अस्य पितॄन्त्स्वधा अभिवहन्ति, यद्यजूंषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते·······आहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनाऽन्नाद्येन च तर्पयन्ति' ( तै. आ. २. १०. १. ) 'यं यं क्रतुमधीते तेन तेनाऽस्येष्टं भवती' त्यार्थवादिकायुरादिफलसिद्धरपि बोध्या ।

३. दृष्टे फले वाक्यार्थज्ञानरूपे, लभ्यमाने सम्भवति सति, अदृष्टस्य स्वर्गादेः परिकल्पना न युक्ता । विश्वजिदादौ तु दृष्टस्याऽसम्भवाददृष्टकल्पनं युक्तम् । अतोऽर्थज्ञानोद्देशेनैवाऽध्ययनं विधीयते । ननु तस्य लोकत एव प्राप्तत्वाद्विध्यानार्थक्यमिति चेदाह—विधेरिति । गुरुमुखोच्चारणानूच्चारणपूर्वकं सम्पादितेनैव वेदेनाऽर्थज्ञानं सम्पादयेदिति नियमार्थत्वाद्विधेर्नानर्थक्यमिति भावः ।

४. 'शर्करा अक्ता उपदध्यादि'ति तैत्तिरीयब्राह्मणपाठः (तै. ब्रा. ३.१२.५ ) शर्कराः मृत्तिकामिश्राः क्षुद्रपाषाणाः । वाक्यस्याऽस्याऽर्थः १. ४. १८ अधिकरणे विवरिष्यते ।

मावर्तनयोः पूर्वापरीभावसमानकर्तृकत्वमेवाऽऽचष्टे, न त्वानन्तर्यम्। तस्माद्विधिवशादेव विचारशास्त्रमारम्भणीयमिति सिद्धान्तः ॥

अस्मिन्नेवाऽधिकरणे गुरुमतमाह—

**अथवाऽध्यापनात्सिद्धेर्नैवाऽस्त्यध्ययने विधिः ।**
**तेन पूर्वोत्तरौ पक्षौ प्रसाध्यावन्यहेतुभिः ॥ ३३ ॥**
**विधेयाध्यापनं सिध्येद्बालस्याऽर्थधियं विना ।**
**तेन निर्विषयं शास्त्रं निष्फलं चेत्युपेक्ष्यताम् ॥ ३४ ॥**
**स्वतः प्राप्तार्थबोधस्य विवक्षानपनोदनात् ।**
**विषयादि सुसम्पादं शास्त्रमारभ्यते ततः ॥ ३५ ॥**

'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीते'त्यध्यापनं विहितम्। न चाऽत्र नियोज्याभावः, आचार्यत्वकामिनो नियोज्यत्वात् । 'उपनयीते'त्यनेनाऽऽचार्यकरणे (१)"सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति पाणिनिसूत्रेण विहितेनाऽऽत्मनेपदेन नियोज्यविशेषणमाचार्यत्वं प्रतीयते। उपनयने यो नियोज्यः स एवाऽध्यापनेऽपि। तयोरेकप्रयोजनत्वात्। एवं सत्याचार्यकर्तृकमध्यापनं माणवककर्तृकेणाऽध्ययनेन विना न सिध्यतीत्यध्यापनविधिप्रयुक्त्यैवाध्ययनानुष्ठानसिद्धेर्न पृथगध्ययने विधिरभ्युपगन्तव्यः। श्रूयमाणं विधिवाक्यं नित्यानुवादत्वेनाऽप्युपपद्यते। ततोऽध्ययनविधिमुपजीव्य पूर्वमुपन्यस्तौ पूर्वोत्तरपक्षावन्यथा वर्णनीयौ। विषयसंशययोस्तु नाऽस्ति विप्रतिपत्तिः। विचारशास्त्रं विषयः। अवैधं, वैधं वेति संशयः।

तत्र वैधत्ववादी प्रष्टव्यः—विधेयमाचार्यकर्तृकमध्यापनं किं माणवकस्याऽर्थज्ञानमपि प्रयुञ्जीत? किं वा पाठमात्रम्? नाऽऽद्यः, अन्तरेणाऽप्यर्थज्ञानमध्यापनसिद्धेः। पाठमात्रे तु विचारस्य विषयो न भवति। आपाततः प्रतीतः सन्दिग्धोऽर्थो विषयः। तथा सति यत्राऽर्थप्रतीतिरेव नाऽस्ति, तत्र सन्देहस्य का कथा? निर्णयो विचारस्य फलम्। सोऽपि विषयवद्दूरापेतः। अतो विषयप्रयोजनाभावाद्विचारशास्त्रं नाऽऽरम्भणीयमिति **पूर्वः पक्षः**।

**अत्रोच्यते**—मा नामाऽध्यापनेनाऽर्थावबोधः प्रयुज्यताम्। तथाऽपि साङ्गवेदाध्यायिनो निगमनिरुक्तव्याकरणैर्व्युत्पन्नस्य पौरुषेयग्रन्थेष्विव वेदेऽप्यर्थावबोधः स्वत एव प्राप्नोति। ननु यथा 'विषं भुङ्क्ष्वे'त्यत्र प्रतीयमानोऽप्यर्थो न विवक्षितः, तथा वेदार्थस्याऽप्यविवक्षायां विषयाद्यभावस्तदवस्थ इति चेत्—न; विवक्षाया अपनोदितुमशक्यत्वात्।

---

१. (पा.सू.१.३.३६.) फलस्य परगामित्वेऽपि सम्माननाद्यर्थेषु गम्येषु णीञ्धातोरात्मनेपदं स्यादिति सूत्रार्थः।

(१)विषभोजनवाक्यस्याऽऽप्तप्रणीतत्वेन बाधो मा भूदिति मुख्यार्थस्तत्र परित्यक्तः । वेदे तु—कुतो न विवक्षितार्थत्वम् ? विवक्षिते च वेदार्थे यत्र यत्र पुरुषस्य सन्देहः स सर्वोऽपि विचारशास्त्रस्य विषयः । तन्निर्णयश्च प्रयोजनम् । ततोऽध्यापनविधिप्रयुक्तेनाऽध्ययनेन बुध्यमानस्याऽर्थस्य विचार्यत्वाद्विचारशास्त्रस्य वैधत्वं सिद्धम् ॥

इति प्रथमं जिज्ञासाधिकरणम् ॥ १ ॥

---

अथ द्वितीयं धर्मलक्षणाधिकरणम् ॥ २ ॥

(२)द्वितीयाधिकरणं भट्टमतेनाऽऽरचयति—

**विचारविषयो धर्मो लक्षणेन विवर्जितः ।**
**मानेन वाऽथवोपेतस्ताभ्यामिति विचिन्त्यते ॥ ३६ ॥**
**लौकिकाकारहीनस्य तस्य किं नाम लक्षणम् ।**
**मानशङ्का तु दूरेऽत्र प्रत्यक्षाद्यप्रवर्तनात् ॥ ३७ ॥**
**चोदनागम्य आकारो ह्यर्थत्वे सति लक्षणम् ।**
**अत एव प्रमाणं च चोदनैवाऽत्र नो कुतः ॥ ३८ ॥**

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः । अत एवाऽऽहुः—

"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्" इति ।

सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्ध आकारो लक्षणम् । तेन च लक्षणेन लक्ष्ये वस्तुनि सम्भावनाबुद्धौ जातायां प्रमातुमुद्युक्तः प्रमाणेन तदवगच्छति । तद्यथा—'सास्नादिमती गौः' इत्युपश्रुत्य चतुष्पात्सु जीवेषु तल्लक्षणलक्षितपदार्थमन्विष्य 'इयं गौः' इति चक्षुषाऽवगच्छति । एवं च सत्यलौकिकत्वाद्धर्मस्य नाऽस्ति लक्षणम् । तत्र कुतः प्रमातुमुद्योगः ? कथञ्चित्तदुद्योगेऽपि न तत्र प्रमाणसद्भावः शङ्कितुमपि शक्यः । न तावदत्र प्रत्यक्षं क्रमते, धर्मस्य रूपादिरहितत्वात् । अत एव व्याप्ति-

---

१. द्विषदन्नभोजने प्रवृत्तं कञ्चनाऽऽप्तं तस्मान्निवर्तयितुं कश्चिदाप्तः 'द्विषदन्नं न भोक्तव्य' मित्येतत्तात्पर्यकं 'विषं भुङ्क्ष्वे' ति वाक्यमुच्चारयामास । तत्र तस्य वाक्यस्याऽऽप्तप्रणीतत्वरूपहेतुना विषभोजनकर्तव्यताया विवक्षा नाऽस्तीत्यवधार्य प्रतीयमानार्थस्य परित्यागः क्रियते । वेदस्य त्वपौरुषेयत्वेन स्वतः प्रमाणत्वात् पूर्वोक्तकारणासम्भवाच्च कुतोऽविवक्षितार्थतेति भावः ।                २. इदं कपुस्तके नाऽस्ति ।

ग्रहणाभावान्नानुमानम् । प्रत्यक्षाद्यनुमानमूलश्च शब्दस्य सङ्गतिग्रहः । ततो व्युत्पत्त्यभावान्नाऽऽगमोऽपि तत्र प्रवर्तते । तस्माद्धर्मो लक्षणप्रमाणरहित (१)इति प्राप्ते—

ब्रूमः—मा भूच्चक्षुरादिगम्यो लौकिक आकारः, तथाऽपि चोदनागम्यः स्वर्गफलसाधनत्वादिलक्षण आकारोऽस्त्येव । तेन 'अर्थत्वे सति चोदनागम्यो धर्मः' इति लक्षणं भवति । 'अर्थो धर्मः' इत्युक्ते ब्रह्मणि चैत्यवन्दनादौ घटादौ चाऽतिव्याप्तिः, तद्व्यवच्छेदाय 'चोदनागम्य' इत्युक्तम् । तावत्येवोक्ते विधिगम्येऽनर्थफलत्वेनाऽनर्थरूपे (२)श्येनाद्यभिचारकर्मण्यतिव्याप्तिः, तद्व्यवच्छेदाय 'अर्थ' इत्युक्तम् । यद्यपि श्येनस्य शत्रुवधः फलम्, न तु नरकः । तथाऽपि तस्य वधस्य नरकहेतुत्वाद्वधद्वारा श्येनोऽनर्थः। न चैवमग्नीषोमीयपशुहिंसाया अपि वधत्वेन नरकहेतुत्वं स्यादिति शङ्कनीयम् । तस्याः क्रत्वङ्गत्वेन क्रतुफलस्वर्गव्यतिरेकेण फलान्तराभावात् । (यतश्चोदनागम्यत्वे सत्यर्थत्वं धर्मलक्षणम्, अत एव गम्ये धर्मे गमकं विधिवाक्यं प्रमाणम् ।) यद्यपि प्रत्यक्षानुमानयोरविषयो धर्मः, तथाऽपि प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः सम्भवति । तस्माल्लक्षणप्रमाणाभ्यामुपेतो धर्मः ॥

अस्मिन्नेवाऽधिकरणे गुरुमतमाह—

**यद्वा जिज्ञास्यवेदार्थः किं मन्त्राद्यवबोधितः ।**
**सिद्धार्थोऽप्यथ विध्येकगम्यः कार्यार्थ एव वा ॥ ३९ ॥**
**सिद्धेऽपि पुत्रजन्मादौ व्युत्पत्तेरुपपत्तितः ।**
**मन्त्रादिगम्यसिद्धस्य वेदार्थत्वेऽपि का क्षतिः ॥ ४० ॥**
**हर्षहेतुबहुत्वेन व्युत्पत्तिः पुत्रजन्मनि ।**
**दुर्लभा, सुलभा कार्ये वेदार्थोऽतः स एव हि ॥ ४१ ॥**

---

१. इति पूर्वः पक्ष इति कपुस्तक पाठः ।

२. प्राभाकरास्तु श्येनादेस्साक्षादेवाऽनर्थहेतुत्वं कथयन्ति, न फलद्वारा । ते हि—"कोऽर्थः ? यो निःश्रेयसाय, ज्योतिष्टोमादिः । 'कोऽनर्थः ? यः प्रत्यवायाय—श्येनो, वज्रः, इषुरित्येवमादिः तत्राऽनर्थो धर्म उक्तो मा भूदित्यर्थग्रहणमि"ति भाष्ये श्येनादेर्विधेयत्वनिराकरणपूर्वकमनर्थत्वोक्तेः श्येनादिस्वरूपमेवाऽर्थपदेन व्यावर्त्यत इत्यभिप्रयन्ति । भाट्टास्तु—"कथं पुनरसावनर्थः ? हिंसा हि सा, हिंसा च प्रतिषिद्धे"त्युपरितनभाष्येण श्येनादिग्रहणस्य तत्साध्यहिंसादिलक्षणार्थत्वावगतेर्न श्येनादिस्वरूपमर्थपदव्यावर्त्यम्, किन्तु 'न हिंस्यात्सर्वा भूतानी'त्यादिनिषेधवाक्यैरनर्थत्वेन लक्ष्यमाणानां हिंसादीनामपि चोदनागोचरत्वेन धर्मत्वं स्यात् । अतस्तद्व्यावृत्त्यर्थमर्थपदमित्यभिप्रयन्तीति विवेको बोध्यः ।

"अथाऽतो धर्मजिज्ञासे"त्यत्राऽथशब्देन कृत्स्नवेदाध्ययनानन्तर्यमुच्यते। अतश्शब्देन कृत्स्नस्य वेदस्य विवक्षितार्थत्वं हेतूक्रियते। उक्तशब्दद्वयानुसारेण धर्मशब्दोऽपि कृत्स्नं वेदार्थमाचष्टे। ततः सूत्रे "वेदार्थो जिज्ञास्य" इति प्रतिज्ञा कृता।

तत्र संशयः—किं मन्त्रार्थवादप्रतीतः सिद्धार्थोऽपि वेदार्थो भवति? किं वा विधिवाक्यप्रतीतः कार्यार्थ एव वेदार्थः? इति। तत्र—

(१)"लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः"

इति न्यायेन व्युत्पत्त्यनुसारी वेदार्थो वर्णनीयः। व्युत्पत्तिश्च सिद्धार्थेऽप्यस्ति। 'पुत्रस्ते जातः' इति वार्ताहरव्याहारजन्यं श्रोतुर्हर्षमनुमाय हर्षहेतौ पुत्रजन्मनि सङ्गतिं प्रतिपद्यते। अतो मन्त्रार्थवादप्रतीतोऽप्यर्थो वेदार्थः इति **प्राप्ते**—

(२)**ब्रूमः**—पुत्रजन्मवद्धर्षहेतूनां धनलाभादीनां बहुत्वादस्य वाक्यस्य पुत्रजन्मैवाऽर्थ इति निर्णयो दुर्लभः। (३)'गामानये'ति वाक्ये तु गवानयनरूपां मध्यमवृद्धप्रवृत्तिमवलोक्य सङ्गतिग्रहणं सुलभम्। तस्मात्कार्यरूप एव वेदार्थ(४) इति ॥

इति द्वितीयं धर्मलक्षणाधिकरणम् ॥ २ ॥

---

१. अयं च न्यायः ( पू. मी. १.३.९. ) लोकवेदाधिकरणसिद्धः, तत्र य एव लौकिकाश्शब्दाः त एव वैदिकाः, य एव लोके शब्दानामर्थाः त एव वेदेऽपीति सिद्धान्तितत्वात्।

२. ब्रूम इति क. पुस्तके नाऽस्ति।

३. अयमर्थः—गामानयेत्युत्तमवृद्धवचनश्रवणसमनन्तरं मध्यमवृद्धस्य गवानयनं दृष्ट्वा व्युत्पित्सुर्बाल इत्थमाकलयति—ज्ञानपूर्विकेयमस्य प्रवृत्तिः, स्वतन्त्रप्रवृत्तित्वात्, मत्प्रवृत्तिवदिति। तथैव स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये पदसमुदायस्य सामान्यतस्सामर्थ्यमधिगम्य प्रयोगान्तरेषु गां बधान, अश्वमानयेत्यादिषु आनयनगोशब्दयोरुद्धारे तदर्थयोरप्युद्धारात्, प्रक्षेपे च प्रक्षेपदर्शनात् अन्वयव्यतिरेकाभ्यां गवादिविशेषेषु पदविशेषस्य सामर्थ्यं गृह्णाति। तच्च सामर्थ्यं सर्वत्र कार्यान्वयाव्यभिचारात्तदन्वितपदार्थेषु गृह्णाति, न पुनः पदार्थमात्रे, प्राथमिकव्युत्पत्त्यवगताव्यभिचारिकार्यान्वयपरित्यागे प्रमाणाभावात्। ननु यत्र मध्यमवृद्धप्रवृत्तिलिङ्गमवलम्ब्य शब्दस्य सङ्गतिग्रहः, तत्रैवं भवतु, यत्र तु मुखविकासादिलिङ्गाद्धर्षहेतुसिद्धार्थमनुमाय शब्दस्य सङ्गतिग्रहः, यथा—पुत्रस्ते जात इत्यादिषु तत्राऽवश्यं कार्यमन्तरेणैव सिद्धार्थे शब्दस्य शक्तिरेष्टव्येति चेन्न; सिद्धार्थबोधकवाक्येषु पुत्रस्ते जात इत्यादिषु हर्षहेतुविशेषानुमापकस्य प्रत्यक्षलिङ्गस्याऽभावात्, मुखविकासादेश्च हर्षहेतुमात्रानुमापकत्वात्, पुत्रजन्मवदन्यस्य धनलाभादेरप्यनेकस्य सम्भवेन विनिगमनाभावाच्च पुत्रशब्दस्य सङ्गतिग्रहो न सुलभः। अतस्सर्वशब्दानां कार्यान्वितपदार्थेष्वेव शक्तिरिति सर्वोऽपि वेदार्थः कार्यरूप एवेति।

४. इति सिद्धान्त इति क. पु.।

अथ तृतीयं धर्मप्रमाणपरीक्षाधिकरणम् ॥ ३ ॥

(१)तृतीयाधिकरणं भट्टमतेनाऽऽरचयति—

धर्मस्य ज्ञापकं मानं यदुक्तं चोदनात्मकम् ।
एतत्किं न परीक्ष्यं स्यात्किं वा सम्यक्परीक्ष्यताम् ॥ ४२ ॥
मानोपदेशान्मेयस्य सिद्धत्वात्किं परीक्षया ।
मैवं; विचारशास्त्रेऽस्मिन् परीक्षोपेक्ष्यते कुतः ॥ ४३ ॥

स्पष्टोऽर्थः ॥

अस्मिन्नेवाऽधिकरणे गुरुमतमाह—

आदौ परीक्ष्यो वेदार्थश्चोदनामानताऽथवा ।
वेदार्थस्य प्रधानत्वात्प्रथमं तत्परीक्ष्यताम् ॥ ४४ ॥
चोदनामानतैवाऽत्र प्रथमं साध्यतां गता ।
अनपेक्षतया तस्य यतो मुख्यत्वमाश्रितम् ॥ ४५ ॥

द्वितीयाद्यध्यायैः कर्मभेदशेषशेषित्वादिरूपो वेदार्थस्सूत्रकारेण परीक्षिष्यते । चोदनाप्रामाण्यं तु प्रथमाध्याये परीक्ष्यते । तदेतदयुक्तम् । कुतः ? वेदार्थस्य प्रधानत्वेनाऽऽदौ परीक्षणीयत्वात् । प्रधानभूतो हि वेदार्थः, पुरुषार्थत्वेनाऽनुष्ठेयत्वात् । प्रमाणं तु तद्बोधनाय प्रवृत्तं तच्छेषतया न प्रधानमिति **प्राप्ते**—

**ब्रूमः**—अस्त्वनुष्ठानोपाधौ वेदार्थप्रमाणयोः प्रधानोपसर्जनभावः । प्रमाणप्रमेयभावोपाधौ तु प्रमाणस्यैव मुख्यत्वं निरपेक्षत्वात् । न हि स्वतःप्रामाण्यवादिनां मते सापेक्षता प्रमाणस्याऽस्ति । प्रमेयं तु सापेक्षम्, 'मानाधीना मेयसिद्धि'रित्युक्तत्वात् । तदेतन्मुख्यत्वमाश्रित्य सूत्रकारः प्रमाणपरीक्षामादौ चकारेति युज्यते । अथाऽन्यत्प्राधान्यमाश्रित्य धर्मविचार एवाऽऽदौ कस्मान्न कृतः ? अपरीक्षितेन प्रमाणेन धर्मस्याऽसिद्धौ तद्विचारस्याऽऽश्रयासिद्धेः । तदेवमधिकरणत्रये व्युत्पादनाय भाट्टप्राभाकरमतभेद उपन्यस्तः । (२)अथ प्रायेण भाट्टमतमेवोपन्यस्यते ॥

इति तृतीयं धर्मप्रमाणपरीक्षाधिकरणम् ॥ ३ ॥

---

१. इदं वाक्यं क. पुस्तके नाऽस्ति । २. इदं वाक्यं क. पुस्तके नाऽस्ति ।

### अथ चतुर्थं धर्मस्य प्रत्यक्षाद्यगम्यत्वाधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**प्रत्यक्षादिभिरप्येष गम्यते विधिनैव वा ।**
**अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता ॥ ४६ ॥**
**वर्तमानैकविषयमक्षं, धर्मस्तु भाव्यसौ ।**
**अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता ॥ ४७ ॥**

अक्षं प्रत्यक्षम् । प्रत्यक्षादीनां प्रमाणत्वात्प्रमेयावभासकत्वं तावदविवादम् । धर्मश्च प्रमेयः, असन्दिग्धाविपर्यस्तत्वे सति बुध्यमानत्वात्, (१)घटादिवत् । तस्मात्प्रत्यक्षादिभिरप्येष धर्मो गम्यत इति **प्राप्ते**—

**ब्रूमः**—धर्मस्य प्रमेयत्वेऽपि प्रत्यक्षयोग्यता नाऽस्ति, प्रत्यक्षस्य वर्तमानमात्रविषयत्वात् । यस्तु प्रत्यक्षस्याऽत्यन्तमविषयः, तत्राऽनुमानादीनां कैव कथा ? (२)क्वचित्प्रत्यक्षेण गृहीते व्याप्त्यादौ पश्चादनुमानादीनां प्रवृत्तिः । तस्माद्विधिनैव धर्मो गम्यते ॥

इति चतुर्थं धर्मस्य प्रत्यक्षाद्यगम्यत्वाधिकरणम् ॥ ४ ॥

---

### अथ पञ्चमं चोदनाप्रामाण्याधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

**अबोधको बोधको वा न तावद्बोधको विधिः ।**
**शक्तेरलौकिके धर्मे ग्रहणं दुर्घटं यतः ॥ ४८ ॥**
**समभिव्याहृते धर्मे शक्तिग्रहणसम्भवात् ।**
**बोधकस्य विधेर्मात्वमनपेक्षतया स्थितम् ॥ ४९ ॥**

यथा धर्मे प्रत्यक्षादीनां प्रामाण्यं नाऽस्ति, तथा विधेरपि नाऽस्ति प्रामाण्यम् ।

---

१. पटादिवदिति क. पु.

२. क्वचिन्महानसादौ प्रत्यक्षेण गृहीतयोरेव वह्निधूमयोर्व्याप्तिग्रहो भवति–यत्र यत्र धूमस्तत्र तत्र वह्निरिति । गृहीतायाञ्च व्याप्तौ, पर्वतादौ धूमादिलिङ्गेन व्याप्तिस्मरणपरामर्शादिद्वारा वन्ह्यादेरनुमानमिति अनुमानादीनां प्रत्यक्षपूर्वकत्वान्न धर्मे प्रामाण्यसम्भव इति भावः ।

शक्तिग्रहणपूर्वकं हि प्रामाण्यमाप्तवाक्यस्य लोके दृष्टम् । शक्तिश्च लोकप्रसिद्धे गवादौ गृह्यते । धर्मस्त्वलौकिकः । अतस्तत्र शक्तिग्रहणं दुर्घटम् । तस्माद्विधेरबोधकत्वान्न धर्मे प्रामाण्यमिति **प्राप्ते**—

**ब्रूमः**—यथा 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबती'त्यत्र मधुकरपदस्याऽर्थमजानन्नन्यपदार्थमवगत्य तत्समभिव्याहारात्कमलस्य मध्यगते मधुपानं कुर्वति दृश्यमाने भ्रमरे मधुकरशब्दस्य सङ्गतिं गृहीत्वा वाक्यार्थं प्रतिपद्यते, तथा 'कारीर्या वृष्टिकामो यजेत' इत्यत्र लोकप्रसिद्धार्थवृष्ट्यादिपदसमभिव्याहारादलौकिकभावनायां विधेः सङ्गतिं गृहीत्वा विधिवाक्यार्थं पुरुषो बुध्यते । तस्मादबोधकत्वलक्षणमप्रामाण्यं नाऽस्ति । न च संवादाभावादप्रामाण्यम्, समनन्तरभाविप्रतिनियतफले वृष्ट्यादौ संवादस्याऽपि संभवात् । अनियतदृष्टफले चित्रायागादौ, प्रतिनियतजन्मान्तरफले ज्योतिष्टोमादौ च संवादः कथमिति चेत् ? एवं तर्हि स्वतःप्रामाण्याभ्युपगमान्नाऽस्ति क्वाऽपि संवादाद्यपेक्षा । तस्मादबोधकत्वसापेक्षत्वयोरप्रामाण्यकारणयोरभावाद्विधेः स्वतस्सिद्धं प्रामाण्यं नाऽपह्नोतुं शक्यम् ॥

इति पञ्चमं चोदनाप्रामाण्याधिकरणम् ॥ ५ ॥

---

## अथ षष्ठं शब्दनित्यत्वाधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**विध्यादिरूपो यः शब्दः सोऽनित्योऽथाऽविनश्वरः ।**
**अनित्यो वर्णरूपत्वाद्वर्णे जन्मोपलम्भनात् ॥ ५० ॥**
**अबाधितप्रत्यभिज्ञाबलाद्वर्णस्य नित्यता ।**
**उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते ॥ ५१ ॥**

शब्दनित्यत्ववादिनो वैयाकरणास्तावदेवं मन्यन्ते—वर्णसमूहश्रवणानंन्तरम्—इदमेकं पदमिति प्रत्ययो मानसप्रत्यक्षेणोत्पद्यते । तस्य च प्रत्ययस्य वर्णव्यतिरिक्तः कश्चित्स्फोटनामकः पदार्थो विषयः । स च नित्यः । स एव शब्दः, न तु वर्णा इति । तदेतन्नैयायिकादयो न सहन्ते । वर्णेष्वेवैकार्थावच्छेदोपाधिना पदैक्यबुद्धेरुपपत्तौ वर्णातिरिक्तस्फोटकल्पना निरर्थिका । (तस्माद्वर्णानामेव शब्दत्वम् । वर्णाश्च प्रतिपुरुषं प्रत्युच्चारणं च जन्मविनाशवन्त उपलभ्यन्ते । तस्मादनित्यः शब्दः । तस्य च कारणदोषसम्भवाद्विधेरप्रामाण्यमिति **पूर्वः पक्षः**)

बहुभिः पुरुषैः प्रत्येकं बहुकृत्व उच्चारिते गोशब्दे 'त एवेमे गकारादयो वर्णाः' इत्यबाधितप्रत्यभिज्ञा जायते । तद्बलान्नित्या वर्णाः । न च वर्णानां जन्माभावे बहुकृत्व उच्चारणप्रयत्नो व्यर्थ इति शङ्कनीयम्, तत्प्रयत्नस्य व्यञ्जकत्वाङ्गीकारात् । एवं सति पुरुषभेदादुच्चारणभेदाच्च यथायोगमुदात्तादिभेदैः पटुमृदुत्वादिभेदैश्चोपेतान् ध्वनिविशेषानुत्पाद्य चरितार्था भविष्यन्ति । तस्मान्नित्ये शब्दे कारणदोषाभावान्नास्त्यप्रामाण्यमिति सिद्धान्तः ॥

इति षष्ठं शब्दनित्यत्वाधिकरणम् ॥ ६ ॥

अथ सप्तमं वाक्याधिकरणम् ॥ ७ ॥

सप्तमाधिकरणमारचयति—

**वेदवाक्यममानं स्यान्मानं वा नाऽस्य मानता ।**
**पृथक्सङ्गत्यपेक्षायामनपेक्षत्ववर्जनात् ॥ ५२ ॥**
**वेदेऽपि लोकवन्नैव वाक्यार्थे सङ्गतिः पृथक् ।**
**ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः ॥ ५३ ॥**

यद्यपि वर्णानां नित्यत्वादेकार्थावच्छेदकस्य पदस्याऽपि वर्णरूपतया नित्यत्वाद्वर्णपदद्वारा वेदस्य कारणसापेक्षत्वं नाऽस्ति, तथाऽपि 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिवाक्यस्य वाक्यार्थे सङ्गतिग्रहणमपेक्षितम् । ततो नैरपेक्ष्याभावात्प्रामाण्यं नाऽस्तीति **प्राप्ते—**

**ब्रूमः**—लोके 'गामानये'त्यादिवृद्धप्रयोगे पदपदार्थयोरेव सङ्गतिर्गृह्यते । वाक्यं त्वाकाङ्क्षायोग्यतासन्निधिवशात्स्वार्थं प्रतिपादयतीत्यविवादम् । तथा वेदवाक्यस्याऽपि प्रत्यायकत्वादनपेक्षत्वेन प्रामाण्यमविरुद्धम् ॥

इति सप्तमं वाक्याधिकरणम् ॥ ७ ॥

अथाऽष्टमं वेदापौरुषेयत्वाधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**पौरुषेयं न वा वेदवाक्यं, स्यात्पौरुषेयता ।**
**काठकादिसमाख्यानाद्वाक्यत्वाच्चाऽन्यवाक्यवत् ॥ ५४ ॥**
**समाख्याऽध्यापकत्वेन वाक्यत्वं तु पराहतम् ॥**
**तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ ५५ ॥**

**इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां प्रथमाध्यायस्य प्रथमः पादः ॥**

काठकम्, कौथुमम्, तैत्तिरीयकमित्यादिसमाख्या तत्तद्वेदविषया लोके दृष्टा। तद्धितप्रत्ययश्च (१)"तेन प्रोक्तम्" इत्यर्थे वर्तते। तथा सति व्यासेन प्रोक्तं वैयासिकं भारतमित्यादाविव पौरुषेयत्वं प्रतीयते। किंच 'विमतं वेदवाक्यं पौरुषेयम्, वाक्यत्वात्, कालिदासादिवाक्यवत्' इति **प्राप्ते**—

**ब्रूमः**—अध्ययनसम्प्रदायप्रवर्तकत्वेन समाख्योपपद्यते। कालिदासादिग्रन्थेषु तत्तत्सर्गावसाने कर्तार उपलभ्यन्ते। तथा वेदस्याऽपि पौरुषेयत्वे तत्कर्तोपलभ्येत। न चोपलभ्यते। अतो वाक्यत्वहेतुः प्रतिकूलतर्कपराहतः। तस्मादपौरुषेयो वेदः। तथा सति पुरुषबुद्धिदोषकृतस्याऽप्रामाण्यस्याऽनाशङ्कनीयत्वाद्विधिवाक्यस्य धर्मे प्रामाण्यं सुस्थम्॥

इत्यष्टमं वेदापौरुषेयत्वाधिकरणम्॥ ८॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे प्रथमाध्यायस्य प्रथमः पादः॥ १॥**

---

## अथ प्रथमाध्याये द्वितीयः पादः॥

### प्रथममर्थवादाधिकरणम्॥ १॥

द्वितीयपादस्य प्रथमाधिकरणमारचयति—

**वायुर्वा इत्येवमादेरर्थवादस्य मानता।**
**न विधेयेऽस्ति धर्मे किं किंवाऽसौ तत्र विद्यते॥ १॥**
**विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात्।**
**नाऽस्त्येकवाक्यता धर्मे प्रामाण्यं सम्भवेत्कुतः॥ २॥**
**विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः।**
**तेनैकवाक्यता तस्माद्वादानां धर्ममानता॥ ३॥**

काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते। (२)"वायव्यं श्वेतमालभेत भूतिकामः" इति विधिः। "वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं

---

१. पा. सू. ४. ३. १०१.

२ तैत्तिरीयसंहितायां द्वितीयप्रथमप्रथमे (२. १. १.) श्रुतमिदं वाक्यम्। वायव्यं वायुर्देवता अस्येति व्युत्पत्त्या वायुदेवताकं, श्वेतं श्वेतगुणकं पशुं छागं भूति कामः धनकामः आलभेत। तथा च धनकामनावान् पुरुषः वायुदेवताकश्वेतपशुद्रव्यकयागेन भूतिं सम्पादयेदिति विधिवाक्यार्थः।

भूतिं गमयती''त्यर्थवादः । तत्र विधिवाक्यगता वायव्यादिशब्दा अर्थवादशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधति । अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव भूतार्थमन्वाचक्षते । 'क्षिप्रगामी वायुः स्वोचितेन भागेन तोषितो भागप्रदायैश्वर्यं प्रयच्छती'त्युक्ते रामायणभारतादाविव वृत्तान्तः कश्चित्प्रतीयते, न त्वनुष्ठेयं किंचित् । अत एकवाक्यत्वाभावान्नाऽस्त्यर्थवादस्य धर्मे प्रामाण्यमिति **प्राप्ते**--

ब्रूमः—मा भूत्पदैकवाक्यता । (१)वाक्यैकवाक्यता तु विद्यते । विधिवाक्यं तावत्पुरुषं प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते । अर्थवादवाक्यं च फलवदर्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपेक्षते । तत्र पुरुषार्थपर्यवसितविध्यपेक्षितं प्राशस्त्यं लक्षणावृत्त्या समर्पयदर्थवादवाक्यं विधिवाक्येन सहैकवाक्यतामापद्यते । 'यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता, ततः प्रशस्तमिमं वायव्यं पशुमालभेत' इति वाक्ययोरन्वयः । तस्मादर्थवादा धर्मे प्रमाणम् ॥

अस्मिन्नेवाऽधिकरणे मतान्तरमनुसृत्य पूर्वोत्तरपक्षावाह—

**वादोक्तहेत्वपेक्षत्वान्न विधेर्मानतेति चेत् ।**
**सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ ॥ ४ ॥**

'यतो वायुः क्षिप्रमेव फलप्रदः, अतो वायव्यमालभेते'त्येवमर्थवादोक्तं हेतुमपेक्ष्य विधिः पुरुषं नियुङ्क्ते । ततः(२)सापेक्षत्वादप्रामाण्यमिति **पूर्वपक्षः ।**

---

१. पदैकवाक्यतावाक्यैकवाक्यतयोरयं निष्कर्षः–यत्राऽर्थवादवाक्यस्य प्राशस्त्ये लक्षणामङ्गीकृत्य पदार्थविधयोपस्थितस्य प्राशस्त्यस्य विध्याख्यातार्थेऽन्वयः, तत्र पदैकवाक्यता । यत्र च पदाभिहितपदार्थानामाकाङ्क्षादिभिर्मिथस्सम्बन्धे ज्ञाते पुनश्च शेषशेषिभावाद्याकांक्षायां वाक्यार्थयोरन्वयो भवति तत्र वाक्यैकवाक्यता । यथा– 'समिधो यजति' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्यद्वयघटकीभूतपदैरुपस्थितानां पदार्थानामाकांक्षादिभिर्मिथस्सम्बन्धे ज्ञाते 'समिद्यागेन भावयेत्' 'दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्' इति द्वौ वाक्यार्थौ निष्पद्येते । अनयोर्मध्ये प्रथमस्य शेष्यपेक्षा, द्वितीयस्य च शेषापेक्षेति परस्परं तद्रूपेणाऽन्वये जाते 'समिदाद्यङ्गयागोपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदि'ति योऽयं वाक्यार्थस्सोऽयं वाक्यैकवाक्यतावललभ्यः । एवमेव प्रकृतेऽपि विध्यर्थवादोपस्थितवाक्यार्थयोः परस्परं शेषशेषिभावापेक्षया यो वाक्यार्थः—'यतश्शीघ्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता, अतः प्रशस्तमिदं वायुदेवताकं कर्म कुर्यादि'ति स वाक्यैकवाक्यतया निष्पन्न इति ।

२. यथा 'मलिनस्स्नायात्' 'मलिनानि मे वसनानि, न राजकुलं मया गन्तव्यमि'त्यादिषु स्नानादिकार्ये मालिन्यादेर्हेतुत्वेनाऽन्वयाद्धेतुसापेक्षत्वलक्षणमप्रामाण्यम्, तथोक्तकार्ये हेतुत्वेनाऽन्वयाद्धेतुसापेक्षत्वलक्षणमप्रामाण्यं विधिवाक्यानामिति पूर्वपक्ष्यभिप्रायः।

'विमतं कर्म, अनुष्ठेयम्, फलप्रददेवतोपेतत्वात्, राजसेवादिवत्' इत्यनुमानं यद्यर्थवादे विवक्ष्यते, तदानीमागमप्रमाणस्य विधिवाक्यस्य प्रमाणान्तरसापेक्षत्वं स्यात्। नत्वेवं विवक्षितम्। किंतु फलप्रददेवतातोषकत्वोपन्यासमुखेन कर्मप्राशस्त्यमुपलक्ष्यते। तथा सति प्रशस्तं कर्मानुष्ठेयमित्यस्मिन्नर्थे सार्थवादस्य विधेः पर्यवसानादेकवाक्यता लभ्यते। तत्र कुतः सापेक्षत्वम्? तस्मात् विधिः प्रमाणमिति **सिद्धान्तः**।

इति प्रथममर्थवादाधिकरणम् ॥ १ ॥

## अथ द्वितीयं विधिवन्निगदाधिकरणम् ॥ २ ॥

(१)द्वितीयाधिकरणमारचयति—

**ऊर्जोऽवरुध्या इत्येष विधिवन्निगदो न किम्।**
**यूपौदुम्बरतां स्तौति स्तौति वा तद्विधित्सया ॥ ५ ॥**
**चतुर्थ्या फलतालाभाद्यूपौदुम्बरताफलम्।**
**ऊर्जोऽवरोधं कथयन् कथं स्तुतिपरो भवेत् ॥ ६ ॥**
**अस्तुतौदुम्बरत्वस्याऽविधानात्कस्य तत्फलम्।**
**अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव सः ॥ ७ ॥**

इदमाम्नायते—(२)"औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः, ऊर्क् पशवः, ऊर्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुध्या" इति। अमृतशब्दाभिधेयोऽत्यन्तसारभूतः सूक्ष्मोऽन्नरस ऊर्गुच्यते। उदुम्बररूपयोर्जा यजमानार्थमध्वर्युः पशुरूपामूर्जमाप्नोति। ततो यूपस्यौदुम्बरत्वमूर्जस्सम्पादनाय भवतीत्यर्थः। अत्र 'अवरुध्या' इति तादर्थ्ये चतुर्थी। तया फलत्वं गम्यते। धनलाभाय राजसेवेत्यादौ तद्दर्शनात्। न च फलपरस्य वचनस्य स्तावकत्वं युज्यते। अन्यथा स्वर्गकाम इत्यत्र स्वर्गशब्दस्याऽपि

---

१. पूर्वाधिकरणेऽवच्छेदकावच्छेनाऽर्थवादानां स्तुत्यर्थत्वेन प्रामाण्यमभिहितम्। तत्र सिद्धान्तिनोऽर्थवादत्वेनाऽभिमतेषु केषुचिद्वाक्येषु स्तुत्यर्थत्वमाक्षिप्याऽत्र समाधीयत इति पूर्वाधिकरणेनाऽस्याऽऽक्षेपिकी सङ्गतिर्बोध्या।

२. वाक्यमिदं तैत्तिरीयसंहितायां द्वितीयकाण्डप्रथमप्रश्नस्य प्रथमानुवाके 'सोमापौष्णं त्रैतमालभेत पशुकामः' इति वाक्यविहितकाम्यपशुयागसन्निधावाम्नातम्। त्रयाणां वत्सानां युगपज्जातानां समुदायस्त्रितम्। तत्र भवस्त्रैतः इति व्युत्पत्त्या या अजा युगपद्वत्सत्रयं प्रसूते तेष्वेकैकोऽपि त्रैत इत्यभिधीयते।

ज्योतिष्टोमस्तावकत्वप्रसङ्गादिति **प्राप्ते**—

**ब्रूमः**—अयमूर्गवरोधः कस्य फलं स्यात्—किमविहितस्यौदुम्बरत्वस्य ? उत विहितस्य ? नाऽऽद्यः—अनुष्ठानमन्तरेण द्रव्यमात्रात्फलानुत्पत्तेः । द्वितीये किमत्र विधिः प्रत्यक्षः ? उतोन्नेयः ? नाऽऽद्यः—'औदुम्बरो यूपो भवती'त्यत्र लिङ्प्रत्ययाश्रवणात् । द्वितीये स्तुत्या स उन्नेयः । न चाऽत्र स्तुतिमङ्गीकरोषि । अथोच्येत—विधानायौदुम्बरत्वं स्तूयते तत्फलं चाऽवबोध्यत इति, तर्हि(१)वाक्यं भिद्येत । ततः फलविधिवन्निगद्यमानमप्येतद्वाक्यं स्तावकमेव ॥

अत्रैव गुरुमतेन पूर्वोत्तरपक्षावाह—

**आप्नोतीति विधित्वस्य वादत्वस्याऽप्यनिर्णयात् ।**
**न प्रमा चोदनेत्येतन्न वादो ह्येकवाक्यता ॥ ८ ॥**

'ऊर्जं पशूनाप्नोती'त्यपूर्वार्थत्वाद्विधित्वं प्रतिभासते, लिङाद्यभावादर्थवादत्वम् । अतस्संदिग्धत्वान्न प्रामाण्यं चोदनाया इति **पूर्वपक्षः** ।

एकवाक्यत्वलाभेनाऽर्थवादत्वं निर्णीयते । अतः प्रमाणं चोदनेति **राद्धान्तः** ॥

इति द्वितीयं विधिवन्निगदाधिकरणम् ॥ २ ॥

---

अथ तृतीयं हेतुवन्निगदाधिकरणम् ॥ ३ ॥

(२) तृतीयाधिकरणमारचयति—

**तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः ।**
**हिना श्रुता हेतुताऽतः शूर्पमन्यच्च साधनम् ॥ ९ ॥**
**शूर्पसाधनता श्रौती नाऽश्रौतैः सा विकल्प्यते ।**
**अतो निरर्थको हेतुः स्तुतिस्तस्मात्प्रवर्त्तिका ॥ १० ॥**

---

१. अयं भावः—अत्र प्रत्यक्षविधेरश्रवणात्स्तुतिबलेनैव स वक्तव्यः । तदर्थञ्चाऽस्य स्तावकत्वं वक्तव्यम् । अनन्तरं च तेन वाक्येन स्तुतावुपयुक्तेन फलमपि बोधनीयमित्येकेनैव वाक्येनाऽर्थद्वयकथने वाक्यभेदः प्रसज्यत इति ।

२. पूर्वाधिकरणे विधिवन्निगदानां सर्वेषामर्थवादानां कमिपदाद्यभावेन फलपरत्वं निराकृत्य स्तुत्यर्थत्वे प्रतिपादितेऽपि यत्र हिशब्दादिश्रवणात् हेतुविधित्वं संभवति, तत्र तदेवाऽङ्गीकर्तुमुचितं, न तु स्तावकत्वं केवलमगतिकगतिकमिति पूर्वपक्षोत्थानात्पूर्वाधिकरणेनाऽस्य प्रत्युदाहरणरूपा सङ्गतिः ।

**इदमाम्नायते**—(१)'शूर्पेण जुहोति, तेन ह्यन्नं क्रियत' इति । अयमर्थवादो विधेये शूर्पे हेतुत्वेनाऽन्वेति । हिशब्दस्य हेतुवाचित्वात् । यस्मादन्नसाधनं, तस्माच्छूर्पेण होतव्यमित्युक्ते 'यद्यदन्नसाधनं दर्वीपिठरादिकं तेन सर्वेण होतव्यमि'ति लभ्यते । ततः पिठरादयः शूर्पेण सह विकल्प्यन्त इति **प्राप्ते**—

**ब्रूमः**—शूर्पस्य होमसाधनत्वं श्रौतम्, तृतीयया तदवगमात् । पिठरादीनां त्वानुमानिकम् । अतोऽसमानबलत्वान्न विकल्पो युक्तः । ततो हेतुर्व्यर्थः, स्तुतिः प्ररोचनायोपयुक्ता । तस्मात्स्तुतित्वेनाऽन्वयः ॥

इति तृतीयं हेतुवन्निगदाधिकरणम् ॥ ३ ॥

---

## अथ चतुर्थं मन्त्राधिकरणम् ॥ ४ ॥

(२)चतुर्थाधिकरणमारचयति—

**मन्त्रा उरु प्रथस्वेति किमदृष्टकहेतवः ।**
**यागेषूत पुरोडाशप्रथनादेश्च भासकाः ॥ ११ ॥**
**ब्राह्मणेनाऽपि तद्भानान्मन्त्राः पुण्यैकहेतवः ।**
**न, तद्भानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः ॥ १२ ॥**

(३)'उरु प्रथस्वे'त्ययं कश्चिन्मन्त्रः । तस्याऽयमर्थः—भोः पुरोडाश, त्वमुरु विपु-

---

१. चातुर्मास्येषु सन्ति चत्वारि पर्वाणि—वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि । तेषु द्वितीये वरुणप्रघासपर्वणि करम्भपात्राणां होमो विहितः—'करम्भपात्राणि जुहोती' ति ( का. श्रौ. ५. ५. १०, आप. श्रौ. ८. ६. २३. ) पात्राण्येव चाऽत्र होमद्रव्यम् । तन्निर्माणप्रकारश्चेत्थम्—यवानीषद्भर्जयित्वा तान् पिष्ट्वा जलेन संयुत्य तेन पिष्टेन क्षुद्राकाराणि पात्राणि क्रियन्ते । कृत्वा च तत्र शमीपत्रमिश्राणि करीराणि निक्षिप्य, तानि च पात्राणि नवे शूर्पे निधाय, तत् शूर्पं पत्नी स्वशिरसि निक्षिप्य यजमानान्वारब्धा दक्षिणविहारस्थितेऽग्नौ जुहुयात् । तदेतदुच्यते—'शूर्पेण जुहोती'ति । शमीपत्रमिश्राणि करीराणि, खर्जूराङ्कुराणि वा करम्भः । तदाधारभूतत्वात्पात्राणि, करम्भपात्राणीत्युच्यन्ते इति रुद्रदत्तः । दधिसिक्ता यवसक्तवः करम्भ इति सायणः ।

२. विधिसमभिव्याहृतानामर्थवादानां सर्वेषां विचारं परिसमाप्याऽनन्तरं तदसमभिव्याहृतानां मन्त्राणां प्रामाण्याप्रामाण्यविचारः क्रियत इति पूर्वाधिकरणेनाऽस्याऽवसरसङ्गतिः ।

३. 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामि' ( तै० सं. १. १. ८. ) ति समग्रो मन्त्रः ।

लता यथा भवति तथा प्रसर' इति । एवमादयो मन्त्रा यागप्रयोगेषूच्चार्यमाणा अदृष्टमेव जनयन्ति । न त्वर्थप्रकाशनाय तदुच्चारणम् । पुरोडाशप्रथनलक्षणस्याऽर्थस्य ब्राह्मणवाक्येनाऽपि भासमानत्वात् । 'उरु प्रथस्वेति पुरोडाशं प्रथयती'ति हि ब्राह्मणवाक्यम्, **इति चेत्**—

**नैतद्युक्तम्**—अर्थप्रत्यायनस्य दृष्टप्रयोजनस्य संभवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात् । तस्माद्दृष्टमर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम् । ब्राह्मणवाक्येनाऽप्यर्थानुस्मरणसंभवे 'मन्त्रेणैवाऽनुस्मरणीयमि'ति यो नियमः, तस्य दृष्टासंभवाददृष्टं प्रयोजनमस्तु ॥

अत्रैव मतान्तरेण पूर्वोत्तरपक्षावाह—

**मन्त्रब्राह्मणयोर्वा कलहो विनियोजने ।**
**न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद्यतः ॥ १३ ॥**

**इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां**
**प्रथमाध्यायस्य द्वितीयः पादः ॥**



अस्य मन्त्रस्य लिङ्गेन विनियोगे ब्राह्मणवाक्यमविवक्षितार्थं स्यात् । वाक्येन विनियोगे मन्त्रलिङ्गं न विवक्ष्येत इत्युभयोर्विरोधादप्रामाण्यं चोदनाया इति **पूर्वः पक्षः** ।

नाऽयं विरोधः; प्रबलेन हि लिङ्गेन विनियोगसिद्धौ वाक्यस्याऽनुवादकत्वादिति **राद्धान्तः** ॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे**
**प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥**



## अथ प्रथमाध्याये तृतीयः पादः ॥

### प्रथमं स्मृत्यधिकरणम् ॥ १ ॥

(१)तृतीयपादस्य प्रथमाधिकरणमारचयति—

**अष्टकादिस्मृतेर्धर्मे न मात्वं मानताऽथवा ।**
**निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ॥ १ ॥**

---

१. सर्वप्रमाणमूर्धन्यस्य विधेर्निरपेक्षतया धर्मप्रमितिजनकत्वात् प्रथमे पादे तस्य प्रामाण्यं निरूप्याऽनन्तरं द्वितीयपादे विध्येकवाक्यतया प्रामाण्यमासेदुषामर्थवादादीनां

**वैदिकैः स्मर्यमाणत्वात्संभाव्या वेदमूलता ।**
**विप्रकीर्णार्थसंक्षेपात्सार्थत्वादस्ति मानता ॥ २ ॥**

"अष्टकाः कर्तव्याः" इत्यादिस्मृतिवाक्यं न धर्मे प्रमाणम्, पौरुषेयवाक्यत्वे सति मूलप्रमाणरहितत्वात्, विप्रलम्भकवाक्यवत् । अथ मूलप्रमाणवत्त्वाय वेदार्थ एव स्मृतिभिरुच्यत इति मन्येथाः, तर्हि वेदेनैव तदर्थस्याऽवगतत्वादियं स्मृतिरनर्था स्यात् । तदानीमनुवादकत्वादप्रामाण्यमिति **प्राप्ते**—

**ब्रूमः**—'विमता स्मृतिर्वेदमूला, वैदिकमन्वादिप्रणीतस्मृतित्वात्, उपनयनाध्ययनादिस्मृतिवत्' । न च वैयर्थ्यं शङ्कनीयम्, अस्मदादीनां प्रत्यक्षेषु परोक्षेषु च नानावेदेषु विप्रकीर्णस्याऽनुष्ठेयार्थस्यैकत्र संक्षिप्यमाणत्वात् । तस्मादियं स्मृतिर्धर्मे प्रमाणम् ॥

अस्मिन्नेवाऽधिकरणे मतान्तरेण पूर्वोत्तरपक्षावाह—

**न मा स्मार्ताष्टकाङ्गत्वाद्यां जना इति मन्त्रगीः ।**
**तन्न, स्मृतेर्मूलवेदेऽनुमिते मात्वसंभवात् ॥ ३ ॥**

(२)'यां जनाः प्रतिनन्दन्ती'त्ययं मन्त्रोऽष्टकाश्राद्धस्याऽङ्गम् । तच्च श्राद्धं स्मार्तम् । न हि तस्य प्रतिपादकं वेदवाक्यमुपलभामहे । तस्मादिदं मन्त्रवाक्यं न धर्मे प्रमाणमिति **चेत्**—

**न**; तन्मूलस्य वेदस्याऽनुमेयत्वात् । अनुमानं च दर्शितम् । तस्मादसौ मन्त्रो धर्मे प्रमाणम् ॥

इति प्रथमं स्मृत्यधिकरणम् ॥ १ ॥

---

प्रामाण्यं व्यवस्थापितम् । अनन्तरं वेदातिरिक्तधर्माधर्मप्रमाणनिरूपणस्य पादार्थत्वादिह स्मृत्याचाराणां प्रामाण्यं निरूप्यत इति पादसङ्गतिः । पूर्वाधिकरणसङ्गतिस्तु—स्मृतीनां विधिनिषेधार्थवादमूलकत्ववत् 'न पचेदन्नमात्मनः' इत्यादिस्मृतेः 'मोघमन्नं विन्दते अप्रचेताः' इत्यादिमन्त्रमूलकत्वेनाऽपि प्रामाण्यं सिध्यतीति स्मृतिप्रामाण्यस्य मन्त्रप्रामाण्योपजीव्यत्वादुपजीव्योपजीवकभावरूपा द्रष्टव्या ।

२. 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवाऽऽयतीम् । संवत्सरस्य या पत्नी सा नोऽस्तु सुमङ्गली स्वाहे' ति समग्रो मन्त्रः ।

अथ द्वितीयं विरोधाधिकरणम् ॥ २ ॥

(१)द्वितीयाधिकरणमारचयति—

**औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः ।**
**अमितिर्वेति सन्देहे, मितिस्स्यादष्टकादिवत् ॥ ४ ॥**
**औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः ।**
**विरोधान्मूलवेदस्याऽननुमानान्न मानता ॥ ५ ॥**

ज्योतिष्टोमे सदोनामकस्य मण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तस्याश्च वाससा वेष्टनं स्मर्यते—'औदुम्बरी सर्वा वेष्टयितव्ये'ति । सा स्मृतिः प्रमाणम् , अष्टकादिस्मृतिष्विव मूलवेदस्याऽनुमातुं शक्यत्वादिति प्राप्ते—

ब्रूमः—'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षवेदवचनेन स्पर्शो विधीयते । न च सर्ववेष्टने स्पर्शः संभवति । अतो मूलवेदानुमानं (२)कालात्ययापदिष्टम् । अतो विप्रलम्भकवाक्यवन्निर्मूला स्मृतिरप्रमाणम् ॥

अस्मिन्नेवाऽधिकरणे मतान्तरमाह—

**प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात् ।**
**अमात्वे शङ्किते बाधोऽनुमानस्याऽत्र वर्ण्यते ॥ ६ ॥**
**परप्रत्यक्षवेदोऽत्र मूलं चेद्वेष्टनस्य तत् ।**
**अस्त्वेवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः ॥ ७ ॥**

स्पर्शसर्ववेष्टनविषययोः प्रत्यक्षानुमितश्रुत्योः परस्परविरोधादुभयोरप्यप्रामाण्यमिति पूर्वपक्षः ।

अनुमानस्य कालात्ययापदिष्टतया विरुद्धश्रुत्यभावेन स्पर्शश्रुतिः स्वार्थे प्रमाणम् । (३)यदि पुरुषान्तरप्रत्यक्षवेदः सर्ववेष्टनस्मृतेर्मूलमित्युच्यते, तर्हि मा भूत्तस्या अप्रामाण्यम् । तथाऽपि परप्रत्यक्षात्स्वप्रत्यक्षस्याऽभ्यर्हिततवेन स्पर्श एवाऽत्राऽनुष्ठेयो, न तु सर्ववेष्टनमिति सिद्धान्तः ॥

इति द्वितीयं विरोधाधिकरणम् ॥

---

१. पूर्वाधिकरणेनाऽस्याऽऽपवादिकी सङ्गतिः ।
२. बाधितमित्यर्थः । ३. अथेति. ख. पु.

## तृतीयं लोभादिमूलकस्मृत्यप्रामाण्याधिकरणम् ॥ ३ ॥

(१)तृतीयाधिकरणमारचयति—

**वैसर्जनाख्यहोमीयवाससो ग्रहणस्मृतिः ।**
**प्रमा न वा, श्रुत्यबाधात्प्रमा स्यादष्टकादिवत् ॥ ८ ॥**
**दृष्टलोभैकमूलत्वसम्भवे श्रुत्यकल्पनात् ।**
**सर्ववेष्टनवद्बाधहीनाऽप्येषा न हि प्रमा ॥ ९ ॥**

ज्योतिष्टोमेऽग्नीषोमीयस्य पशोस्तन्त्रे प्रक्रान्ते(२) वैसर्जनहोमो विहितः—'यजमानं पत्नीं पुत्रांश्च भ्रातॄंश्चाऽहतेन वाससा प्रच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनिबध्य जुहोती'ति । तस्मिन्वासस्येवं स्मर्यते—'वैसर्जनहोमीयं वासोऽध्वर्युःपरिगृह्णाती'ति । सेयं स्मृतिः सर्ववेष्टनस्मृतिवत्प्रत्यक्षश्रुत्या न बाध्यते । ततोऽष्टकादिस्मृतिवत्प्रमाणमिति **प्राप्ते**-

**ब्रूमः**—कदाचित्कश्चिदध्वर्युर्लोभादेतद्वासो जग्राह । तन्मूलैवैषा स्मृतिरित्यपि कल्पना सम्भवति । दृष्टानुसारिणी चैषा कल्पना, दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात् । तथा सत्यस्याः स्मृतेरन्यथाऽप्युपपत्तावष्टकादिस्मृतिवन्न मूलश्रुतिः कल्पयितुं शक्यते । अतो बाधाभावेऽपि मूलवेदाभावान्नेयं स्मृतिः प्रमाणम् ॥

इति तृतीयं लोभादिमूलकस्मृत्यप्रामाण्याधिकरणम् ॥ ३ ॥

---

## अथ चतुर्थं शिष्टाकोपाधिकरणम् ॥ ४ ॥

(३) चतुर्थाधिकरणं भाष्यमतेनाऽऽरचयति—

**आचान्तेनेत्यमा मा वा स्मृतिरेषा न मा भवेत् ।**
**वेदं कृत्वेति यः श्रौतः क्रमस्तेन विरोधतः ॥ १० ॥**

---

१. पूर्वाधिकरणे श्रुतिविरोधे स्मृतेरप्रामाण्यमुपन्यस्याऽधुना तादृशश्रुतिविरोधाभावेऽपि यत्र लोभादिहेत्वन्तरदर्शनं तत्राऽपि स्मृतेरप्रामाण्यमुपपादयति ।

२. अवान्तरदीक्षाविसर्जनार्थो होमः वैसर्जनहोमः । स च 'त्वं सोम तनूकृद्भ्यः' इत्यादिभिर्मन्त्रैः यजमानपत्नीपुत्रभ्रातृषु समन्वारब्धेष्वहतेन वाससा सम्प्रच्छादितेषु वाससोऽन्ते स्रुग्दण्डमुपसंगृह्य चतुर्गृहीतेनाऽऽज्येन कर्तव्यः । ( आप. श्रौ. ११. १६. १५. ) द्रष्टव्यम् ।

३. प्रत्यक्षश्रुतिविरुद्धानां लोभादिहेतुकानाञ्च स्मृतीनामप्रामाण्यं पूर्वमुपपाद्येदानीं श्रुत्या सह स्मृतेर्विरोधः क्वाऽस्ति क्वच नाऽस्तीति प्रसङ्गाद्विचार्यत इति प्रासङ्गिकी सङ्गतिः ।

**आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः।**
**धर्मस्य धर्म्यपेक्षत्वादबाधादस्ति मानता ॥ ११ ॥**

'क्षुत आचामेत्' इति विहितं पुरुषार्थमाचमनम्। यदा तु क्रतुमध्ये क्षुतादि निमित्तं प्राप्नोति, तदा नैमित्तिकमाचमनं क्रत्वङ्गत्वेन स्मृत्या विधीयते 'आचान्तेन कर्म कर्तव्यमि'ति, सेयं स्मृतिर्न प्रमाणम्। कुतः? विरुद्धत्वात्। 'वेदं कृत्वा वेदिं करोती'-ति श्रुतौ पूर्वकालवाचिना क्त्वाप्रत्ययेन क्रमः प्रतीयते। वेदो नाम दर्भमयं सम्मार्जनसाधनम्। वेदिराहवनीयगार्हपत्यमध्यवर्त्तिनी चतुरङ्गुलखाता भूमिः। तयोर्मध्ये यदि क्षुतादिनिमित्तमाचमनं कुर्यात्, तदा श्रुत्युक्तं नैरन्तर्यं विरुध्यते। तस्माद्वेष्टनस्मृतिवदाचमनस्मृतिर्न प्रमाणमिति **प्राप्ते**—

**ब्रूमः**—वेदवेद्यादिश्रुत्युक्तपदार्थवदाचमनादयः स्मृत्युक्ता अनुष्ठेयपदार्थाः। क्रमस्तु अनुष्ठेयपदार्थनिष्ठो धर्मः। स च पदार्थानुपजीवति। तत उपजीव्यविरोधात्क्रम एव बाध्यते। न तु क्रमेणाऽऽचमनस्य बाधोऽस्ति। तस्मादियं स्मृतिः प्रमाणम् ॥

अस्मिन्नेव वार्तिककारः प्रकारान्तरेण विचारद्वयं चकार। तत्र प्रथमं विचारं दर्शयति—

**शाक्योक्ताहिंसनं धर्मो न वा, धर्मः श्रुतत्वतः।**
**न धर्मः, न हि पूतं स्याद्गोक्षीरं श्वदृतौ धृतम् ॥ १२ ॥**

'ब्रह्मचर्यमहिंसां चाऽपरिग्रहं च सत्यं च यत्नेन रक्षेदि'ति श्रुतावहिंसादिर्धर्मत्वेनोक्तः। स एव धर्मः शाक्येनाऽप्युक्तः। तस्माच्छाक्यस्मृतिर्धर्मे प्रमाणमिति **चेत्**—

**न**; स्वरूपेण धर्मस्याऽपि(१) गोक्षीरन्यायेन शाक्यसम्बन्धे सत्यधर्मत्वप्रसङ्गात्। तदीयग्रन्थेनाऽहिंसादिर्नाऽवगन्तव्यः। तस्मान्न सा स्मृतिर्धर्मे प्रमाणम् ॥

विचारान्तरं दर्शयति—

**सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता।**
**अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता ॥ १३ ॥**

(२) होलाकोत्सवादिसदाचारस्य मूलभूतवेदाभावादप्रामाण्यमिति **चेत्**—

**न**; वैदिकैः शिष्टैः परिगृहीतत्वेनाऽष्टकादिवद्वेदमूलत्वात्। अत एव मन्वादिभिर्ग्र-

---

१. पवित्रमपि गोक्षीरं श्वचर्मनिर्मितदृतिनिक्षिप्तं सत् यथा अपवित्रं भवति, तथा अहिंसाया धर्मत्वेऽपि शाक्याभिहितत्वेन ग्रहणेऽधर्मत्वं प्रसज्यत इति न्यायार्थः।

२. फाल्गुनकृष्णप्रतिपदि क्रियमाणः परस्परजलसेकरक्तधूलिप्रक्षेपरूपोत्सवः होलाकोत्सवः।

न्थगौरवभयाद्विशेषाकारेणाऽनुपदिष्टोऽपि सदाचारः सामान्याकारेणोपदिष्टः(१) "श्रुतिः स्मृतिः सदाचारः" इत्येवं धर्मे प्रमाणोपन्यासात्। तस्माच्छिष्टाचारः प्रमाणम् ॥

इति चतुर्थं शिष्टाकोपाधिकरणम् ॥ ४ ॥

### भाष्यकारमतेन पञ्चमं यववराहाधिकरणम् ॥ ५

(२)पञ्चमाधिकरणमारचयति—

**यवादिशब्दाः किं द्व्यर्था नो वाऽऽर्यम्लेच्छसाम्यतः ।**
**दीर्घशूकाप्रियंग्वाद्या द्वयेऽप्यर्था विकल्पिताः ॥ १४ ॥**
**यत्राऽन्या इति शास्त्रस्था प्रसिद्धिस्तु बलीयसी ।**
**शास्त्रीयधर्मे तेनाऽत्र प्रियङ्ग्वादि न गृह्यते ॥ १५ ॥**

'यवमयश्चरुर्भवति' 'वाराही उपानहावुपमुञ्चत' इति श्रूयते। तत्र यवशब्दं(३) आर्या दीर्घशूकेषु प्रयुञ्जते, वराहशब्दं च सूकरे। (४)म्लेच्छास्तु यवशब्दं प्रियङ्गुषु, वराहशब्दं च कृष्णशकुनौ। तथा सति लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेष्वार्यम्लेच्छप्रसिद्ध्योः समानबलत्वादुभयविधा अप्यर्था विकल्पेन स्वीकार्या इति प्राप्ते—

**ब्रूमः**—शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी प्रत्यासन्नत्वादविच्छिन्नपारम्पर्यागतत्वाच्च। शास्त्रे यवविध्यर्थवाद एवं श्रूयते—(५)'यत्राऽन्या औषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ती'ति इतरौषधिविनाशकालेऽभिवृद्धिर्दीर्घशूकेषु दृश्यते। न तु प्रियङ्गुषु, तेषामितरौषधिपरिपाकात्पूर्वं पच्यमानत्वात्। वाराहोपानद्विध्यर्थवादश्चैवं भवति—'वराहं गावोऽनुधावन्ति' इति गवामनुधावनं सूकरे सम्भवति, न तु कृष्णशकुनौ। तस्माद्दीर्घशूकादिर्यवादिशब्दार्थः ॥

### ( वार्तिककारमतेन पील्वधिकरणम् )

अत्र वार्तिककारः पीलुशब्दमुदाजहार। तं च म्लेच्छा हस्तिनि प्रयुञ्जते, आर्यास्तु वृक्षे। तत्राऽविप्लुतव्यवहारस्याऽऽर्येषु सम्भवाद्वृक्ष एव पीलुशब्दार्थः ॥

---

१. या. स्मृ. १. ७.

२. पूर्वाधिकरणे आचारप्रामाण्यस्य स्थापितत्वात्तत्प्रसङ्गेन शब्दार्थप्रयोगरूपाचारविप्रतिपत्तौ बलाबलमिह विचार्यत इति पूर्वाधिकरणेनाऽस्य प्रासङ्गिकी सङ्गतिः।

३. वैदिकभाषैकनिरता आर्यावर्तनिवासिनस्त्रैवर्णिका आर्याः।

४. कुमारिकाखण्डबहिर्वासिनोऽपभ्रष्टभाषाभाषिणो म्लेच्छाः।

५. श. ब्रा. ३. ६. १. १०.

(१)अस्मिन्नेवाऽधिकरणे गुरुमतमाह—

**यवाद्यर्थानिर्णयेन तद्वाक्यं न प्रमेति चेत् ।**
**न, शास्त्रस्य बलित्वेन तत्प्रसिद्ध्याऽर्थनिर्णयात् ॥ १६ ॥**

स्पष्टोऽर्थः ॥

**( वार्तिककारमतेन स्मृत्याचारविरोधे बालाबलाधिकरणम् )**

अस्मिन्नेवाऽधिकरणे वार्तिककारमतेन वर्णकान्तरमारचयति—

**यो मातुलविवाहादौ शिष्टाचारः स मा न वा ।**
**इतराचारवन्मात्वं, अमात्वं स्मार्तबाधनात् ॥ १७ ॥**
**स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च ।**
**अनुमेया स्मृतिः, स्मृत्या बाध्या प्रत्यक्षया तु सा ॥ १८ ॥**

केषुचिद्दक्षिणदेशेषु मातुलस्य दुहितरं शिष्टाः परिणयन्ति । सोऽयमाचारः प्रमाणम्, शिष्टाचारत्वात्, होलाकाद्याचारवत्, इति चेत्—

न; स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात् । तथा च स्मृतिः—

(२)"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्" ॥ इति ॥

न च स्मृत्याचारयोर्मूलवेदानुमापकत्वसाम्यात्समबलत्वमिति शङ्कनीयम् । होलाकादिसदाचारस्य मन्वादिस्मृतिवद्वेदानुमापकत्वायोगात् । न हीदानीन्तनाः शिष्टा मन्वादिवद्देशकालविप्रकृष्टं वेदं दिव्यज्ञानेन साक्षात्कर्तुं शक्नुवन्ति । येन शिष्टाचारो मूलवेदमनुमापयेत् । शक्नोति च यः कोऽपि शिष्टो यत्र क्वाऽपि देशविशेषे कालविशेषे च यं कञ्चनाऽपि होलाकाद्याचारस्य मूलभूतं स्मृतिग्रन्थमवलोकयितुम् । तस्माच्छिष्टाचारेण स्मृतिरेवाऽनुमातुं शक्यते, न तु श्रुतिः । अनुमिता च स्मृतिर्विरुद्धया प्रत्यक्षया स्मृत्या बाध्यते । अत एवाऽऽहुः—

(३)"आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः ।
तेन ह्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते" ॥ इति ।

तस्मादीदृशस्याऽऽचारस्याऽप्रामाण्यमभ्युपेयम् ॥

---

१. अत्रैव गुरुमतमाहेति क. पु. ।

२. वचनमिदं शातातपीयत्वेनोपन्यस्तं निर्णयसिन्धुप्रभृतिषु ग्रन्थान्तरेषु, परन्तु मुद्रितायां शातातपस्मृतौ वचनमिदं नोपलभ्यते ।

३. तं. वा. १. ३. ४. पृ. २२०.

( वार्तिककारमतेन त्रिवृच्चर्वश्ववालाधिकरणम् )

तत्रैवाऽपरं वर्णकमारचयति—

**लौकिको वाक्यगो वाऽर्थस्त्रिवृदादेः समत्वतः ।**
**उभौ विध्यर्थवादैकवाक्यत्वादस्त्विहाऽन्तिमः ॥ १९ ॥**

(१)'त्रिवृद्बहिष्पवमानमि'ति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोकसिद्धोऽर्थः । वाक्यशेषादृक्त्रयात्मकेषु त्रिषु सूक्तेष्ववस्थितानां बहिष्पवमानात्मकस्तोत्रनिष्पादनक्षमाणां 'उपास्मै गायता नरः' इत्यादीनामृचां नवकमर्थः । तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलत्वादुभावप्यर्थौ विकल्पेन ग्रहीतव्याविति **चेत्**—

**मैवम्** ; लौकिकार्थस्वीकारपक्षे विधिवाक्येऽर्थस्त्रैगुण्यम्, अर्थवादवाक्ये स्तोत्रीयाणामृचां नवकमित्येवं विध्यर्थवादयोर्वैय्यधिकरण्यादेकवाक्यत्वं न स्यात् । अत एकवाक्यत्वाय स्तोत्रीयाणां नवकमित्येव विधिवाक्ये नियतोऽर्थः ॥

इति पञ्चमं यववराहाधिकरणम् ॥ ५ ॥

---

अथ षष्ठं पिकनेमाधिकरणम् ॥ ६ ॥

(२)षष्ठाधिकरणमारचयति—

**कल्प्यः पिकादिशब्दार्थो ग्राह्यो वा म्लेच्छरूढितः ।**
**कल्प्य आर्येष्वसिद्धत्वादनार्याणामनादरात् ॥ २० ॥**
**ग्राह्या म्लेच्छप्रसिद्धिस्तु विरोधादर्शने सति ।**
**पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः ॥ २१ ॥**

आर्याः पिकादिशब्दं न क्वाऽप्यर्थे प्रयुञ्जते, म्लेच्छाश्च न प्रमाणभूताः । तस्मान्निगमनिरुक्तव्याकरणैः पिकनेमादिशब्दानामर्थः कल्पनीय इति **चेत्**—

**मैवम्** ; आर्यप्रसिद्धिविरोधस्याऽदृष्टत्वेनेदृशे विषये म्लेच्छप्रसिद्धेरप्यादरणीयत्वात् । कल्प्यमानादव्यवस्थितादर्थाद्वरं व्यवस्थिता म्लेच्छरूढिः । यत्रेदृश्या अपि रूढेरभावस्तत्र निरुक्तादयश्चरितार्थाः । तस्मादनार्यप्रसिद्ध्या पिकः कोकिलः, नेमशब्दोऽर्धवाची, तामरसशब्दः पद्मवाचीत्येवं द्रष्टव्यम् ॥

---

१. अस्य वाक्यस्याऽर्थः १. ४. ३ अधिकरणे टिप्पण्यां द्रष्टव्यः ।

२. अत्र शास्त्रस्थप्रसिद्धेः कल्प्यत्वेनाऽप्रामाण्यकथनात्पूर्वाधिकरणेनाऽस्याऽऽपवादिकी सङ्गतिर्द्रष्टव्या ।

अस्मिन्नेवाऽधिकरणे गुरुमतमाह—

**अर्थाबोधादप्रमाणं पिकालम्भनचोदना ।**
**मैवं, म्लेच्छप्रसिद्ध्याऽपि तद्बोधादविरुद्धया ॥ २२ ॥**

स्पष्टोऽर्थः ।

इति षष्ठं पिकनेमाधिकरणम् ॥ ६ ॥

---

### अथ सप्तमं कल्पसूत्राधिकरणम् ॥ ७ ॥

(१)सप्तमाधिकरणमारचयति—

**अपौरुषेयाः कल्पाद्याः कृत्रिमा वा न कृत्रिमाः ।**
**श्रुतिस्मृत्योर्धर्मबुद्धेः स्वतो मात्वं यतः समम् ॥ २३ ॥**
**पुंनामोक्तेः पौरुषेयाः काठकाद्यसमत्वतः ।**
**तत्रोपलेभिरे केचिदापस्तम्बादिकर्तृताम् ॥ २४ ॥**

बौधायनापस्तम्बाश्वलायनकात्यायनादिनामाङ्किताः(२) कल्पसूत्रग्रन्थाः, निगमनिरुक्तादिषडङ्गग्रन्थाः, मन्वादिस्मृतयश्चाऽपौरुषेयाः, धर्मबुद्धिजनकत्वात्, वेदवत् । न च मूलप्रमाणसापेक्षत्वेन वेदवैषम्यमिति शङ्कनीयम् । उत्पन्नाया बुद्धेः स्वतःप्रामाण्याङ्गीकारेण निरपेक्षत्वात् ।

**मैवम्**; उक्तानुमानस्य कालात्ययापदिष्टत्वात् । बौधायनसूत्रम्, आपस्तम्बसूत्रम्, इत्येवं पुरुषनाम्ना ते ग्रन्था उच्यन्ते । न च काठकादिसमाख्यावत्प्रवचननिमित्तत्वं युक्तम् । तद्ग्रन्थनिर्माणकाले तदानीन्तनैः कैश्चिदुपलब्धत्वात् । तच्चाऽविच्छिन्न-

---

१. अत्र कल्पसूत्रादीनां स्मृत्यधिकरणन्यायेन वेदमूलकत्वेन प्रामाण्ये सिद्धेऽप्यधुना तेषां वेदत्वेन वेदतुल्यतया वा प्रामाण्यमस्त्वित्युत्थानात्प्रत्युदाहरणसङ्गतिः ।

२. प्रयोगं कल्पयन्तीति व्युत्पत्त्या स्पष्टतया ये प्रयोगबोधकाः ते कल्पाः बौधायनमशकादिभिर्महर्षिभिर्विरचिताः, प्रयोगं सूचयन्तीति व्युत्पत्त्या संज्ञापरिभाषादिभिर्ये प्रयोगं सूचयन्ति ग्रन्थाः, ते सूत्रपदाभिधेया आश्वलायनलाट्यायनादिभिर्महर्षिभिर्विरचिताः । कल्पाश्च सूत्राणि च कल्पसूत्राणि इति वार्तिककारप्रभृतयः । वस्तुतस्तु उभयेषामप्यमीषां कल्पसूत्राणीति व्यवहारदर्शनात्कल्पसूत्रपदस्य कल्परूपाणि च तानि सूत्राणि चेति व्युत्पत्तिमङ्गीकृत्योभयेषां ग्रहणं भवितुमर्हति । अयमेव ग्रन्थकर्तुरप्यभिप्रेतोऽर्थः ।

पारम्पर्येणाऽनुवर्त्तते । ततः कालिदासादिग्रन्थवत्पौरुषेयाः । तथाऽपि वेदमूलकत्वात्प्रमाणम् ॥

अत्रैव गुरुमतमाह—

**कल्पे सर्वतिथौ दर्शकार्यतोक्तेः श्रुतिर्न मा ॥**
**न, कल्पे साध्यवेदत्वप्रहाणाद्दुर्बलत्वतः ॥ २५ ॥**

सर्वतिथौ दर्शयागकर्तव्यतां कल्पसूत्रकार आह—(१)"सर्वासु तिथिष्वमावास्या कर्तव्या" इति । श्रुतिस्त्वमावास्यायामेव तिथौ कर्तव्यतां ब्रूते । ततः कल्पसूत्ररूपेण वेदेन विरुद्धत्वादियं श्रुतिर्न मानमिति चेत्—

**मैवम्** ; कल्पस्य वेदत्वं नाऽद्याऽपि सिद्धम् । किन्तु यत्नेन साध्यम् । न च तत्साधयितुं शक्यम् । पौरुषेयत्वस्य समाख्यया, तत्कर्तुरुपलम्भेन च साधितत्वात् । अतः कल्पसूत्रस्य दुर्बलतया न श्रुतेरप्रामाण्यम् ॥

इति सप्तमं कल्पसूत्राधिकरणम् ॥ ७ ॥

---

अथाऽष्टमं होलाकाधिकरणम् ॥ ८ ॥

(२)अष्टमाधिकरणमारचयति—

**होलाकादेर्व्यवस्था स्यात्साधारण्यमुताऽग्रिमः ।**
**देशभेदेन दृष्टत्वात्साम्यं मूलसमत्वतः ॥ २६ ॥**

होलाकादिशिष्टाचाराणां हारीतादिस्मृतिविशेषाणां चाऽनुष्ठातृपुरुषभेदेन व्यवस्थितं प्रामाण्यम् । कुतः ? देशविशेषे तेषां दृष्टत्वात् । होलाकादयः प्राच्यैरेव क्रियन्ते, वसन्तोत्सवो होलाका । आह्नीनैबुकादयो दाक्षिणात्यैः, स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजादिकमाह्नीनैबुकशब्देनोच्यते । उद्वृषभयज्ञादय उदीच्यैः, ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति सोऽयमुद्वृषभयज्ञः । एवं हारीतादिस्मृतिः काचित्क्वचिद्देशविशेषे दृश्यते । तस्माद्व्यवस्थितं प्रामाण्यमिति चेत्—

**मैवम्** ; तन्मूलत्वेनाऽनुमितस्य वेदस्य सर्वसाधारणत्वेन तेषामपि सर्वसाधारणत्वात् ॥

---

१. 'आपौर्णमास्या अमावास्या नाऽत्येती' ( गो. गृ. १. ९. १४. ) इति गोभिलगृह्यसूत्रं द्रष्टव्यम् ।

२. एवं तावत् स्मृतीनामाचाराणाञ्च सापवादं वेदमूलत्वेन प्रामाण्यमभिहितम् । अधुना तदेव विषयपरिशोधनेन दृढीक्रियत इति प्रासङ्गिकी सङ्गतिः ।

अत्रैव गुरुमतमाह—

**प्राच्यादिपदयुक्ताया श्रुतेरनुमितौ पदे ।**
**अर्थाबोधादमात्वं चेन्न, सामान्यानुमानतः ॥ २७ ॥**

प्राच्यादिभिर्व्यवस्थया होलाकादिष्वनुष्ठीयमानेषु तन्मूलश्रुतिरपि प्राच्यादिपदयुक्तैवाऽनुमातव्या । तत्र प्राच्यादिपदस्याऽर्थो न बुध्यते । ये पुरुषाः कञ्चित्कालं प्राच्यां दिशि निवसन्ति, त एव कालान्तरे प्रतीच्यां दिशि निवसन्त उपलभ्यन्ते । तत्र श्रौतप्राच्यादिपदस्याऽर्थाबोधादप्रमाणं श्रुतिरिति चेत्—

नैवम् ; अनुष्ठानसामान्यस्य मूलश्रुतिकल्पकत्वात् । अतः प्राच्यादिपदराहित्ये सत्यर्थबोधादनुमिता श्रुतिः प्रमाणम् ॥

इत्यष्टमं होलाकाधिकरणम् ॥ ८ ॥

---

अथ नवमं व्याकरणाधिकरणम् ॥ ९ ॥

(१)नवमाधिकरणमारचयति—

**गोगाव्यादिषु साधुत्वे प्रयोगे वा न कश्चन ।**
**नियमोऽत्राऽस्ति वा, नाऽस्ति व्याकृतेर्मूलवर्जनात् ॥ २८ ॥**
**साधूनेव प्रयुञ्जीत गवाद्या एव साधवः ।**
**इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः ॥ २९ ॥**

व्याकरणाभिज्ञैः सास्नादिमद्वस्तुनि 'गौः' इत्येष शब्दः प्रयुज्यते । तदनभिज्ञैस्तु स्वस्वदेशीयभाषामनुसृत्य गावी, गोणी, गोपोतलिकेत्येवमादयः शब्दाः प्रयुज्यन्ते । तत्र ईदृश एव शब्दः साधुः, नेदृशः इत्यस्मिन्नर्थे नियामकं नाऽस्ति । तथा प्रयोगेऽपि तन्नाऽस्ति—ईदृश एव शब्दः प्रयोक्तव्यः, नेदृश इति । न तावद्वृद्धव्यवहारो नियामकः, तस्य सर्वेषु शब्देषु समानत्वात् । नाऽपि व्याकरणस्मृतिर्नियामिका, तस्या निर्मूलत्वेनाऽप्रमाणत्वात् । न ह्यभियुक्तप्रयोगस्तन्मूलम्, अयोन्याश्रयत्वप्रसङ्गात् । व्याकरणस्मृतेः प्रामाण्यसिद्धौ तदनुसारेण प्रयोक्तॄणामभियुक्तत्वसिद्धिः, तत्सिद्धौ तत्प्रयोगमूलतया व्याकरणस्य प्रामाण्यम् । तस्मान्नाऽस्ति साधुत्वप्रयोगयोर्नियम इति प्राप्ते—

ब्रूमः—'साधूनेव प्रयुञ्जीत, न त्वपभ्रंशान्' इत्यस्ति नियमः । उभयत्र क्रमेण दोषगुणवादिनोर्वेदवाक्ययोः श्रवणात् ।(२)"एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे

---

१. स्मृत्यधिकरणन्यायेन सिद्धमपि व्याकरणस्य प्रामाण्यं पुनरत्राऽऽक्षिप्य समाधीयत इत्याक्षेपिकी सङ्गतिर्द्रष्टव्या ।

२. ( म. भा. ६. १.८४ ) एकः एकोऽपि शब्दः सम्यग्ज्ञातः प्रकृतिप्रत्यया-

लोके कामधुग्भवती" ति गुणवाक्यम्। (१)"तस्माद्ब्राह्मणेन न म्लेच्छितवै नाऽपभाषितवै, म्लेच्छो ह वा एष यदपशब्दः" इति दोषवाक्यम्। यथा प्रयोगे नियमः, तथा साधुत्वेऽपि नियमो द्रष्टव्यः—'गवाद्या एव साधवः, न तु गाव्यादयः' इति। अस्मिन्नर्थे व्याकरणस्य नियामकत्वात्। न च निर्मूलत्वम्, पूर्वपूर्वव्याकरणस्य तन्मूलत्वात्। एतदेवाऽभिप्रेत्योक्तम्—"तत्र यूपादिकरणवद्व्याकरणपरम्पराया अनादित्वादनुपालम्भः" इति। व्याकरणप्रामाण्यं वेदेनैव साक्षादुपन्यस्तम्। तथा चाऽऽथर्वणिका आमनन्ति(२)—"द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवाऽपरा च। तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषम्" इति। तैत्तिरीयब्राह्मणेऽपि व्याकरणस्योपादेयता श्रूयते—(३)"वाग्वै पराच्यव्याकृताऽवदत् ते देवा इन्द्रमब्रुवन्—इमां नो वाचं व्याकुर्विति·······तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्, तस्मादियं व्याकृता वागुद्यते" इति। व्याकर्तारश्च पाणिनिकात्यायनपतञ्जलयो मन्वादिसमानाः। तस्मात्साधूनामेव प्रयोगे गवादीनामेव साधुत्वे व्याकरणस्मृतिः प्रमाणम्।

अत्रैव गुरुमतमाह—

**अश्वालम्भनशास्त्रस्य दन्त्यतालव्यसंशयात्।**
**अमात्वेऽदन्त्यनिर्णीतिराप्तोक्तव्याकृतेर्बलात्॥ ३०॥**

"अश्वमालभेत" इत्यत्राऽकारवकारयोर्मध्यवर्तिनो वर्णस्य दन्त्यत्वे स्वं धनम्, तद्रहितं दरिद्रमालभेतेत्यर्थो भवति। तालव्यत्वे तुरङ्गमवाचित्वम्। ततः संशयादप्रामाण्यमिति चेत्—

**न;** व्याकरणानुसारेण "अशू व्याप्तौ" इत्यस्माद्धातोरौणादिके वप्रत्यये सति तालव्यत्वनिर्णयात्। तस्मादश्वालम्भनशास्त्रं प्रमाणम्॥

इति नवमं व्याकरणाधिकरणम्॥ ९॥

---

दिविभागज्ञानद्वाराऽवगतः, सुष्ठु प्रयुक्तः क्रियाकारकादियोजनया प्रयुक्तः, स्वर्गे लोके कामधेनुरिव अभिलषितानि फलानि ददातीत्यर्थः।

१. श. ब्रा. ३. २. १. १४. २. मु. उ. १. १. ४, ५.

३. (तै. सं. ६. ४ ७. ३.) ज्योतिष्टोमे ऐन्द्रवायवग्रहविधिसन्निधौ पठितोऽयमर्थवादस्तत्स्तुत्यर्थः। अस्याऽर्थस्सायणाचार्यैरेवंकृतः—"येयं वैदिकमन्त्ररूपा वाक् सा पूर्वं पराची समुद्रघोषवदैक्यरूपेण दण्डायमाना। तस्यां वाच्येतावदेकं वाक्यं, तस्मिन्वाक्येऽप्येतावदेकं पदं, तस्मिन् पदेऽपीयं प्रकृतिरयं प्रत्यय इत्येवं विभज्य सर्वतः करणं व्याकरणं तद्रहितत्वादव्याकृतैवाऽवदत् प्रवृत्ता। तामिन्द्रो मध्यतोऽवक्रम्य वाक्यपदादिरूपेण तत्र तत्र विच्छिद्य विभिन्नां कृतवान्" इति।

## अथ दशममाकृत्यधिकरणम् ॥ १० ॥

### ( लोकवेदाधिकरणम् , आकृत्यधिकरणोपोद्धातः )

(१)दशमाधिकरणे प्रथमं वर्णकमारचयति—

**लोके पदपदार्थौ यौ न तौ वेदेऽथवाऽत्र तौ ।**
**रूपभेदात्पदं भिन्नमुत्तानादिभिदा स्फुटा ॥ ३१ ॥**
**वर्णैकत्वात्पदैकत्वं क्वाचित्की रूपभिन्नता ।**
**प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम् ॥ ३२ ॥**

वैदिकौ पदपदार्थौ लौकिकाभ्यां पदपदार्थाभ्यामन्यौ । कुतः ? रूपभेदात् । पदे तावद्रूपभेदो दृश्यते । आत्मशब्द आकारादित्वेन लोके नियतः । वेदे तु क्वचिदाकाररहितः पठ्यते—"प्रयतं पुरुषं त्मना" इति । 'ब्राह्मणाः' इति लोके, वेदे त्वन्यथा पठ्यते—(२)"ब्रह्मणासः पितरः सोम्यासः" इति । अर्थभेदोऽपि स्फुटः । "उत्ताना वै देवगवा वहन्ति" इति श्रूयते । मनुष्यगवास्त्ववाञ्चो वहन्ति । वेदे वनस्पतिर्हिरण्यपर्णः । तथा च श्रूयते—(३)"देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थमि"ति । तस्मात् लोकवेदयोः पदपदार्थावन्याविति **प्राप्ते**—

ब्रूमः—य एव लौकिकाः पदार्थाः, त एव वैदिकाः । तथा हि—वर्णानां तावन्नित्यत्वं (४)प्रथमपादे साधितम् । यथा प्रयोक्तॄणां पुरुषाणां भेदेऽप्येकैकस्य पुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इति प्रत्यभिज्ञानाद्वर्णैक्यम् , तथा 'यानि लोके गवादिपदानि, तान्येव वेदेऽधीयमानानी' त्यबाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयम् । 'त्मना, देवासः' इत्यादिपदभेदस्तु क्वाचित्कः । नैतावता बहुतरप्रत्यभिज्ञावगतं पदैक्यमपोढुं शक्यम् । अन्यथा 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञातं देवदत्तैक्यमपि देशादिभेदमात्रेणाऽपोह्येत । पदैक्ये चाऽर्थैकत्वमवश्यंभावि । अन्यथा वेदे पृथग्व्युत्पत्त्यभावादबोधकत्वं प्रसज्येत । एतदेवाऽभिप्रेत्योक्तम्—

"लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः" इति ।

---

१. अस्याऽधिकरणस्य न पूर्वाधिकरणेन सङ्गतिः, किन्तूत्तराधिकरणेन ( आकृत्यधिकरणेन ) औपोद्घातिकी सङ्गतिर्द्रष्टव्या । अत एव भाष्यादौ व्याकरणाधिकरणानन्तरं तत्सङ्गतत्वादाकृत्यधिकरणाङ्गसन्देहमुपन्यस्य पश्चाल्लोकवेदाधिकरणं प्रवर्तितम् । अतश्च व्याकरणाधिकरणेन आकृत्यधिकरणस्य प्रासङ्गिकी सङ्गतिः, लोकवेदाधिकरणस्याऽऽकृत्यधिकरणेनोपोद्घातसङ्गतिरिति विवेको बोध्यः ।

२. ऋ. सं. ५. १. २० ५, तै. सं. ४. ६. ६. ४.

३. तै. ब्रा. ३. ६. ११. २.  ४. शब्दनित्यत्वाधिकरण इति शेषः ।

स्वरुयूपाहवनीयादिशब्दानां तदर्थानां चाऽलौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहाराद्व्युत्पत्तिः सम्भवति। उत्तानवहनादिकं त्वर्थवादः। अस्तु वा तथा वहनम्, तथाऽप्युत्तानादिशब्दास्तदर्थाश्च लोकसिद्धा एव। तस्माद्य एव लौकिकाः पदपदार्थास्त एव वैदिकाः॥

इति लोकवेदाधिकरणम्।

---

## ( आकृत्यधिकरणम् )

द्वितीयं वर्णकमारचयति—

**व्यक्तिर्व्रीह्यादिशब्दार्थ आकृतिर्वा क्रियान्वयात्।**
**व्यक्तिर्व्युत्पत्तिवेलायामाकृत्या सोपलक्ष्यते॥ ३३॥**
**शक्तिग्रहादियुक्तिभ्य आकृतेरर्थतोचिता।**
**क्रियापर्यवसानाय व्यक्तिस्तत्रोपलक्ष्यताम्॥ ३४॥**

"व्रीहीनवहन्ति" "पशुमालभेत" "गामानय" "ब्राह्मणो न हन्तव्यः" इत्यादिप्रयोगेषु व्रीह्यादिशब्दानां व्यक्तिरर्थः। कुतः? अवहननादिक्रियाभिर्व्यक्तेरन्वेतुं शक्यत्वात्। न ह्याकृतिरवहन्तुमालब्धुमानेतुं वा योग्या। नन्वानन्त्यव्यभिचाराभ्यां न व्यक्तौ व्युत्पत्तिः सम्भवति, अनन्ता हि व्यक्तयः, अतीतानागतानामनेकदेशवर्तिनां गवामियत्ताया अनवधारणात्। किञ्च शुक्लव्यक्तौ व्युत्पन्नो गोशब्दः कृष्णव्यक्तौ प्रयुज्यमानः स्वार्थं व्यभिचरेत्। तत्र कथं व्युत्पत्तिरिति चेत्? एवं तर्हि व्युत्पत्तिकाले सा व्यक्तिराकृत्योपलक्ष्यतामिति प्राप्ते—

**ब्रूमः**—अन्वयव्यतिरेकाभ्यामाकृतेः शक्तिग्रहणनिमित्तत्वाच्छब्दार्थत्वं तस्या एवोचितम्। किंच गोशब्द उच्चारिते व्यक्तिवादिनः संशयो भवेत्। तस्मादाकृतेरेवाऽभिधेयत्वम्। यद्याकृतावबहननादिक्रिया न पर्यवस्येत्, तर्हि व्यक्तिस्तत्रोपलक्षणीया। किंच(१) "श्येनचितं चिन्वीत" इत्यादावाकृतेरेव सादृश्यप्रतियोगितया कार्यान्वयो दृश्यते। तस्मात् आकृतिः शब्दार्थः॥

---

१. ( तै. सं. ५. ४. ११. ) 'कर्मणि हन' इत्यस्मात्सूत्रात्कर्मणीत्यधिकृत्य 'कर्मण्यग्न्याख्यायामि'ति सूत्रेण कर्मण्युपपदे कर्मणि च वाच्ये चिनोतेर्धातोः क्विप् प्रत्ययः। श्येनशब्दस्तत्सदृशे लाक्षणिकः। एवञ्च श्येन इव चीयत इति श्येनचित् अग्न्याधारस्थण्डिलविशेषः, तं चिन्वीत चयनेन सम्पादयेदिति वाक्यस्याऽर्थः।

अत्रैव गुरुमतमाह—

**गवादिचोदना नो मा, जातिव्यक्त्योरनिर्णयात् ।**
**आनन्त्यव्यभिचाराभ्यां न व्यक्तिरिति निर्णयः ॥ ३५ ॥**

**इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां प्रथमाध्यायस्य तृतीयः पादः ॥**

---

स्पष्टोऽर्थः ॥

इति दशममाकृत्यधिकरणम्॥ १० ॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥**

---

## अथ प्रथमाध्याये चतुर्थः पादः ॥

### प्रथमं नामधेयप्रामाण्याधिकरणम् ॥ १ ॥

(१) चतुर्थपादस्य प्रथमाधिकरणं (२) वार्तिककारोन्नीतमारचयति—

**उद्भिदादिपदं धर्मे किममानमुत प्रमा ।**
**विध्यर्थवादमन्त्रांशेष्वनन्तर्भावतो न मा ॥ १ ॥**

---

१. अत्रोद्भिदादिनामपदानां प्रामाण्याप्रामाण्यविचारात्प्रमाणाध्यायसङ्गतिः । पूर्वं पादत्रये विध्यादिवाक्यप्रामाण्यं निरूपितम्, इदानीं पदप्रामाण्यनिरूपणस्य चतुर्थपादार्थत्वादत्र नामपदानां प्रामाण्यं निरूप्यत इति पादसङ्गतिः । नामधेयानां पदरूपत्वेन क्वचिदपि स्मृतिमूलत्वाभावेन च श्रौतस्मार्तवाक्यप्रामाण्यविचारानन्तरं चतुर्थपादे प्रामाण्यविचारः कृतः । पूर्वाधिकरणसङ्गतिस्तु—पूर्वाधिकरणे जातिव्यक्त्योरवहननादिक्रियासु यथासम्भवमन्वय उपपादिते, उद्भिदादिशब्दार्थस्योभयथाऽपि क्रियान्वयो न सम्भवतीत्याक्षेपादाक्षेपिकी ।

२. अत्र भाष्यकारैः 'उद्भिदा यजेते' त्युदाहृत्य किमुद्भिदादिशब्दा गुणसमर्पकाः ? उत कर्मनामधेयानीति सन्दिह्य 'उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यादि'ति प्रथमसूत्रे पूर्वपक्षं कृत्वा 'अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वादि' त्युत्तरसूत्रेण नामधेयत्वं सिद्धान्तितम् । तदेतस्य विचारस्य प्रमाणाध्यायसङ्गतिर्न

**अन्तर्भावो विधावुद्भिदा यजेतेति दृश्यते ।**
**नामत्वेनाऽन्वयो वाक्ये वक्ष्यतेऽतः प्रमैव तत् ॥ २ ॥**

(१) "उद्भिदा यजेत" "बलभिदा यजेत" "विश्वजिता यजेत" इत्येवं समाम्नायते । तत्रोद्भिदादिपदं न धर्मे प्रमाणम् । कुतः ? प्रमाणत्वेनाऽभिमतेषु त्रिषु वेदविभागेष्वनन्तर्भावात् । तथा हि–विधिः साक्षात्प्रमाणम्, अर्थवादमन्त्रौ तु विध्यन्वयेन । तत्र न तावदुद्भिदादिपदं विधावन्तर्भवति, विध्यर्थरूपाया भावनाया अंशेषु भाव्यकरणेतिकर्तव्यतारूपेषु कस्याऽप्यवाचकत्वात् । नाऽप्यर्थवादत्वम्, स्तुतिबुद्धेरभावात् । नाऽपि मन्त्रत्वम्, उत्तमपुरुषादीनां मन्त्रलिङ्गानामभावात् । तथा चोक्तम्—

(२) "उत्तमामन्त्रणास्यन्तत्वान्तरूपाद्यभावतः ।
मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते" ॥ इति ।

(३) "अग्नये जुष्टं निर्वपामि" इत्युत्तमपुरुषः । (४) "अग्ने यशस्विन् यशसेमर्पय" इत्यामन्त्रणम् । (५)"उर्वी चासि वस्वी चासि" इत्यस्यन्तरूपम् । (६)"इषे त्वोर्जे त्वा" इति त्वान्तरूपम् । आदिशब्देन आशीर्देवताप्रतिपादनादयः । एवमाद्यनन्तर्भावादमानमिति **चेत्**—

**न**; विध्यंशे करणेऽन्तर्भावात् । यद्यपि लिङ्पदेन सह समानपदोपात्तो यजिधात्वर्थः करणम्, तथाऽपि तस्य यजेर्नामत्वेनोद्भिदादिपदमन्वेति । तस्मात्प्रमाणम् ॥

इति प्रथमं नामधेयप्रामाण्याधिकरणम् ॥ १ ॥

---

अथ द्वितीयमुद्भिदधिकरणम् ॥ २ ॥

(७) द्वितीयाधिकरणमारचयति—

**गुणोऽयं नामधेयं वा खनित्रेऽस्य निरुक्तितः ।**
**ज्योतिष्टोमं समाश्रित्य पश्वर्थं गुणचोदना ॥ ३ ॥**

---

स्यादिति मत्वा वार्तिककारैः प्रथमसूत्रेण गुणविधिनामधेयविचारोपोद्घाततया नामधेयानां प्रामाण्याप्रामाण्यं विचार्य, द्वितीयसूत्रेण गुणविधिनामधेयविचारः प्रवर्तितः । तदनुसृत्याऽत्राऽप्यधिकरणरचना क्रियत इति बोध्यम् ।

१. इमे सोमयागाः ताण्ड्यमहाब्राह्मणे एकोनविंशाध्याये विहिताः ।

२. शा. दी. १. ४. १. पृ. ५४. ३. तै. सं. १. १. ४. १.

४. तै. सं. १. १. ९. ३. ५. तै. सं. १. १. ९. ६. तै. सं. १. १. १.

७. पूर्वाधिकरणे उद्भिदादीनां धर्मप्रामाण्ये सिद्धेऽधुना प्रामाण्यविशेषचिन्ता क्रियत इत्युपजीव्योपजीवकभावसङ्गतिः ।

**फलोद्भिदात्समानैषा निरुक्तिर्यागनाम्न्यपि ।**
**नामत्वमुचितं यागसामानाधिकरण्यतः ॥ ४ ॥**

"उद्भिदा यजेत पशुकामः" इत्यत्र तृतीयान्तेनोद्भित्पदेन योऽर्थो विवक्षितः सोऽयं यागे कश्चिद्गुणः स्यात्। "दध्ना जुहोती" त्यनेन गुणविधिना समानत्वात्। अथोच्यते—दधिशब्दार्थो लोकप्रसिद्धः, उद्भिच्छब्दार्थस्त्वप्रसिद्ध इति। तन्न; रूढ्यभावेऽप्यवयवार्थनिरुक्त्या तत्प्रसिद्धेः। उद्भिद्यते भूमिरनेनेति व्युत्पत्त्या खनित्रवाच्यसौ शब्दः। न चाऽत्र पशुफलकः कश्चिद्यागो विधीयत इति वाच्यम्। पशूनां गुणफलत्वात्। यथा (१)"गोदोहनेन पशुकामस्ये" त्यत्र पशवो गोदोहनगुणस्य फलम्, तथेह खनित्रगुणस्य फलमस्तु। यदि(२)"चमसेनाऽपः प्रणयेत्" इति विहितं प्रकृतमपां प्रणयनमाश्रित्य गोदोहनं विधीयते, तर्ह्यत्राऽपि "ज्योतिष्टोमेन यजेते"ति विहितं प्रकृतं ज्योतिष्टोममाश्रित्य खनित्रं विधीयताम्। तस्माद्गुणविधिरिति **प्राप्ते**—

**ब्रूमः**—"पशुकामो यजेते" त्यस्य पदद्वयस्याऽयमर्थः—पशुरूपं फलं यागेन कुर्यादिति। तत्र केन यागेनेत्यपेक्षायां उद्भिदेति तृतीयान्तं पदं यागनामत्वेनाऽन्वेति। उद्भिद्यते पशुफलमनेन यागेनेति निरुक्त्या नामत्वमुद्भित्पदस्योपपद्यते। एवमपि गुणविधिनामधेयत्वयोः शब्दनिर्वचनसाम्यान्न निर्णय इति चेत्—मैवम्; सामानाधिकरण्यस्य निर्णायकत्वात्। 'उद्भिन्नामकेन यागेन फलं कुर्यात्' इत्युक्ते सामानाधिकरण्यं लभ्यते। गुणत्वे तु खनित्रेण साध्यो यो यागः, तेनेत्येवं वैयधिकरण्यं स्यात्। यदि 'खनित्रवता यागेने'ति सामानाधिकरण्यं योज्येत तदा मत्वर्थलक्षणा प्रसज्येत। तस्मादुद्भिदादिपदं नामधेयम्। 'दध्ना जुहोति' (३)'व्रीहिभिर्यजेत' इत्यादिषु द्रव्यविशेषे दध्यादिशब्दानामत्यन्तरूढतया यागनामत्वासंभवादगत्या गुणत्वमाश्रितम्। 'सोमेन यजेत'इत्यत्राऽपि अप्रसिद्धार्थनामधेयत्वकल्पनातो वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणमित्यभिप्रेत्य सोमद्रव्यवता यागेनेति मत्वर्थलक्षणा स्वीकृता। उद्भिच्छब्दस्य तु लोकप्रसिद्धार्थाभावादुक्तरीत्या नामत्वं युक्तम्।

प्रयोजनं तु—नाम्नः सर्वत्र व्यवहार एव। न ह्यन्तरेण नामधेयमृत्विग्वरणादिषु 'अनेनाऽहं यक्ष्य' इत्याख्यानोपायो लघुः कश्चिदस्ति। तस्मात् उद्भिदादिकं नामधेयम्।

---

१. (आप. श्रौ. १. १६. ३.) गौर्दुह्यतेऽस्मिन्निति गोदोहनम्। यस्मिन् पात्रे गृहे प्रतिदिनं गौर्दुह्यते तत्पात्रं गोदोहनशब्देनोच्यते। दर्शपूर्णमासयोः 'अपः प्रणयती' त्यनेन यद्विहितमपां प्रणयनं तत् गोदोहनाख्येन पात्रेण कुर्यादित्यर्थः।

२. चमसो नाम चतुरस्राकारस्समुष्टिकः प्रादेशमात्रो दारवः पात्रविशेषः।

३. आप. श्रौ. ६.३१.१३.

अत्रैव गुरुमतमाह—

**लौकिके गुणयागेऽस्य विधेः सापेक्षतेति चेत् ।**
**निरुक्त्या श्रौतयागस्य नामत्वान्निरपेक्षता ॥ ५ ॥**

'उद्भिदा यजेत'इत्ययं गुणविधिः । न चाऽस्य कश्चिच्छ्रौत आश्रयो लभ्यते । ततो लौकिको मातृगणयागादिराश्रयत्वेनाऽपेक्षणीयः । तस्मिन् यागे गुणोऽयं विधीयते । तथा सति सापेक्षत्वादप्रामाण्यमस्याश्चोदनाया इति चेत्—

**नैवम्**; पूर्वोक्तनिरुक्त्या श्रौतयागनामत्वे सति निरपेक्षत्वात् ॥

इति द्वितीयमुद्भिदधिकरणम् ॥ २ ॥

अथ तृतीयं चित्राधिकरणम् ॥ ३ ॥

(१)तृतीयाधिकरणमारचयति—

**यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत् ।**
**चित्रस्त्रीत्वगुणो रूढेरग्नीषोमीयके पशौ ॥ ६ ॥**
**द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः ।**
**स्यान्नाम पृष्ठाज्यबहिष्पवमानेषु तत्तथा ॥ ७ ॥**

(२)"चित्रया यजेत पशुकामः" इत्याम्नायते । तत्र चित्राशब्दो नोद्भिच्छब्दवद्यौगिकः, किन्तु रूढ्या चित्रत्वं स्त्रीत्वं चाऽभिधत्ते । ततो न पूर्वन्यायेन नामत्वम् । तथा सति "अग्नीषोमीयं पशुमालभेत" इति विहितं पशुयागमात्रं यजेतेत्यनेन पदेनाऽनूद्य तस्मिन् पशौ चित्रत्वस्त्रीत्वे गुणौ विधीयेते इति **प्राप्ते**—

**ब्रूमः**—चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ, तयोर्द्वयोर्विधाने(३)वाक्यं भिद्येत ।

---

१. उद्भिदादिपदस्य कर्मण्यपि सम्भवद्वृत्तिकत्वान्नामत्वसम्भवेऽपि चित्राज्यादिपदानां गुणादावेव रूढत्वात् दध्यादिपदवन्न नामत्वसंभव इति पूर्वपक्षोत्थानात्प्रत्युदाहरणसङ्गतिः । २. तै. सं. २. ४. ६. १.

३. 'चित्रया यजेत पशुकाम' इत्यत्र विधायकप्रत्यय एकः । विधेयौ च चित्रत्वं स्त्रीत्वञ्चेति द्वौ वर्तेते । एकेन च विधिना एक एव विधातुं शक्यते । अपरस्य विधानार्थं श्रुतप्रत्ययस्याऽऽवृत्तिः करणीया । तत्र 'न केवला प्रकृतिः प्रयोक्तव्या नाऽपि प्रत्यय' इति न्यायेन केवलप्रत्ययप्रयोगानुपपत्तेः प्रकृतिरप्यावर्तनीया । तथा च 'यजेत, यजेत' इति पदद्वयं निष्पन्नम् । तत्र पृथक्पृथक् विधेयसम्बन्धसिध्यर्थं चित्रयेति पदमप्यावर्तनीयम् । तथा सति विध्यावृत्तिलक्षणो वाक्यभेदस्स्यादित्यर्थः ।

तथाचोक्तम्—

(१) प्राप्ते कर्मणि नाऽनेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" ॥ इति ।

अथ वाक्यभेदपरिहाराय गुणद्वयविशिष्टं पशुद्रव्यरूपं कारकं विधीयते, तदा गौरवं स्यात् । तस्माच्चित्राशब्दः पूर्ववद्यजिसामानाधिकरण्येन यागनामधेयं भवति। चित्रत्वं च तस्य विलक्षणद्रव्यद्वारेणोपपद्यते । (२)"दधि, मधु, घृतं, आपः, धानाः, तण्डुलास्तत्संसृष्टं प्राजापत्यम्"इति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि षडाम्नातानि । तदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्यम् । यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात् । उत्पन्नस्य तस्य यागस्य 'चित्रया यजेत पशुकामः' इत्येतत्फलवाक्यम् । एवं सति प्रकृतार्थो लभ्यते । अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् । लिङ्प्रत्ययस्याऽनुवादकत्वाङ्गीकारान्मुख्यो विध्यर्थो बाध्येत । तस्माच्चित्रापदं नामधेयम् ।

यथा चित्राशब्दे नामधेयत्वम् , तथा बहिष्पवमानशब्दे, पृष्ठशब्दे च तन्नामधेयत्वं योजनीयम् । एवं हि श्रूयते—(३)"त्रिवृद्बहिष्पवमानम् , पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानी"ति । अस्य वाक्यत्रयस्याऽर्थो विव्रियते—सामगानामुत्तराग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि । तत्र (४)"उपास्मै गायता नरः"इत्याद्यं सूक्तम् ।

१. तं. वा. २. २. ३. पृ. ४८५.　　　　२. तै. सं. २. २. ३. ८.

३. ( तां. ब्रा. २०. १. १. ) ज्योतिष्टोमे सन्ति द्वादश स्तोत्राणि—बहिष्पवमानमेकम्, चत्वार्याज्यस्तोत्राणि, चत्वारि पृष्ठानि, माध्यन्दिनपवमानमेकम्, आर्भवपवमानमेकम्, यज्ञायज्ञीयमेकमिति । स्तोत्रं नाम प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम् । तदिदं स्तोत्रं सदोनामकमण्डपे औदुम्बर्याख्यस्थूणासमीपे उपविष्टैरुद्गातृप्रस्तोतृप्रतिहर्त्राख्यैस्त्रिभिः ऋत्विग्भिः कर्तव्यत्वेन विहितम् । तत्रैकैकस्य च स्तोत्रस्य 'एकं साम तृचे क्रियते स्तोत्रीयमि'ति विधिबलात् तिसृषु ऋक्षु एकं साम गातव्यं भवति । तत्र च त्रिवृत् , पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंश इति नव प्रकारास्संख्याविशेषा उक्ताः । इम एव संख्याविशेषाः स्तोमशब्देनाऽभिधीयन्ते । तत्र बहिष्पवमानाख्यं स्तोत्रं परं "बहिष्पवमानꣳ सर्पन्ती" ( तां. ब्रा. ६. ७. ९. ) ति विधिना सदसो बहिः चात्वालदेशं प्रति प्रसर्पणसमये कर्तव्यत्वेन विहितम् । अत एवाऽस्य स्तोत्रस्य बहिस्सम्बन्धात् पवनक्रियाकर्तृप्रकाशकमन्त्रघटितत्वाच्च बहिष्पवमानमिति संज्ञा । तथा च बहिष्पवमानाख्यं स्तोत्रं त्रिवृत्स्तोमकं कर्तव्यमिति वाक्यार्थः पर्यवसन्नः ।

४. उपास्मै गायता नरः पवमानायेन्दवे । अभि देवां इयक्षते ॥ १ ॥
अभि ते मधुना पयाऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥ २ ॥
सनः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ ३ ॥
सा. सं. उ. १. १. १.

(१)"दविद्युतत्या रुचा"इति द्वितीयम् । (२)"पवमानस्य ते कवे" इति तृतीयम् । ज्योतिष्टोमस्य प्रातस्सवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम् । तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते, तत्राऽवस्थितानामृचां पवमानार्थत्वात् , बहिस्सम्बन्धाच्च । न खल्विदं स्तोत्रमितरस्तोत्रवत्सदोनामकस्य मण्डपस्य मध्य औदुम्बर्याः स्तम्बशाखायास्सन्निधौ प्रयुज्यते, किन्तु सदसो बहिःप्रसर्पद्भिः प्रयुज्यते । तस्य च बहिष्पवमानस्य त्रिवृन्नामकः स्तोमो भवति । तस्य च स्तोमस्य विधायकं ब्राह्मणवाक्यमेवमाम्नायते-(३)"तिसृभ्यो हिंकरोति स प्रथमया,तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिङ्करोति स उत्तमया, उद्यती त्रिवृतो विष्टुतिः" इति । अयमर्थः-सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्तव्यम् । तत्र प्रथमे पर्याये-त्रिषु सूक्तेष्वाद्यास्तिस्र ऋचः, द्वितीये पर्याये-मध्यमाः, तृतीये पर्याये चोत्तमाः । तिसृभ्य इति तृतीयार्थे पञ्चमी । हिंकरोति गायतीत्यर्थः । सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य (४)विष्टुतिः स्तुतिप्रकारविशेषः । अस्या विष्टुतेरुद्यती नाम इति । एवं परिवर्तिनी कुलायिनीति द्वे विष्टुती । तयोःपरिवर्तिन्येवमाम्नायते-(५) "तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिंकरोति स पराचीभिः, तिसृभ्यो हिंकरोति स पराचीभिः,परिवर्तिनी त्रिवृतो विष्टुति"रिति । पराचीभिरनुक्रमेणाऽऽम्नाताभिरित्यर्थः । कुलायिन्येवमाम्नायते—(६)"तिसृभ्यो हिंकरोति स पराचिभिस्तिसृभ्यो हिंकरोति, या मध्यमा सा प्रथमा, योत्तमा सा मध्यमा, या प्रथमा सोत्तमा, तिसृभ्यो हिं करोति योत्तमा सा प्रथमा, या प्रथमा सा मध्यमा, या मध्यमा सोत्तमा, कुलायिनी त्रिवृतो विष्टुतिः" इति । अत्र प्रथमसूक्ते पाठक्रम एव । द्वितीये मध्यमोत्तमप्रथमाः । तृतीये तूत्तमप्रथममध्यमा इत्येवं व्यत्ययेन मन्त्रा गातव्याः । तदिदं विष्टुतित्रयं विकल्पितम् । त्रिवृच्छब्दस्येदृशं स्तोमस्वरूपमर्थो, न तु त्रैगुण्यमिति (७)पूर्वपादे निर्णीतम् ।

---

१. दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाश्शुक्रा गवाशिरः ॥ १ ॥
हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा ॥ २ ॥
ऋधक्सोम स्वस्तये सञ्जग्मानो दिवा कवे । पवस्व सूर्यो दृशे ॥ ३ ॥
सा. सं. उ. १. १. २.

२. पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत । अर्वन्तो न श्रवस्यवः ॥ १ ॥
अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशन्त धीतयः ॥ २ ॥
अच्छा समुद्रमिन्दवो ऽस्तं गावो न धेनवः । अग्मन्नृतस्य योनिमा ॥ ३ ॥
सा. सं. उ. १. १. ३.

३. तां. ब्रा. २. १. १. ४. विष्टुतिः स्तुतिः स्तुतिप्रकारविशेष इति. ख. पु.
५. तां. ब्रा. २. २. १. ६. तां. ब्रा. २. ३. १.
७. त्रिवृच्चर्वैश्ववालाधिकरण इति शेषः ।

उत्तराग्रन्थे बहिष्पवमानसूक्तेभ्यस्त्रिभ्य ऊर्ध्वं चत्वारि सूक्तान्याम्नातानि(१)"अग्न आ याहि वीतये" इत्याद्यं सूक्तम्। (२)"आ नो मित्रावरुणे"ति द्वितीयम्। (३)"आ याहि सुषुमा हि ते" इति तृतीयम्। (४)"इन्द्राग्नी आ गतं सुतमि"ति चतुर्थम्। तान्येतानि प्रातस्सवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते। तन्निर्वचनं च श्रूयते–(५)"यदाजिमीयुः तदाज्यानामाज्यत्वमि"ति। तेष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति। तस्य स्तोमस्य विष्टुतिरेवमाम्नायते–(६)"पञ्चभ्यो हिंकरोति स

---

१. अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि ॥ १ ॥
तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्या ॥ २ ॥
स नः पृथु श्रवाय्यमच्छा देव विवाससि। बृहदग्ने सुवीर्यम् ॥ ३ ॥
सा. सं. उ. १. १. ४.

२. आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजांसि सुक्रतू ॥ १ ॥
उरुशंसा नमो वृधा मह्ना दक्षस्य राजथः। द्राघिष्ठाभिश्शुचिव्रता ॥ २ ॥
गृणाना जमदग्निना योनावृतस्य सीदतम्। पातं सोममृता वृधा ॥ ३ ॥
सा. सं. उ. १. १. ५.

३. आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिस्सदो मम ॥ १ ॥
आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना। उप ब्रह्माणि नः शृणु ॥ २ ॥
ब्रह्माणस्त्वा युजा वयं सोमपामिन्द्र सोमिनः। सुतावन्तो हवामहे ॥ ३ ॥
सा. सं. उ. १. १. ६.

४. इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता ॥ १ ॥
इन्द्राग्नी जरितुस्सचा यज्ञो जिगाति चेतनः। अया पातमिमं सुतम् ॥ २ ॥
इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृम्पताम् ॥ ३ ॥
सा. सं. उ १ १. ७.

५. "प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत्तेऽन्योन्यस्मा अग्राय नाऽतिष्ठन्त, तानब्रवीदाजिमस्मिन्नितेति। त आजिमायन्, यदाजिमीयुः तदाज्यानामाज्यत्वम्" (तां. ब्रा. ७. २. १.) इति समग्रं वाक्यम्। अस्याऽयमर्थः—पुरा कदाचित्प्रजापतिरात्मीयं स्वरूपमेवाऽग्निष्टोमात्मकं यज्ञं विधाय तं यज्ञं देवेभ्यो भोगार्थं प्रायच्छत्। ततो देवास्तत्र यज्ञे हविर्भागग्रहणे स्वेषु कस्य प्राथम्यमिति निर्णेतुमशक्नुवन्तः पुनस्तमेवाऽपृच्छन्—कस्याऽत्र प्रथमो भागोऽस्त्विवति। स च प्रजापतिरिमानि सूक्तानि तेभ्यः प्रदर्श्य, इमान्यवधिं कृत्वा प्रधावत। युस्मासु यः प्रथममिमानि प्राप्नोति स एव प्रथमं भागमर्हतीत्यवदत्। तेन च स्तोत्राणाममीषामाज्यनाम सम्पन्नम्। आजिः अवधितया निर्देशः, तमर्हतीत्याज्यमिति।

६. (तां. ब्रा. २. ८. १.) अत्र सर्वत्र गानकाले गणनार्थं तासु तासु विष्टुतिषु विभिन्नप्रकारतया कुशा निक्षिप्यन्ते। उदुम्बरवृक्षीयः प्रादेशमात्रः काष्ठविशेषो

तिसृभिः स एकया स एकया, पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिङ्करति स एकया स एकया स तिसृभिः"इति । एकं सूक्तं त्रिरावर्तनीयम् । तत्रप्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्तावुत्तमायाः । सोऽयं पञ्चदशस्तोमः ।

उक्तेभ्यश्चतुर्भ्यः सूक्तेभ्य ऊर्ध्वमुत्तराग्रन्थे त्रीणि माध्यन्दिनपवमानसूक्तान्याम्नाय तत ऊर्ध्वं च चत्वारि सूक्तान्याम्नातानि । तेषु(१)"अभि त्वा शूर नोनुम"इत्याद्यम् । (२)"कया नश्चित्र आभुवदि"ति द्वितीयम् । (३)"तं वो दस्ममृतीषहम्" इति तृतीयम् ।(४)"तरोभिर्वो विदद्वसुमि"ति चतुर्थम् । एतानि क्रमेण रथन्तरवामदेव्यनौधसकालेयसामभिर्माध्यन्दिनसवने गीयमानानि पृष्ठस्तोत्राणीत्युच्यन्ते (५)"स्पर्शनात्पृष्ठानि" इत्येवं निरुक्तिर्द्रष्टव्या । तेषु स्तोत्रेषु सप्तदशस्तोमो भवति । तस्य स्तोमस्य

---

लघुकायः कुशशब्देनोच्यते । तन्निक्षेपणप्रकारश्चाऽस्मत्पूज्यपादैः स्वसम्पादितताण्ड्य महाब्राह्मणभूमिकायां ३ पृष्ठे चित्ररूपेण दर्शितः, तत एव सोऽवगन्तव्यः ।

१. अभि त्वा शूर नोनुमो दुग्धा इव धेनवः ।
ईशानमस्य जगतस्स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥
न त्वा वामन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ २ ॥
सा. सं. उ. १. १. ११.

२. कया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता ॥ १ ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढाचि दारुजे वसु ॥ २ ॥
अभीषुणस्सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥ ३ ॥
सा. सं. उ. १. १. १२.

३. तं वोदस्म मृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्हवामहे ॥ १ ॥
द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे ॥ २ ॥
सा. सं. उ. १. १. १३.

४. तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।
बृहद्गायन्तस्सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ १ ॥
न यंदुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
यं आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ २ ॥
सा. सं. उ. १. १. १४.

५. ताण्ड्यमहाब्राह्मणे "आपो वा ऋत्व्यमार्च्छन् तासां वायुः पृष्ठे व्यवर्तत"

विष्टुतेरेवमाम्नायते–(१)"पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः" इति । अत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ मध्यमोत्तमयोः । सोऽयं सप्तदशस्तोमः । अत्र त्रिष्वपि वाक्येषु त्रिवृत्पञ्चदशसप्तदशशब्दा गुणविधायकत्वेन संमताः । यदि बहिष्पवमानाज्यपृष्ठशब्दा अपि गुणविधायकाः स्युः, तदा प्रत्युदाहरणम् । गुणद्वयविधानाद्वाक्यभेदः स्यात् । तस्माद्बहिष्पवमानादिशब्दास्स्तोत्रनामधेयानि । तैर्नामभिः कर्माण्यनूद्य त्रिवृदादिगुणा विधीयन्ते ॥

इति तृतीयं चित्राधिकरणम् ॥ ३ ॥

अथ चतुर्थं तत्प्रख्याधिकरणम् ॥ ४ ॥

(२)चतुर्थाधिकरणमारचयति—

**अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू ।**
**विधेयौ गुणसंस्कारावाहोस्वित्कर्मनामनी ॥ ८ ॥**

---

( तां. ब्रा. ७. ८. १. ) इत्यार्तवयुक्तानामपां पृष्ठे वायोः स्पर्शनाद्वामदेव्याख्यसामोत्पत्तिमभिधाय तस्माच्च पृष्ठस्तोत्राणां उत्पत्तिरभिहिता । ततश्च स्पर्शाज्जन्यत इति पृष्ठमिति निरुक्तिः । अत्रेदमवधेयम्–अत्रैव ताण्ड्यमहाब्राह्मणे–'तावब्रूतां वामं मर्ता इदं देवेष्वजनीति तस्माद्वामदेव्यम्' ( ताण्ड्य. ७. ८. १. ) ( तौ मित्रावरुणौ कथयतां–हे मर्त्याः इदं साम देवेषु वामं प्रार्थनीयमजनि, यस्मादेवं तस्माद्वामदेव्यं ) इति वामदेव्यशब्दव्युत्पत्तिरभिहिता। एवं 'यदकालयन्त तस्मात्कालेयम्' (तां. ब्रा. ८. ३. १. यस्माद्देवा असुरानेभ्यो लोकेभ्योऽकालयन्त अपानुदन् तस्मादिदं साम कालेयमित्युच्यते ) इति कालेयशब्दनिरुक्तिरुक्ता । भगवता पाणिनिमहर्षिणा तु–'दृष्टं सामे' त्यधिकृत्य 'कलेर्ढक्' ( पा. सू. ४. २. ८. ) कलिना ( ऋषिणा ) दृष्टं कालेयं साम, 'वामदेवाड्ड्यड्ड्यौ' वामदेवेन ( ऋषिणा ) दृष्टं वामदेव्यमिति कालेयवामदेव्यशब्दौ निरुक्ताविति ।

१. तां. ब्रा. २. ७. १.

२. 'अग्निहोत्रं जुहोती' त्यादौ पूर्वाधिकरणाभिहितवाक्यभेदापादकगुणविधित्वनिराकरणहेतोरभावेनाऽग्निहोत्रादिपदानां गुणसमर्पकत्वमेवाऽस्त्विति पूर्वपक्षोत्थानात्प्रत्युदाहरणसंगतिः ।

अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः ।
गुणो विधेयो नामत्वे रूपं न स्यात्क्षरद्घृते ॥ ९ ॥
संस्क्रियाऽऽघारमाघारयतीत्युक्ता द्वितीयया ।
आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी ॥ १० ॥
अग्निर्ज्योतिरिति प्रोक्तो मन्त्राद्देवस्तथा घृतम् ।
चतुर्गृहीतवाक्योक्तं, द्वितीयायास्त्वियं गतिः ॥ ११ ॥
नाऽसाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा ।
साध्यतां वक्ति संस्कारो नैवाऽऽशङ्क्यः क्रियात्वतः ॥ १२ ॥

(१)"अग्निहोत्रं जुहोति" (२)"आघारमाघारयती" त्यत्राऽग्निहोत्रशब्दस्य कर्मनामत्वे द्रव्यदेवतयोरभावाद्यागस्य स्वरूपमेव न सिध्येत् । तस्मादग्निदेवतारूपो गुणोऽनेन दर्विहोमे विधीयते । आघारशब्दश्च "घृ क्षरणदीप्त्योः" इत्यस्माद्धातोरुत्पन्नः क्षरद्घृतमाचष्टे । तस्मिंश्च घृते द्वितीयाविभक्त्या संस्कार्यत्वं प्रतीयते । तच्च संस्कृतं घृतमुपांशुयाजे द्रव्यं भवति । तस्मात् अग्निहोत्राघारशब्दौ गुणसंस्कारयोर्विधायकाविति प्राप्ते—

ब्रूमः–(३)"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति" (४) "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः" इति विहितेन मन्त्रेण प्राप्तत्वाद्देवता न विधेया । ततोऽग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेनाऽनुष्ठेयस्य कर्मणः 'अग्निहोत्रम्" इति यौगिकं नामधेयम् । योगश्च बहुव्रीहिणा दर्शितः । "चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्य" इत्यनेनैवाऽऽज्यद्रव्यस्य प्राप्ततया क्षरद्घृतसंस्कारस्याऽविधेयत्वादाघारशब्दोऽपि यौगिकं कर्मनामधेयम् । (५)यस्मिन् कर्मणि नैर्ऋतीं दिशमारभ्यैशानीं दिशमवधिं कृत्वा संतत्या घृतं क्षार्यते तस्य कर्मण एतन्नाम । ननु नामधेयत्वे सति "उद्भिदा यजेत" "ज्योतिष्टोमेन यजेत" इत्यादाविव धात्वर्थेन करणेन सामानाधिकरण्याय 'अग्निहोत्रेण जुहोति' 'आघारेणाऽऽघारयति' इति तृतीयया भवितव्यम् । नैष दोषः;

---

१. ( तै. सं. १. ५. ९. १. ) अग्निहोत्रसंज्ञकेन होमेनेष्टं भावयेदिति सिद्धान्ते वाक्यार्थः ।

२. ( तै. ब्रा. ३ ३. ७. ) दर्शपूर्णमासप्रकरणस्थमिदं वाक्यम् । आघारसंज्ञकेन कर्मणा दर्शपूर्णमासोपकारं भावयेदिति वाक्यार्थः ।

३. तै. ब्रा. २. १. २. ४. तै. ब्रा. २. १. २.

५. इदञ्च तैत्तिरीयशाखानुसारेण । वाजसनेयिशाखानुसारेण तु प्रयाजार्थं जुह्वां गृहीतमाज्यं पश्चिमतो यावत्प्राचीं दिशं ऋजुमविच्छिन्नं वारद्वयमग्नौ क्षारयेत् इति विशेषः ।

अनुष्ठानादूर्ध्वं धात्वर्थस्य सिद्धत्वाकारेण करणत्वेऽपि ततः पूर्वं साध्यत्वाकारं वक्तुं 'अग्निहोत्रम्' 'आघारम्' इति द्वितीयाया युक्तत्वात् । न चाऽत्र द्वितीयानुसारेण 'व्रीहीन् प्रोक्षती' त्यादाविव संस्कारः शङ्कनीयः । व्रीहिशब्दवदग्निहोत्राघारशब्दयोःप्रसिद्धद्रव्यवाचकत्वाभावेन क्रियावाचित्वाभ्युपगमात् । तस्मात् अग्निहोत्राघारशब्दौ दर्विहोमोपांशुयाजयोर्गुणसंस्कारविधायिनौ न भवतः, किंतु कर्मान्तरयोर्नामनी ॥

इति चतुर्थं तत्प्रख्याधिकरणम् ॥ ४ ॥

## अथ पञ्चमं तद्व्यपदेशाधिकरणम् ॥ ५ ॥

(१)पञ्चमाधिकरणमारचयति—

**श्येनेनाऽभिचरन्मर्त्यो यजेतेति श्रुतौ गुणः ।**
**विधीयते पक्षिरूपो नाम वा तस्य कर्मणः ॥ १३ ॥**
**श्येनेनेति गुणः काम्यः सौमिकः सोमबाधया ।**
**न चित्रावद्वाक्यभेदो रूढेश्चैवमनुग्रहः ॥ १४ ॥**
**यथा वै श्येन इत्युक्त्या ह्युपमानोपमेयता ।**
**नैकस्मिंस्तेन गौण्याऽस्य वृत्त्या स्यात्कर्मनामता ॥ १५ ॥**

(२)"श्येनेनाऽभिचरन्यजेत"इत्यत्र कर्मनामत्वे द्रव्यदेवतयोरभावाद्यागस्वरूपमपि न सिध्येत् । ततस्सोमयागे नित्यं सोमद्रव्यं बाधित्वा सोमस्य स्थाने पक्षिद्रव्यरूपो गुणः काम्यो विधीयते । तथा सति श्येनशब्दस्य पक्षिणि लोकसिद्धा रूढिरनुगृह्यते । न च गुणविधित्वे चित्रायामिव वाक्यभेद आपादयितुं शक्यः । चित्रत्वस्त्रीत्ववद्गुणद्वयाभावादिति **प्राप्ते**—

**ब्रूमः**—(३) "यथा वै श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्या-

---

१. अत्र पूर्वाधिकरणप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात्प्रत्युदाहरणसङ्गतिः ।

२. (षड्वि.ब्रा. प्र. ३. खं. ८.)अभिपूर्वकचरधातोर्वैरिमरणानुकूलो व्यापारोऽर्थः । तदुत्तरं श्रूयमाणशतृप्रत्ययो हेत्वर्थकः । हेतुश्चाऽत्र फलरूपो विवक्षितः । एवञ्च श्येनसंज्ञकेन यागेन वैरिमरणानुकूलव्यापाररूपाभिचाररूपं फलं भावयेदिति विषयवाक्यार्थः ।

३. यथा वा श्येनाख्यः पक्षी वियति डयमानो भूमौ विद्यमानं पदार्थमवलोक्य सहसा निपत्य गृह्णाति, तथेदमपि श्येनाख्यं कर्म भ्रातृव्यं शत्रुं सहसा निपत्य गृह्णातीत्यर्थः । एवञ्च 'यथावे' त्यर्थवादस्थस्य श्येनपदस्य पक्षिविशेषवाचित्वम् । 'श्येनेना-

ऽऽदत्ते यमभिचरति श्येनेने"ति वाक्येनोक्त उपमानोपमेयभावः पक्षिण्येकस्मिन्न युज्यते । तस्मात्पक्षिण उपमानस्य गुण उपमेये कर्मण्यस्तीति श्येनशब्दस्याऽभिचारकर्मनामत्वम् । (१)"सन्दंशेनाऽभिचरन्यजेत" "(२)गवाऽभिचर्यमाणो यजेत" इत्यत्र सन्दंशगोशब्दयोर्नामत्वं श्येनशब्दवद्द्रष्टव्यम् । (३)"यथा सन्दंशेन दुरादानमादत्ते" (४)"यथा गावो गोपायन्ति" इति वाक्यशेषाभ्यामुपमानोपमेयभावाभिधानात् ॥

इति पञ्चमं तद्व्यपदेशाधिकरणम् ॥ ५ ॥

---

अथ षष्ठं वाजपेयाधिकरणम् ॥ ६ ॥

(५)षष्ठाधिकरणमारचयति—

**यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः ।**
**नाम वा, गुणता तन्त्रयोगाद्गुणफलद्वये ॥ १६ ॥**
**साधारणयजेः कर्मकरणत्वेन तन्त्रता ।**
**त्रिकद्वयं विरुद्धं स्यात्तन्त्रतायां फलं प्रति ॥ १७ ॥**
**उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः ।**
**उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ॥ १८ ॥**

---

ऽभिचरन्नि"ति विधिवाक्यस्थश्येनपदस्य कर्मवाचित्वम् । तच्च कर्म सोमयागविशेषरूपमिति विवेक्तव्यम् ।

१. (षड्विं.ब्रा. ३. १०.)सन्दंशसंज्ञकेन यागेन शत्रुवधरूपं फलं भावयेदित्यर्थः ।

२. अभिचर्यमाणः वैरिणा मार्यमाणः गवा तत्संज्ञकेन यागेन स्वसंरक्षणं सम्पादयेदित्यर्थः ।

३. सन्दंशशब्दश्च सन्दश्यते पार्श्वद्वये निपीड्य दुरादेयं तप्तायोगोलकादिकं परिगृह्यते अनेनेति व्युत्पत्त्या दुरादेयादानसाधनविशेषे ( संडसीति हिन्दीभाषायां ) प्रसिद्धः । यथा चैतादृशसाधनविशेषेण सन्दंशेन दुरादेयं वस्तु पुरुषः गृह्णाति, एवमनेनाऽपि सन्दंशाख्येन क्रतुना दुरादेयं शत्रुमादत्ते यजमान इत्यर्थः ।

४. यथा वा गावः परकृताभिघातात्स्ववत्सान् पालयन्ति, एवमयमपि गोसंज्ञकः क्रतुः परकृतादभिचारात् यजमानं पालयतीत्यर्थः ।

५. अत्रोद्भिदाद्यधिकरणचतुष्टयोक्तमत्वर्थलक्षणादिदोषा आक्षिप्य समाधीयन्त इत्याक्षेपिकी सङ्गतिः ।

**त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः ।**
**वाजपेयेति शब्दोऽपि कर्मनामाऽग्निहोत्रवत् ॥ १९ ॥**

(१)"वाजपेयेन स्वाराज्यकामो यजेत"त्यत्र वाजपेयशब्देन गुणो विधीयते । अन्नवाची वाजशब्दः । तच्चाऽन्नं पेयं सुराद्रव्यम् । तच्चाऽत्र गुणः, सुराग्रहाणामनुष्ठेयत्वात् । ननु गुणत्वे वाजपेयगुणवता यागेन स्वाराज्यं भावयेत् इति मत्वर्थलक्षणा प्रसज्येत । मैवम्; सकृदुच्चरितस्य यजेत इत्याख्यातस्य वाजपेयगुणे स्वाराज्यफले च तन्त्रेण सम्बन्धाङ्गीकारात् । वाजपेयेन द्रव्येण स्वाराज्याय यजेत इत्येवमुभयसम्बन्धः । ननु गुणसम्बन्धे सति वाजपेयगुणेन यागं कुर्यात् इति यजेः कर्मकारकत्वं भवति, फलसम्बन्धे तु यागेन स्वाराज्यं सम्पादयेत् इति करणकारकत्वम्, ततः कथं तदुभयसम्बन्ध इति चेत्? नाऽयं दोषः; यजेस्साधारणत्वेन द्विरूपत्वसम्भवात् । यजेत इत्यत्र प्रकृत्या याग उक्तः, प्रत्ययेन भावनोक्ता । तयोस्तु समभिव्याहारात्सम्बन्धमात्रं गम्यते । तच्च कर्मत्वकरणत्वयोः साधारणम् । न खलु तत्र कर्मत्वस्य करणत्वस्य वा साक्षादभिधायिका काचिदसाधारणी विभक्तिः श्रूयते । अतः साधारणस्य यजेरुभाभ्यां युगपत्सम्बन्धे सति यथोचितसम्बन्धविशेषः पर्यवस्यति । एवं तन्त्रेण सम्बन्धाङ्गीकारे वाजपेयद्रव्येण यागं कुर्यात् इत्यर्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि नाऽस्ति मत्वर्थलक्षणा । यद्युद्भिदादिष्वप्येवं गुणविधिः स्यात्, तर्हि तान्यपि वाक्यान्यत्रोदाहृत्य तदीयस्सिद्धान्तः पुनराक्षिप्यतामिति **प्राप्ते**—

**ब्रूमः**—यजेस्तन्त्रेणोभयसम्बन्धे सति विरुद्धत्रिकद्वयापत्तिः स्यात् । उपादेयत्वं, विधेयत्वं गुणत्वं, चेत्येकं त्रिकम् । उद्देश्यत्वम्, अनुवाद्यत्वं, मुख्यत्वं चेत्यपरं त्रिकम् । तत्रोद्देश्यत्वादयस्त्रयः स्वाराज्यफलनिष्ठा धर्माः । उपादेयत्वादयस्त्रयः साधनभूतयजिनिष्ठा धर्माः । फलमुद्दिश्य यजिरुपादीयते । फलमनूद्य यजिर्विधीयते । फलं प्रधानम् । यजिरुपसर्जनम् । फलस्योद्देश्यत्वं नाम मानसापेक्षो विषयत्वाकारः । यजेरुपादेयत्वं नामाऽनुष्ठीयमानताकारः । तावुभौ मनश्शरीरोपाधिकौ धर्मौ । अनुवाद्यत्वविधेयत्वधर्मौ तु शब्दोपाधिकौ । ज्ञातस्य कथनमनुवादः । अज्ञातस्याऽनुष्ठेयत्वकथनं विधिः । फलयागयोः साध्यसाधनत्वरूपतया प्रधानत्वोपसर्जनत्वे । एवं सति फलतत्साधनयोः स्वाराज्ययागयोः स्वभावपर्यालोचनायां यथा फलस्योद्देश्यत्वादित्रिकं, यागस्योपादेयत्वादित्रिकं व्यवतिष्ठते, तथा यागस्य वाजपेयद्रव्यस्य च साध्यसाधनभावपर्यालोचनायां यागस्योद्देश्यत्वादित्रिकम्, वाजपेयद्रव्यस्योपादेयत्वादित्रिकं च पर्यवस्यति । ततो यागस्य फलद्रव्याभ्यां युगपत्सम्बन्धे सति विरुद्धं त्रिकद्वयमापद्यते । ननु तर्हि मा भूत्तन्त्रेणोभयसम्बन्धः, पृथक्सम्बन्धाय यजिरावर्त्यतामिति चेत्—न; वाक्यभेद-

---

१. वाजपेयाख्येन सोमयागेन स्वाराज्यरूपं फलं भावयेदित्यर्थः ।

प्रसङ्गात् । द्रव्येण यागं कुर्यात् इत्येकं वाक्यम् , यागेन फलं कुर्यात् इत्यपरम् । तस्माद्वाजपेयशब्दो न गुणविधायकः, किन्तु यथोक्तं द्रव्यं निमित्तीकृत्याऽग्निहोत्रशब्दवत्कर्मनामधेयम् ॥

इति षष्ठं वाजपेयाधिकरणम् ॥ ६ ॥

---

### अथ सप्तमाग्नेयाधिकरणम् ॥ ७ ॥

(१)सप्तमाधिकरणमारचयति—

**यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथवा ।**
**नामाऽग्निहोत्रवत्, मैवं; नामत्वे देवता न हि ॥ २० ॥**
**मन्त्रोऽपि नेह प्रत्यक्षस्तद्धितादेवताविधिः ।**
**देवद्रव्यविशिष्टस्य विधानादेकवाक्यता ॥ २१ ॥**

दर्शपूर्णमासयोः श्रूयते—(२) "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"ति । तत्र यथाऽग्निहोत्रशब्दः 'अग्नये होत्रमत्रे' त्यमुमर्थं निमित्तीकृत्य कर्मनामधेयम् , तथाऽऽग्नेयशब्दोऽग्निसम्बन्धं निमित्तीकृत्य कर्मनाम स्यादिति चेत्—

**मैवम् ,** नामत्वे देवताराहित्यप्रसङ्गात् । अग्निहोत्रे तु (३)"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती" त्यनेन वचनेन मन्त्रः प्रत्यक्षविहित इति मान्त्रवर्णिकी देवता लभ्यते । इह तु न तादृशो मन्त्रोऽस्ति । आग्नेयशब्दस्तु देवतां विधातुं शक्नोति । 'अग्निर्देवताऽस्ये' इत्यस्मिन्नर्थे तद्धितस्योत्पन्नत्वात् । न च द्रव्यदेवतयोरुभयोर्गुणविधानाद्वाक्यभेद इति शङ्कनीयम् । कर्मणोऽप्राप्तत्वेन गुणद्वयविशिष्टस्य कर्मण एकेन वाक्येन विधानात् । तस्मादाग्नेयशब्देन देवतागुणो विधीयते ॥

---

१. एवं तावन्निमित्तचतुष्टयात्सार्वत्रिकं नामधेयत्वमाक्षेपसमाधानाभ्यां साधितम् । अधुना तदपवादः प्रस्तूयत इत्यापवादिकी सङ्गतिः ।

२. ( तै. सं. २. ६. ३. ) अग्निर्देवता अस्येत्याग्नेयः, अष्टसु कपालेषु संस्कृतः पुरोडाशः अष्टाकपालः । स चाऽयमग्निदेवताकपुरोडाशद्रव्यको यागः दर्शात् पूर्णमासाच्च न च्यवत इत्यच्युतः । अग्नीषोमीयादियागो दर्शाच्च्यवते, ऐन्द्रादिः पूर्णमासाच्च्यवते । आग्नेययागस्तु नोभयस्माच्च्यवत इत्यर्थः । तथाचाऽग्निदेवताकपुरोडाशद्रव्यकयागेनेष्टं भावयेदिति वाक्यार्थः ।

३. तै. ब्रा. २. १. ९. २.

अत्र गुरुमतमाह—

**यदाग्नेय इति प्रोक्तं न मानं विध्यसम्भवात् ।**
**इति चेन्न, विशिष्टार्थविधौ सत्यप्रमा कुतः ॥ २२ ॥**

उदाहृतवाक्ये देवताराहित्यप्रसङ्गेन नामत्वाभावाद्गुणयोर्विधौ वाक्यभेदाच्च विध्यसम्भवादप्रामाण्यमिति **पूर्वपक्षः** ।

गुणद्वयविशिष्टकर्मविधिसम्भवात्प्रामाण्यमिति **सिद्धान्तः** ॥

इति सप्तममाग्नेयाधिकरणम् ॥ ७ ॥

---

अथाऽष्टमं बर्हिराज्याधिकरणम् ॥ ८ ॥

(१)अष्टमाधिकरणमारचयति—

**बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः ।**
**जात्यर्था वा, शास्त्ररूढेस्ते स्युः संस्कारवाचिनः ॥ २३ ॥**
**जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः ।**
**विनाऽपि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः ॥ २४ ॥**

दर्शपूर्णमासयोः श्रूयते—(२) "बर्हिर्लुनाति"(३) "आज्यं विलापयति"(४) "पुरोडाशं पर्यग्निकरोति" इति । अत्र बर्हिरादिशब्दानां शास्त्रे सर्वत्र संस्कृतेषु तृणादिषु प्रयोगात्, पील्वादिशब्देषु शास्त्रीयरूढिप्राबल्यस्योक्तत्वात्, यूपाहवनीयादिशब्दवत्संस्कारवाचिनो बर्हिरादिशब्दा इति **चेत्**—

**मैवम्**; अन्वयव्यतिरेकाभ्यां जातिवाचित्वात् । यत्र यत्र बर्हिरादिशब्दप्रयोगः, तत्र तत्र जातिरित्यस्या व्याप्तेर्लोके वेदे च नाऽस्ति व्यभिचार । संस्कारव्याप्तेस्तु लौकिकप्रयोगे व्यभिचारो दृश्यते । क्वचिद्देशविशेषे लौकिकव्यवहारो जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते—'बर्हिरादाय गावो गताः' इति, 'क्रय्यमाज्यम्' इति, 'पुरोडाशेन मे माता प्रहेलकं ददाती'ति च । तस्माज्जातिवाचिनः ।

---

१. सापवादे कर्मनामविचारे समाप्ते प्रसङ्गाद्बर्हिराज्यादिद्रव्यनामविचारः क्रियत इति प्रासङ्गिकी सङ्गतिः ।

२. तै. ब्रा ३. २. २. ४.  . विलापनं कठिनस्य द्रवीकरणम् ।

४. श. ब्रा. १. १. ६. १३. पर्यग्निकरणं नाम ज्वलदङ्गारैः पुरोडाशस्योपरि प्रादक्षिण्येन भ्रामणम् । 'परितोऽग्निर्यस्य सः पर्यग्निः । परितोऽग्निमन्तं पुरोडाशं करोतीत्यर्थ इति शतपथव्याख्यायां माधवाचार्याः ।

प्रयोजनं तु—(१)"बर्हिषा यूपावटमवस्तृणाति" इत्यत्र विना संस्कारेण स्तरणसिद्धिः ॥

अत्र गुरुमतमाह—

**बर्हिरादौ निमित्तस्य दुर्वचत्वान्न मेति चेत् ।**
**जातेस्तत्र निमित्तत्वात्तद्युक्ता चोदना प्रमा ॥ २५ ॥**

स्पष्टोऽर्थः ॥

इत्यष्टमं बर्हिराज्याधिकरणम् ॥ ८ ॥

---

### अथ नवमं प्रोक्षण्यधिकरणम् ॥ ९ ॥

(२)नवमाधिकरणमारचयति—

**प्रोक्षणीः संस्कृतिर्जातिर्योगो वा, सर्वभूमिषु ।**
**तथोक्तेः संस्कृतिः, जातिस्स्याद्रूढेः प्रबलत्वतः ॥ २६ ॥**
**अन्योन्याश्रयतो नाऽऽद्यो न जातिः कल्प्यशक्तितः ।**
**योगः स्यात्क्लृप्तशक्तित्वात्क्लृप्तिर्व्याकरणाद्भवेत् ॥ २७ ॥**

दर्शपूर्णमासयोः श्रूयते—(३)"प्रोक्षणीरासादये" ति । तत्र प्रोक्षणीशब्दस्याऽभिमन्त्रणासादनादिसंस्कृतिः प्रवृत्तिनिमित्तम् । कुतः ? सर्वेषु वैदिकप्रयोगप्रदेशेषु संस्कृतानामेवाऽपां प्रोक्षणीशब्देनोच्यमानत्वादित्येकः **पक्षः** ।

लोके जलक्रीडायां 'प्रोक्षणीभिरुद्वेजिताः स्मः' इत्यसंस्कृतास्वप्सु प्रयोगाद्बर्हिरादिशब्दवज्जातौ रूढत्वादुदकत्वजातिः प्रवृत्तिनिमित्तम् । न च 'प्रकर्षेणोक्ष्यत आभिः' इति योगोऽत्र शङ्कनीयः । रूढेः प्रबलत्वादिति **पक्षान्तरम्** ।

तत्र न तावत्संस्कारो युक्तः । अन्योन्याश्रयत्वात् । विहितेष्वभिमन्त्रणादिषु संस्कारेष्वनुष्ठितेषु पश्चात्संस्कृतास्वप्सु प्रोक्षणीशब्दप्रवृत्तिः । तत्प्रवृत्तौ सत्यां प्रोक्षणीशब्देनाऽऽपोऽनूद्याऽभिमन्त्रणसिद्धिरिति । नाऽपि जातिपक्षो युक्तः । उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्वमक्लृप्तत्वेनेतः परं शक्तेः कल्पनीयत्वात् । ततो गोशब्दवद-

---

१. यूपस्थापनार्थं यो गर्तः खन्यते स यूपावटः । तं बर्हिषा स्तृणीयादित्यर्थः ।

२. पूर्वाधिकरणेनाऽस्याऽपवादिकी सङ्गतिर्द्रष्टव्या ।

३. (तै. ब्रा. ३. २. ७. १४.) हे अग्नीत् यागीयपात्रहविःप्रोक्षणक्रियार्था अपः आहवनीयस्योत्तरदेशे स्थापयेत्यर्थः ।

श्वकर्णशब्दवच्च रूढो न भवति । योगस्तु व्याकरणेन क्लृप्तः । प्रोपसर्गादुक्षसेचन इत्यस्माद्धातोः करणे ल्युट्प्रत्ययेन व्युत्पादनात् । तस्मात्—प्रोक्षणीशब्दो **यौगकः** ।

(१)घृतादेः प्रोक्षणत्वं प्रयोजनम् ॥

इति नवमं प्रोक्षण्यधिकरणम् ॥ ९ ॥

---

**अथ दशमं निर्मन्थ्याधिकरणम्॥ १० ॥**

(२)दशमाधिकरणमारचयति—

**रूढिर्योगो योगरूढिर्वा निर्मन्थ्यस्य वर्तनम् ।**
**आद्यौ पूर्ववदन्त्योऽचिरजातेर्नावनीतवत् ॥ २८ ॥**

अग्निचयने श्रूयते—(३)"निर्मन्थ्येनेष्टकाः पचन्ती" ति । तत्र निर्मन्थ्यशब्दस्य स्वार्थे कीदृशी वृत्तिरिति संशये—बर्हिरादिशब्दवल्लौकिकवैदिकसाधारण्याद्वह्निजातौ रूढिरित्येकः **पक्षः** ।

प्रोक्षणीशब्दवद्रूढेरक्लृप्तत्वादरणिनिर्मन्थनजन्यत्वाच्च योग इति **पक्षान्तरम्** ।

लौकिकनिर्मन्थनेन चिरनिर्मन्थनेन च जन्यं वारयितुं योगरूढिः पङ्कजादिवदाश्र-

---

१. अस्ति सोमारौद्रश्चरुः मैत्रायणीयसंहितायां काम्येष्टिकाण्डे विहितः—'सोमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणामि'( मै. सं. २. १. ५. )ति । 'उत्तानानि पात्राणि प्रोक्षती'ति प्रकृतौ दर्शपूर्णमासयोः पात्रप्रोक्षणमद्भिर्विहितम् । अत्र च तासामपां स्थाने घृतं विहितं 'घृतं प्रोक्षणमि' ( मै. सं. २. १. ५. ) ति । एवञ्च प्रकृतावद्भिः कर्तव्यं प्रोक्षणमत्र घृतेन कर्तव्यम् । तत्र च 'प्रोक्षणीरासादये'(तै. ब्रा. ३. २. ७. )ति मन्त्रः प्रोक्षणकाले पठनीयत्वेन विहितः । स चाऽतिदेशेनाऽत्राऽऽगतः । एवञ्च यदि प्रोक्षणीशब्दो अप्त्वजातिवाची स्यात्, तदाऽत्र प्रोक्षणसाधनतावच्छेदकघृतत्वजातेरेव प्रकाशनीयत्वात् 'प्रोक्षणीरासादये'ति मन्त्रे प्रोक्षणीशब्दस्थाने घृतशब्दं प्रक्षिप्य 'घृतमासादये'ति मन्त्रः पठनीयः । संस्कारवाचित्वे 'प्रोक्षणीरासादये'त्यविकृतः प्रयोगः । यौगिकत्वे तु अत्र घृतस्यैव प्रोक्षणसाधनत्वात् 'प्रोक्षणमासादये'त्येव प्रयोगः कर्तव्य इति फलभेद इति भावः ।

२. पूर्वाधिकरणपूर्वपक्षसिद्धान्तहेत्वोरत्र तुल्यत्वादातिदेशिकी सङ्गतिः ।

३. "य एवं विद्वानग्निं चिनुत" इति वाक्येनाऽऽहवनीयाद्यग्न्याधारत्वेन चयनं विहितम् । तच्च चयनं केन कर्तव्यमिति साधनाकांक्षायां "इष्टकाभिरग्निं चिनुत" इत्यनेन विधिना तत्साधनत्वेनेष्टका विहिताः । ताश्चेष्टका अग्निना पक्तव्याः । तत्राऽयं विधिः—"निर्मन्थ्येनेष्टकाः पचन्ती"ति याः चयनसाधनीभूता इष्टकाः, ताः निर्मन्थ्येन विजातीयारणिद्वयसंयोगरूपव्यापारजन्येनाऽग्निना पक्तव्या इति विषयवाक्यार्थः ।

यणीया । आधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतोऽग्निश्चिरनिर्मथितः । चयनकाले निर्मथ्योखायु धृतोऽग्निरचिरनिर्मथितः । सद्य एव लौकिकमथनेन जातोऽग्निरचिरनिर्मथितः । तेनेष्टकाः पच्यन्ते । यथा पुराणनूतनयोर्घृतयोर्नवनीतजन्यत्वे समानेऽपि योगरूढ्या नूतनमेव 'नावनीतम्' इति व्यवह्रियते, तद्वत् ॥

इति दशमं निर्मन्थ्याधिकरणम् ॥ १० ॥

अथैकादशं वैश्वदेवाधिकरणम् ॥ ११ ॥

(१)एकादशाधिकरणमारचयति—

चातुर्मास्याद्यपर्वप्रोक्ताग्नेयाद्यष्टकान्तिके ।
वैश्वदेवेति शब्दोक्तो गुणः संघस्य नाम वा ॥ २९ ॥
नामत्वे रूपराहित्यादविधिर्गुणता ततः ।
अग्न्यादिभिर्विकल्प्यन्ते विश्वेदेवास्तु सप्तसु ॥ ३० ॥
अनूद्याऽष्टौ यजेतेति तत्संघे नाम वर्णितम् ।
अविधित्वेऽप्यर्थवत्स्यान्नाम प्राक्प्रवणादिषु ॥ ३१ ॥
इज्यन्तेऽत्र यजन्ते वा विश्वे देवा इतीदृशी ।
निरुक्तिर्न विकल्पः स्यादुत्पत्युत्पन्नशिष्टतः ॥ ३२ ॥

चतुर्मास्ययागस्य चत्वारि पर्वाणि—वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयश्चेति । तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः—(२)"आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्" इति । तेषामष्टानां यागानां

१. पूर्वमाग्नेयाधिकरणे तत्प्रख्यन्यायासम्भवेनाऽऽग्नेयशब्दस्य गुणविधित्वे साधिते, अनन्तरं तत्प्रसङ्गात् बर्हिराज्यादिद्रव्यनामविचारः प्रवृत्तः । तदनन्तरं 'यत्प्रसङ्गेन यदागतं तत्समाप्तौ तद्बुद्धिस्थं जायत' इति न्यायेनाऽऽग्नेयाधिकरणसिद्धान्ताभिहितगुणविधित्वे बुद्धिस्थेऽत्राऽपि तत्प्रख्यन्यायाक्षेपेण गुणविधित्वपूर्वपक्षकरणादापवादिकी सङ्गतिः ।

२. (तैः सं. १. ८. २, See also मै. सं. १. १०. १, क. सं. ९. ४.) अत्र निर्वपतिशब्दो यागलक्षकः । लिङर्थे लेट् । अग्निदेवताकेन अष्टाकपालपुरोडाशद्रव्यकयागेनेष्टं भावयेदिति तदर्थः । एवमुत्तरत्राऽपि "सौम्यं चरुमि"त्यादिषु सप्तसु वाक्येषु निर्वपतिपदानुषङ्गेण वाक्यार्थोऽवगन्तव्यः ।

सन्निधाविदमाम्नायते—(१)"वैश्वदेवेन यजेत" इति । तत्राऽऽग्नेयादीन्यागान् 'यजेत' इत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते । यद्यपि वैश्वदेव्यामिक्षायां विश्वे देवाः प्राप्ताः, तथाऽप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वाद्विधीयन्ते । तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्—तर्हि गत्यभावात्तेषु देवता विकल्प्यन्ताम् । नामधेयत्वे तु नाममात्रस्याऽभिधेयत्वाद्द्रव्यदेवतयोरभावेन यागस्याऽत्र स्वरूपासम्भवाच्छ्रूयमाणो विधिरनर्थकः स्यात् । तस्मात् गुणविधिरिति प्राप्ते—

ब्रूमः—उत्पत्तिवाक्यैर्विहितानाग्नेयादीनष्टौ यागान् 'यजेत' इत्यनूद्याऽष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते । न च विधित्वासम्भवेऽपि नामोपदेशवैयर्थ्यम् ,(२) "प्राचीनप्रवणे वैश्वदेवेन यजेत" इत्यादिषु वैश्वदेवशब्देनैकेनैवाऽष्टानां संघस्य व्यवहर्तव्यत्वात् । नामप्रवृत्तिनिमित्तभूता निरुक्तिर्द्विधा—आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितार्थानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वम् । अथवा 'विश्वेदेवा अष्टानां कर्तारः' इति वैश्वदेवत्वम् । तथा च ब्राह्मणम्—(३)"यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" इति । देवताविकल्पस्तु समानबलत्वाभावान्न युज्यते । अग्न्यादय उत्पत्तिशिष्टत्वात्प्रबलाः, विश्वे देवा उत्पन्नशिष्टत्वाद्दुर्बलाः । तस्मात्—वैश्वदेवशब्दः कर्मनामधेयम् ॥

अत्र गुरुमतमाह—

**गुणनामत्वसंदेहादप्रमा चोदनेति चेत् ।**
**नोक्तन्यायेन संघस्य नामधेयत्वनिर्णयात् ॥ ३२ ॥**

स्पष्टोऽर्थः ॥

इत्येकादशं वैश्वदेवाधिकरणम् ॥ ११ ॥

---

१. (तै. ब्रा. १. ४. १०. १.) यद्यपि "अग्नेयमष्टाकपालमि"त्यादीनि संहितायां पठितानि, वैश्वदेववाक्यन्तु ब्राह्मणभाग इति स्थलभेदो दृश्यते, तथाऽपि संहितायां विहितस्यैव यागस्य तदवशिष्टाङ्गकलापविधानार्थं पुनर्ब्राह्मणे तेषां प्रकरणैक्यमनुसन्धाय विचारो बोध्यः ।

२. ( मै. १. १०. ७. ) यत्र भूमौ प्राचीनो देशः प्रतीचीनापेक्षया निम्नो वर्तते तत्र वैश्वदेवपर्वणा यजेतेत्यर्थः ।

३. ( तै. ब्रा. १. ४. १०. १.) यस्मात् विश्वेदेवा यागाष्टकमिदमकुर्वन् तस्मात् विश्वेदेवकृतत्वात् आग्नेयादियागाष्टकस्य वैश्वदेवशब्दवाच्यत्वमिति वाक्यार्थः । यद्यपि षष्ठे तिर्यगधिकरणे ( पू. मी. ६. १. २. ) देवतानामपि कर्मस्वधिकारो निराकरिष्यते, तथाऽपि प्रशंसार्थं प्रवृत्तस्याऽप्यर्थवादस्याऽऽनुषङ्गिकतया प्रवृत्तिनिमित्तप्रयोजकत्वमपि भवितुमर्हतीत्यभिप्रायेणेदमुदाहृतं ग्रन्थकारेण ।

## अथ द्वादशं वैश्वानराधिकरणम् ॥ १२ ॥

(१)द्वादशाधिकरणमारचयति—

**यद्द्वादशकपालेष्टेर्वैश्वानर्या अनन्तरम् ।**
**श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः ॥ ३४ ॥**
**अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत् ।**
**द्रव्यं द्रव्यान्तरे नो चेद्गुणस्तर्हि फले त्वसौ ॥ ३५ ॥**
**वाक्यैक्यमुपसंहाराद्विस्पष्टं तत्तु बाध्यते ।**
**नानागुणविधौ तस्मादंशद्वारांशिसंस्तुतिः ॥ ३६ ॥**

काम्येष्टिकाण्डे श्रूयते—(२)"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते, यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवाऽस्मिन् तेजो दधाति, यद्दशकपालो विराजैवाऽस्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवाऽस्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवाऽस्मिन् पशून्दधाति, यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव (स) तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति । अत्राऽष्टत्वादिसंख्यासामान्यात्पुरोडाशादीनां गायत्र्यादिरूपत्वकल्पना कृता । इष्टिविधायके वाक्ये येयं द्वादशसंख्या तस्यामष्टत्वादिसंख्यानामन्तर्भावात्ताः संख्या निमित्तीकृत्याऽग्निहोत्रशब्दवदष्टाकपालादिशब्दाः कर्मनामधेयानीत्येकः **पक्षः** ।

नाऽत्र द्वादशकपालशब्दः संख्यापरः, किन्तु पुरोडाशद्रव्यपरः, द्वादशसु कपालेषु संस्कृतः इति व्युत्पत्तेः । एवमष्टाकपालादिशब्दा अपि । तथा सति द्रव्यस्य द्रव्यान्तरेऽनन्तर्भावान्नामधेयस्य निमित्तं नाऽस्तीति चेत्—एवं तर्हि पुरोडाशद्रव्यरूपो गुणो विधीयताम् । न चोत्पत्तिशिष्टद्वादशकपालपुरोडाशावरुद्धत्वादष्टाकपालादेरनवकाश इति वाच्यम् । ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्य**परः पक्षः** ।

**अयमप्यनुपपन्नः**; बहूनां गुणानां विधौ वाक्यभेदापत्तेः । न च भिन्नान्येवैतानि वाक्यानीति वाच्यम् । "वैश्वानरं द्वादशपालं निर्वपेत्" इति विहितस्य "यस्मिञ्जात एतामि"त्युपसंहारेण वाक्यैकत्वावगमात् । तस्मादंशैरष्टाकपालादिभिरंशी द्वादशकपालः स्तूयते ।

---

१. पूर्वाधिकरणोक्तनामत्वापवादादापवादिकी सङ्गतिः ।

२. ( तै. सं. २. २. ५. ३. ) पुत्रे जाते पुत्रोत्पत्तौ निमित्तभूतायां वैश्वानरदेवताकेन द्वादशकपालसंस्कृतपुरोडाशेन पुत्रगतपूतत्वादिकं भावयेदित्यर्थः । यस्माद्द्वादशकपालस्यांऽशः अष्टसु कापालेषु संस्क्रियते, तस्मादेनं पुत्रं गायत्र्या ब्रह्मवर्चसेन च शोधयति पिता । एवं 'यन्नवकापाल' इत्यादिषु द्रष्टव्यम् ।

अत्र गुरुमतमाह—

**अगुणत्वादनामत्वादमन्त्रत्वादनन्वये ।**
**अष्टत्वाद्यप्रमाणं चेन्नाऽर्थवादतयाऽन्वयात् ॥ ३७ ॥**

उक्तरीत्या गुणत्वं नामत्वं च न सम्भवति । उत्तमपुरुषामन्त्रणाद्यभावान्न मन्त्रत्वम् । अतोऽष्टाकपालादीनामनन्वयादप्रामाण्यं वाक्यस्येति **चेत्—मैवम्**; स्तावकत्वेनाऽन्वयस्योक्तत्वात् ॥

इति द्वादशं वैश्वानराधिकरणम् ॥ १२ ॥

---

अथ त्रयोदशं तत्सिध्यधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

**यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।**
**सामानाधिकरण्येन स्यादेकस्याऽन्यनामता ॥ ३८ ॥**
**गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते ।**
**अंशांशित्वाद्यभावेन पूर्ववन्नाऽत्र संस्तुतिः ॥ ३९ ॥**
**अर्थभेदादनामत्वं गुणश्चेत्प्रहियेत सः ।**
**यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः ॥ ४० ॥**

इदमाम्नायते—(१)"यजमानः प्रस्तरः" इति । तत्र यजमानस्य प्रस्तरशब्दो नामधेयम्, प्रस्तरस्य वा यजमानशब्दो नामधेयम् । कुतः ? 'उद्भिदा यागेन' इत्यादाविव सामानाधिकरण्यादित्येकः **पक्षः** ।

गुणविधिरित्यपरः **पक्षः** । तदाऽपि यजमानकार्ये जपादौ प्रस्तरस्याऽचेतनस्य सामर्थ्याभावाद्गुणत्वं नाऽस्ति । प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य शक्तत्वाद्यजमान-

---

१. ( तै. सं २. ६. ५. ३, मै. सं. ३. ८. ६. ) 'उत्तरं बर्हिषः प्रस्तरं सादयती' त्यस्य विधेश्शेषोऽयम् । दर्शपूर्णमासयोरुपयोगार्थं लूनानां बर्हिषां यः प्रथमो मुष्टिः स प्रस्तर इत्युच्यते । तानि मुष्टिपरिमितानि बर्हींषि वेद्यामास्तीर्य तदुपरि पुरोडाशाज्यादीनि हवींषि स्थापनीयानि । तदर्थं वेद्यामास्तीर्यमाणः प्रस्तरः नाऽनावृतायां वेदौ आस्तीर्यः, किन्तु प्रथमतो लौकिकैः कुशैर्वेदिमास्तीर्य तदुपरि प्रस्तर आस्तरणीय इति विधिवाक्यार्थः । अतो यजमानवद्यागसाधनत्वादतिप्रशस्तः प्रस्तर इति विषयवाक्यार्थः ।

रूपो गुणो विधीयते । एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षणकत्वेऽपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भवति । न चाऽत्र पूर्वन्यायेन स्तुतिः सम्भवति, अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात् । "वायुर्वै क्षेपिष्ठा देवता" "ऊर्जोऽवरुध्यै" इत्यादिवत्स्तुतिरिति चेत्—न; क्षिप्रत्वादिधर्मवत्कस्यचिदुत्कर्षस्याऽप्रतीतेः । तस्मात् नामगुणयोरन्यतरत्वमिति **प्राप्ते**—

**ब्रूमः**—गोमहिषयोरिवाऽर्थभेदस्याऽत्यन्तप्रसिद्धत्वान्नामत्वं न युक्तम् । गुणपक्षे तु—अग्नौ प्रहरणस्य प्रस्तरकार्यत्वाद्यजमाने प्रहृते सति कर्मलोपः स्यात् । तस्मात् विधेयः प्रस्तरो यजमानशब्देन स्तूयते । यथा 'सिंहो देवदत्तः' इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते, तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते ।

एवं(१) "यजमान एककपालः" इत्यादिषु द्रष्टव्यम् ॥

इति त्रयोदशं तत्सिध्यधिकरणम् ॥ १३ ॥

## अथ चतुर्दशं जात्यधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत्सर्वनिर्णयः ।**
**द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे ॥ ४१ ॥**

इदमाम्नायते—(२) "आग्नेयो वै ब्राह्मणः" इति । अत्राऽत्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न ब्राह्मणस्य नामधेयम् । नाऽप्यग्निदेवतारूपो गुणो विधीयते, 'आग्नेयं सूक्तम्' 'आग्नेयं हविः' इत्येवं देवतातद्धितस्य सूक्तहविर्विषयत्वात् । न हि ब्राह्मणः सूक्तम्, नाऽपि हविः । अतः सम्बन्धवाचितद्धितान्ताग्नेयशब्देन ब्राह्मणः स्तूयते । यद्यपि ब्राह्मणे नाऽग्निसम्बन्धः, तथाऽप्यग्निसम्बन्धो मुखजन्यत्वगुणो ब्राह्मणे विद्यते । तथा चाऽग्निब्राह्मणयोर्मुखजन्यत्वं क्वचिदर्थवादे समाम्नायते—(३)"प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री

---

१. तै. ब्रा. १. ६. ३, मै. सं. १. १०. ७. २. तै. सं. २. ३. ३. ३.

३. (तै.सं. ७.१.१.) सृष्ट्यादौ प्रजापतिरेकाकी अमन्यत—यदहं प्रकर्षेण जायेयं जगदात्मना बहुर्भवेयमिति । एवं कामयमानस्सः स्वस्य मुखात् त्रिवृतं—ऋङ्नवकात्मकं स्तोमं असृजत् । तस्य स्तोमस्य पश्चादग्निरपि सृष्टोऽभवत् । गायत्र्याख्यं छन्दः, रथन्तरसंज्ञकं साम, मनुष्याणां मध्ये ब्राह्मणश्चाऽसृज्यन्त (तेन प्रजापतिना)इत्यर्थः ।

छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणाम् , अजः पशूनाम् , तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त" इति । तस्मात् आग्नेयशब्दः स्तावकः ॥

एवम्—(१)"ऐन्द्रो राजन्यः" वैश्यो वैश्वदेवः" इत्यादिषु द्रष्टव्यम् ॥

इति चतुर्दशं जात्यधिकरणम् ॥ १४ ॥

---

### अथ पञ्चदशं सारूप्याधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः ।**
**द्वारं चाक्षुपसारूप्यं घृताक्ते तैजसेऽस्ति तत् ॥ ४२ ॥**

आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद्यूपेऽप्यस्ति, घृताक्तस्य यूपस्य तेजस्वित्वाध्यवसायात् । तत आदित्यशब्देन यूपः स्तूयते ।

एवं (२)"यजमानो यूपः" इत्यत्र चक्षुर्गम्योर्ध्वत्वस्य समानत्वाद्यजमानशब्देन यूपः स्तूयते ॥

इति पञ्चदशं सारूप्याधिकरणम् ॥ १५ ॥

---

### अथ षोडशं प्रशंसाधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम् ।**
**अजादिष्वपशुत्वं यद्गुणो वादोऽथवाऽस्तु तत् ॥४३॥**
**स्तुत्यभावाद्गुणस्तेषु पशुकार्यनिषेधनम् ।**
**अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना ॥ ४४ ॥**
**पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः ।**
**लक्ष्यास्तत्र निमित्तं तु प्रशंसैव गवाश्वयोः ॥ ४५ ॥**

इदमाम्नायते—(३) "अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गोअश्वाः" इति । तत्राऽजादिषु श्रूयमाणं यदपशुत्वं तस्याऽर्थवादत्वं न सम्भवति, पशुत्वनिषेधमात्रेण स्तुतेरप्रतिभानात् । ततः पशुकार्यनिषेधरूपो गुणो विधीयत इति **चेत्**—

**मैवम्** ; अजादिपशुविधिवैयर्थ्यप्रसङ्गेन निषेद्धुमशक्यत्वात् , अपशुशब्दः पशु-

---

१. तां. ब्रा १५. ५. ८.  २. का. सं २६. ६.  ३. तै सं. ५. २. ९. ४.

व्यतिरिक्तं घटादिपदार्थजातमभिदधाति । तस्मिन् घटादौ गवाश्ववत्प्राशस्त्यं नाऽस्ति । सोऽयं प्राशस्त्याभावोऽजादिषु पशुष्वस्तीत्यनेनाऽभिप्रायेण पशव एव सन्तोऽप्यजादयो घटादिसाम्यादपशुशब्देन लक्ष्यन्ते। पूर्वत्र यजमानकार्यसिद्धिः, आग्नेये मुखजन्यत्वम्, आदित्यवत्तेजस्वित्वं च यजमानादिशब्दानां प्रस्तराद्यर्थेषु प्रवृत्तिनिमित्तम् । तत्प्रवृत्ति-फलं प्रस्तरादिप्रशंसा । इह त्वपशुशब्दस्याऽजादिषु प्रवृत्तौ गवाश्वयोः प्रशंसैव निमित्तं फलं च । द्विप्रकारा हि प्रशंसा—वस्तुनि विद्यमानगुणोत्कर्ष एकः प्रकारः, स्तावकेन शब्देन सम्पादितो गुणोत्कर्षोऽपरः प्रकारः । गवाश्वयोरजादिभ्य उत्कर्षो लोकसिद्धो यः सोऽत्र निमित्तम् । 'अजादयः स्वभावतः पशवोऽपि सन्तो गवाश्वौ प्रत्यपशवः सम्पन्नाः । ईदृशो गावश्वयोर्महिमा' इति स्तुतिफलम्। तस्मात् "अपशवो वै" इत्यर्थवादः ।

अयमेव न्याय उदाहरणान्तरेऽपि योजनीयः—(१) "अयज्ञो वा एष योऽसामा" इत्येकमुदाहरणम् । (२)"असत्रं वा एतद्यदच्छन्दोमम्" इत्यपरमुदाहरणम् । अग्निहोत्रदर्शपूर्णमासादिर्यज्ञोऽपि सामहीनत्वादयज्ञो भवति । ईदृशः साम्नो महिमा । छन्दोमशब्देन चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंश इत्येते त्रयः स्तोमा उच्यन्ते । अक्षरसंख्यासाम्येन गायत्रीत्रिष्टुब्जगतीछन्दोभिर्मायमनत्वात् । तेषां च विष्टुतिः(३) सामब्राह्मणे द्रष्टव्या । अतः सत्रमपि चतुर्दशरात्रादिकं छन्दोमरहितत्वादसत्रं भवति । ईदृशश्छन्दोमानां महिमा इत्येवं स्तावकत्वादर्थवादत्वम् ॥

इति षोडशं प्रशंसाधिकरणम् ॥ १६ ॥

---

१. तै. सं. १. ५. ७. १. यस्मिन् कर्मणि सामानि न सन्ति तस्य यज्ञत्वमेव नाऽस्तीत्यर्थः ।

२. ( तै. सं. ७. ४. २. ३. ) यस्मिन् सोमयागे त्रिवृदादिस्तोमानां स्थाने चतुर्विंशतिः, चतुश्चत्वारिंशत्, अष्टाचत्वारिंशद्वा स्तोमा भवन्ति स सोमयागः छन्दोमशब्देनाऽभिधीयते । गायत्र्यादिछन्दस्समसंख्याकस्तोमसाध्यस्तोत्रयुक्तत्वं तत्र प्रवृत्तिनिमित्तम् ।

३. ताण्ड्यमहाब्राह्मणे तृतीयाध्याये अष्टमखण्डे—"अष्टाभ्यो हिङ्करोति—स तिसृभिः स चतसृभिः स एकया, अष्टाभ्यो हिङ्करोति—स एकया स तिसृभिः स चतसृभिः, अष्टाभ्यो हिङ्करोति—स चतसृभिः स एकया स तिसृभिः" इति चतुर्विंशस्तोमस्य विष्टुतिः दर्शिता । तथा नवमखण्डे—"पञ्चदशभ्यो हिङ्करोति—स तिसृभिः स एकादशभिः स एकया, चतुर्दशभ्यो हिङ्करोति—स एकया स तिसृभिः स दशभिः, पञ्चदशभ्यो हिङ्करोति—स एकादशभिः स एकया स तिसृभिः"इति चतुश्चत्वारिंशस्तो-

अथ सप्तदशं भूमाधिकरणम् ॥ १७ ॥

सप्तदशाधिकरणमारचयति—

सृष्टीरुपदधातीति ये मन्त्राः सृष्टिलिङ्गकाः ।
विधेयास्ते गुणत्वेन वादो वाऽत्र गुणे विधिः ॥ ४६ ॥
आख्यातेनाऽभिसंबन्धादविध्यन्तरयोगतः ।
लिङ्गप्रकरणप्राप्तेर्मन्त्राणां विध्यसंभवात् ॥ ४७ ॥
ताननूद्येष्टकाधानं विदध्यात्स्तोष्यते यतः ।
यथासृष्टेत्यनेनाऽतः सृष्टीरित्यर्थवादगीः ॥ ४८ ॥
एकयाऽस्तुवतेत्यादौ मन्त्रसंघे क्वचिन्नहि ।
सृष्टिशब्दस्तथाऽप्युक्तिः सृष्टिशब्देन भूमतः ॥ ४९ ॥

अग्निचयने श्रूयते—(१) "सृष्टीरुपदधाती"ति सृष्टिशब्दोपेता मन्त्रा यासामिष्टकानामुपधाने विद्यन्ते ता इष्टकाः सृष्टय उच्यन्ते । 'सृष्टिमानासामुपधानो मन्त्र' इति विगृह्य (२) "तद्वानासामुपधानः" इत्यादिव्याकरणसूत्रसिद्धप्रक्रियया तन्निष्पादनात् । सृष्टिशब्दोपेताश्चोपधानमन्त्राः (३) "एकयाऽस्तुवत" इत्यस्मिन्ननुवाके समाम्नाताः । (४) "ब्रह्मासृज्यत, भूतान्यसृज्यन्त" इत्यादिना सृजतिधातोस्तेषु प्रयुक्तत्वात् । ते मन्त्रा अत्र सृष्टिशब्देनोपधाने गुणत्वेन विधीयन्ते । कुतः ? 'उपदधाती'त्यनेनाऽऽख्यातेनाऽभिसंबन्धात् । न चाऽर्थवादत्वमस्य संभवति, विध्यन्तरेण सहैकवाक्यत्वाभावादिति **प्राप्ते**—

**ब्रूमः**—अग्निचयनप्रकरणे पठितत्वात्तेषां मन्त्राणां सामान्यतश्चयनसंबन्धोऽवगम्यते । विशेषसंबन्धः सृजतिलिङ्गादवगन्तव्यः । तथा सति प्राप्तत्वान्न ते मन्त्रा अत्र विधीयन्ते । किंतु तान्मन्त्राननूद्येष्टकोपधानं विधीयते । सृष्टिशब्देनाऽनुवादस्तु वक्ष्यमाणार्थवादोपपत्त्यर्थः । (५)"यथासृष्टमेवाऽवरुन्धे" इति हि वक्ष्यमाणोऽर्थवादः । यदि विधिवाक्ये मन्त्राणामनुवादकः सृष्टिशब्दो न स्यात्, तदानीमर्थवादे सृष्टिशब्दप्रयोगा-

---

मस्य विष्टुतिः, एवं तस्मिन्नेवाऽध्याये द्वादशखण्डे—"षोडशभ्यो हिङ्करोति—स तिसृभिः स द्वादशभिः स एकया, षोडशभ्यो हिङ्करोति—स एकया स तिसृभिः स द्वादशभिः, षोडशभ्यो हिङ्करोति—स द्वादशभिः स एकया स तिसृभिः"इत्यष्टाचत्वारिंशस्तोमस्य च विष्टुतिः दर्शितेति बोध्यम् ।

१. तै. सं. ५. ३. ४. ७.    २. पा. सू. ४. ४. १२५

३. तै. सं. ४. ३. १०. १, See also मै. सं. २. ८. ६.

४. तै. सं. ४. ३. १०. १, मै. सं. २. ८. ६.    ५. तै. सं. ५. ३. ४. ७.

द्विव्यर्थवादयोर्वैयधिकरण्यभ्रमस्स्यात् । तस्मान्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः, किन्त्वर्थवादः । ननु प्रथममन्त्रे सृजतिधातुर्न प्रयुक्तः, किन्तु दधातिधातुः प्रयुक्तः—(१) "एकयाऽस्तुवत प्रजा अधीयन्त" इति तत्पाठात् । बाढम्; तथाऽपि द्वितीयतृतीयादिषु बहुषु मन्त्रेषु सृजतिधातुप्रयोगाद्भूमरूपं सादृश्यमस्ति । यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि, तत्र यथा सृष्टिभूमता, तथाऽत्रापीति भूमगुणयोगेन सृष्ट्यसृष्टिसंघे सृष्टिशब्दप्रयोगः ॥

इति सप्तदशं भूमाधिकरणम् ॥ १७ ॥

## अथाऽष्टादशं लिङ्गसमवायाधिकरणम् ॥ १८ ॥

अष्टादशाधिकरणमारचयति—

**सृष्टिवत्प्राणभृत्तत्र सादृश्यं लिङ्गभूमतः ।**
**अत्रैकमन्त्रगो लिङ्गसमवायो विशिष्यते ॥ ५० ॥**

(२) "प्राणभृत उपदधाति" इत्यत्राऽपि सृष्टिन्यायेन मन्त्रविधिरिति **पूर्वपक्षः** । लिङ्गप्रकरणप्राप्तमन्त्रानुवादेनेष्टकोपधानविधिः । (३)"रेतस्येव प्राणान्दधाती"त्यस्य वक्ष्यमाणार्थवादस्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः । पूर्वत्र द्वितीयादिमन्त्रेषु सृष्टिलिङ्गानां बाहुल्यम् । इह तु प्रथममन्त्र एव प्राणभृल्लिङ्गमाम्नायते–(४)"अयं पुरोभुवस्तस्य प्राणो भौवायनः" इति । एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि 'छत्रिणो गच्छन्ति' इतिवत्तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते । तदेवं यजमानकार्यसिद्ध्यादयो गुणवृत्तिहेतवो निर्णीताः । तथा चोक्तम्—

(५)"तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः ।
षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता ॥ इति ॥

इत्यष्टादशं लिङ्गसमवायाधिकरणम् ॥ १८ ॥

---

१. तै. सं. ४. ३. १०. १ २. तै. सं. ५. ३. १. २, श. ब्रा. ८. १. १. १
३. तै. सं. ५. २. १० ३.
४. तै. सं. ४. ३. २. १, See also मै. सं. २. ७ १९.
५. शा. दी. १. ४. १९. पृ. ९०. निर्ण. सं.

## अथैकोनविंशं वाक्यशेषाधिकरणम् ॥ १९ ॥

एकोनविंशाधिकरणमारचयति—

शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम् ।
तैलादिनाऽञ्जिता अक्ता घृतेनैवाऽथवाऽञ्जनम् ॥ ५१ ॥
तैलादिनाऽपि मुख्यत्वादसंजातविरोधनात् ।
अप्राप्तार्थत्वतश्चाऽस्य विधेर्वादाद्बलित्वतः ॥ ५२ ॥
सामान्यमननुष्ठेयं विशेषस्तु विधौ न हि ।
घृतेनैवाऽञ्जनं वाक्यशेषात्संदिग्धनिर्णयात् ॥ ५३ ॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी ।
बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम् ॥ ५४ ॥

(१) "अक्ताः शर्करा उपदधाति तेजो वै घृतम्" इति श्रूयते। मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः। ताश्च घृततैलवसादीनामन्यतमेन द्रव्येणाऽञ्जनीयाः। कुतः? अञ्जनसामान्यबोधकस्य विधिवाक्यस्य घृतविशेषबोधकादर्थवादात्प्रबलत्वात्। तत्प्राबल्ये च मुख्यत्वादयस्त्रयो हेतवः। स्वार्थतया विधेर्मुख्यत्वम्, प्रथमश्रुतत्वाचाऽसंजातविरोधित्वम्, अनधिगतार्थबोधकत्वादप्राप्तार्थत्वम्। अर्थवादस्तु विधिस्तावकत्वान्न मुख्यः, चरमश्रुतत्वात्संजातविरोधी, ज्ञातार्थानुवादित्वात्प्राप्तार्थः। तस्मात् येन केनाऽप्यञ्जनमिति प्राप्ते—

**ब्रूमः**—विधिवाक्येन किमञ्जनसाधनसामान्यं विधीयते, तद्विशेषो वा? नाऽऽद्यः, सामान्यस्याऽननुष्ठेयत्वात्। न द्वितीयः, घृततैलादिविशेषवाचकशब्दाभावात्। तत उक्तरीत्या प्रबलमपि विधिवाक्यमनुष्ठानयोग्ये विशेषे सन्देहजनकतया निर्णयहेतुमर्थवादमपेक्षते, न तु तेन सह विरुध्यते। अर्थवादेऽपि घृतस्य विधिर्नाऽस्तीति चेत्—न; विधेरुन्ने-

---

१. तै. ब्रा. ३. १२. ५. 'शर्करा अक्ता उपदधाति तेजो घृतमि'ति तैत्तिरीयब्राह्मणपाठः। शर्कराः—'कंकड़'इति हिन्दीभाषायां प्रसिद्धाः। इयमत्र विषयशुद्धिः—यथा हि श्येनचित्सुवर्णचित्प्रभृतीनि आहवनीयाद्यग्न्याधारस्थण्डिलविशेषसम्पादकानि महाग्निचयनानि इष्टकाभिः बृहदाकाराभिः कर्तव्यतया विहितानि—'इष्टकाभिरग्निं चिनुत' इति, तद्वत् सावित्रनाचिकेतारुणकेतुकप्रभृतीनि क्षुद्रचयनानि अङ्गुलिपर्वपरिमितसुवर्णनिर्मिताभिरिष्टकाभिः कर्तव्यतया विहितानि। दारिद्र्यादिना हिरण्यालाभे तु तत्स्थाने शर्करा विहिताः—'अक्ताश्शर्करा उपदधाती'ति। ताश्च घृतेन सिक्त्वा उपधेया इति।

यत्वात्। "तेजो वै घृतम्" इत्येवं तेजस्त्वेन घृतस्य स्तूयमानत्वाद्विधेयत्वं गम्यते, "यस्स्तूयते स विधीयत" इति न्यायात्। तेन च विधेयत्वेन विधायकः शब्दः कल्प्यते घृतेनाऽक्ता इति। तस्मात् घृतेनैवाऽञ्जनम्॥

इत्येकोनविंशं वाक्यशेषाधिकरणम्॥ १९॥

---

## अथ विंशं सामर्थ्याधिकरणम्॥ २०॥

विंशाधिकरणमारचयति—

**स्रुवेणाऽथ स्वधितिना हस्तेनाऽवद्यतीत्यमी।**
**आज्ये मांसे पुरोडाशे संकीर्णा वा व्यवस्थिताः॥ ५५॥**
**व्यवस्थापकराहित्यात्स्रुवाद्या अव्यवस्थिताः।**
**व्यवस्थापकताशक्तेस्तद्वशेन व्यवस्थितिः॥ ५६॥**

**इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां प्रथमाध्यायस्य चतुर्थः पादः॥**

(१) "स्रुवेणाऽवद्यति" "स्वधितिनाऽवद्यति" "हस्तेनाऽवद्यती"ति श्रूयते। तत्राऽवदेयेष्वाज्यमांसपुरोडाशेषु हविष्षु अमी स्रुवाद्या अवदानहेतवः संकीर्णाः। कुतः? व्यवस्थापकस्य शब्दस्याऽभावादिति चेत्—

मैवम्; शक्तेर्व्यवस्थापकत्वात्। "आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी" इति न्यायात्। 'कटे भुङ्क्ते' 'कांस्यपात्र्यां भुङ्क्ते' इत्यत्र लौकिकास्तत्तद्वस्तुशक्त्यनुसारेण व्यवस्थां कल्पयन्ति—'कट आसीनः' 'कांस्यपात्र्यामोदनं निधाय' इति। वेदेऽपि—(२)"अञ्जलिना सक्तून् प्रदाव्ये जुहुयात्" इत्यत्र यद्यपि द्विहस्तसंयोगोऽञ्जलिः, तथाऽपि गुरुदेवताप्रसादनार्थाञ्जलिवन्निश्छिद्रसंयोगो न भवति, तादृशेऽञ्जलौ सक्तूनामवकाशाभा-

---

१. तत्तद्यागेषु सम्पादितेभ्यश्चरुपुरोडाशसान्नाय्येभ्यो हविर्भ्यः तत्तद्देवताभ्यः प्रदानार्थं यत्पृथक्करणं तदवदानमित्युच्यते। तदवदानं द्रवद्रव्येषु दध्याज्यपयःप्रभृतिषु स्रुवेण कुर्यात्, चरुपुरोडाशादिषु कठिनद्रव्येषु हस्तेन कुर्यात्, वपामांसादौ तु स्वधितिना कुर्यादिति विषयवाक्यार्थः।

२. (तै. सं. ३. ३. ८. ४.) अष्टानां यवानां चूर्णः सक्तवः। तान् प्रदाव्ये दावाग्नौ अञ्जलिना विवृताकारेण संयुक्तहस्तद्वयेन जुहुयादित्यर्थः।

वात् । अतः सामर्थ्यात्संयुक्तप्रसृतिद्वयात्मको मध्यगतावकाशोपेतोऽञ्जलिर्गृहीतः । एवमत्राऽपि द्रवद्रव्यस्याऽऽज्यस्य स्रुवो योग्यः, छेदनीयमांसस्य शस्त्रविशेषः स्वधितिः, संहतस्य पुरोडाशस्य हस्त इत्यनेन प्रकारेण स्रुवाद्या व्यवस्थिताः ॥

इति विंशं सामर्थ्याधिकरणम् ॥ २० ॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## समाप्तश्च प्रथमोऽध्यायः ॥ १ ॥



## अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

**प्रमाणमुपजीव्यत्वात्प्रथमेऽध्याय ईरितम् ।**
**मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ॥ १ ॥**

अनेन प्रथमद्वितीययोरध्याययोः(१)पूर्वोत्तरभाव उपपादितः ॥

### ( भावार्थाधिकरणे प्रथमं वर्णकम् )

### ( प्रतिपदाधिकरणम् )

द्वितीयाध्यायस्य प्रथमे पादे प्रथमाधिकरणे प्रथमं वर्णकमारचयति—

**विधिवाक्ये पदैः सर्वैरपूर्वं प्रतिपाद्यते ।**
**प्रत्येकमथवैकेन, सर्वैस्तत्प्रतिपादनम् ॥ २ ॥**
**फलान्वयित्वात्सर्वेषां प्रधानान्वयलाभतः ।**
**लाघवादेकबोध्यत्वं तच्छेषस्तु पदान्तरम् ॥ ३ ॥**

विधिवाक्यमदृष्टार्थमखिलमत्रोदाहरणम् । विधिवाक्ये यावन्ति पदानि सन्ति तानि सर्वाणि क्रियाकारकसंबन्धमनादृत्य प्रत्येकमपूर्वस्य प्रतिपादकानि । कुतः ? अपूर्वस्य

---

१. प्रथमेऽध्याये विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ प्रमाणानि धर्मे निरूपितानि । इदानीं तत्प्रमेयभूतं धर्मस्वरूपं द्वितीयेऽध्याये निरूप्यते । यद्यपि धर्मप्रमाणेषूक्तेषु अर्थादेतत्प्रमाणप्रतिपाद्यो धर्म इत्येवं सामान्याकारेण धर्मस्वरूपमवगतं, तथाऽपि कार्त्स्न्येन तत्स्वरूपानवगमात् इदानीं विशेषाकारेण तत्स्वरूपावगत्यै तद्गतानेकत्वरूपो भेदः प्रतिपाद्यत इति पूर्वोत्तरभावोऽवसेयः ।

फलत्वेन सर्वेषां पदानां फलान्वयित्वात्। अपूर्वप्रतिपादनाभावेऽपि क्रियाकारकयोः परस्परान्वयोऽस्त्येवेति चेत्—सत्यम्; तथाऽपि प्रधानान्वयो लभ्येत। फलं हि प्रधानम्, पुरुषार्थतया साध्यमानत्वादिति **प्राप्ते**—

**ब्रूमः**—अपूर्वस्याऽत्यन्तमदृष्टत्वादेककल्पनयैव वाक्यस्योपपत्तावनेककल्पने गौरवं स्यात्। तस्मादेकमपूर्वमेकेन शब्देन प्रतिपाद्यते। पदान्तरं तु तच्छेषतयाऽन्वेति। ननु यस्य पदस्याऽर्थोऽपूर्वस्य कल्पकस्तत्पदार्थस्य फलसाधनतया फलं प्रत्युपादेयत्वविधेयत्वगुणत्वान्यभ्युपगन्तव्यानि। तथा तस्यैव शेषभूतपदान्तरार्थं प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानामपि प्राप्तत्वाद्विरुद्धत्रिकद्वयापत्तिरिति चेत्—मैवम्; (१)"उद्भिदा यजेत पशुकामः" (२)"श्येनेनाऽभिचरन्यजेत" इत्यादावुद्भिदादिशब्दानां नामत्वेनाऽन्वये सति यागसाधनवाचित्वाभावेन यजतावुद्देश्यत्वादित्रिकापादकत्वाभावात्। तस्मादेकमेव पदमपूर्वप्रतिपादकम्। न च धर्मभेदचिन्तां प्रस्तुतां परित्यज्य किमित्यपूर्वं चिन्त्यत इति वाच्यम्।(३) अपूर्वस्यैव धर्मत्वात्।

( इति प्रतिपदाधिकरणम् )

---

( द्वितीयं वर्णकम्, भावार्थाधिकरणम् )

द्वितीयं वर्णकमारचयति—

**द्रव्यादिशब्दतोऽपूर्वधीर्भावार्थपदादुत।**
**द्रव्यादीनां फलार्थत्वात्तच्छब्देन ह्यपूर्वधीः॥ ४॥**
**क्रियाद्वारमृते द्रव्यं फलेन न हि युज्यते।**
**भावनावाचिनोऽपूर्वमाख्यातादवगम्यते॥ ५॥**
**धात्वर्थव्यतिरेकेण भावना नेति चेन्न तत्।**
**सर्वधात्वर्थसंबद्धः करोत्यर्थो हि भावना॥ ६॥**
**धात्वर्थः करणं तस्यां समानपदवर्णितः।**
**द्रव्याद्युपकृतिर्दृष्टा धात्वर्थोत्पादनात्मिका॥ ७॥**

---

१. तां. ब्रा. १९. ७. २. ३. २. षड्वि. ब्रा. ३. १०.

३. 'यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्' इति श्रुत्युपष्टब्धं 'यो यागमनुतिष्ठति तं धार्मिकमित्याचक्षत' इति शावरं भाष्यमवलम्ब्य तत्र तत्र श्रेयस्साधनत्वेन विहितक्रियादेरेव वार्तिककारैः धर्मत्वव्यवस्थापनात् अत्राऽपूर्वस्य धर्मत्वकथनं तादृशक्रियाजन्यत्वेन भाक्तधर्मत्वपरमिति बोध्यम्।

इदमाम्नायते—(१)"सोमेन यजेत" (२)"हिरण्यमात्रेयाय ददाति" (३)"तस्मात्सुवर्णं हिरण्यं धार्यम्" (४)"श्येनेनाऽभिचरन्यजेत" (५)"चित्रया यजेत पशुकामः" इत्यादि । तत्र सोमहिरण्यशब्दौ द्रव्यवाचिनौ, सुवर्णशब्दो गुणवाची, श्येनचित्राशब्दौ कर्मवाचिनौ । तैरेतैर्द्रव्यादिशब्दैरपूर्वं प्रत्येति । कुतः ? द्रव्यादीनां सिद्धरूपाणां साध्यं फलं प्रति साधनत्वसंभवात् । यागदानादिरूपस्तु भावार्थः स्वयमपि फलवत्साध्यरूपत्वान्न साधनं भवितुमर्हति । ततो द्रव्यादीनां फलं प्रति करणत्वाद्द्रव्यादिशब्दा अपूर्वप्रत्यायका इति प्राप्ते—

**ब्रूमः**—क्रियां विना द्रव्याणि फलं साधयितुं न क्षमन्ते । पचिक्रियामन्तरेण काष्ठस्थाल्यादीनामोदनसाधकत्वादर्शनात् ।। अतो भावनावाचिना यजति ददातीत्याख्यातेनाऽपूर्वं प्रतीयते ।

**ननु** धात्वर्थ एव भावना, तदन्या वा ? न तावद्धात्वर्थः । तस्य तां प्रति करणत्वोक्तेः । न द्वितीयः, धात्वर्थव्यतिरिक्तायाः क्रियाया दुर्लक्ष्यत्वादिति चेत्—मैवम्; सर्वधात्वर्थसंबद्धस्य करोतिरूपस्य लक्षयितुं शक्यत्वात् । तदुक्तमाचार्यैः—

(६) "धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते ।
तथाऽपि सर्वसामान्यरूपेणैवाऽवगम्यते" ॥ इति ॥

अन्यैरप्युक्तम्—

"सिद्धसाध्यस्वभावाभ्यां धात्वर्थो द्विविधस्तयोः ।
अन्योत्पादानुकूलात्मा भावना साध्यरूपिणी" ॥ इति ॥

'पचति' इत्युक्ते 'पाकं करोति' इत्येतमर्थं सर्वे जनाः प्रतियन्ति । तत्र पाकः, पक्तिः पचनमित्येतैः शब्दैर्व्यवह्रियमाणो लिङ्गकारकसंख्यायोग्यो धात्वर्थः सिद्धस्वभावः । 'करोति' इत्यनेन व्यवह्रियमाणो लिङ्गाद्यपेतः साध्यस्वभावः । तत्र सिद्धस्वभावद्योतनाय यथा घञ्प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनायाऽऽख्यातप्रत्य-

---

१. सोमशब्दो द्रव्यवाची । स च तद्विशिष्टं यागं लक्षयति । स चाऽप्राप्तत्वात् भावनायां करणत्वेनाऽन्वेति । एवञ्च 'सोमवता यागेनेष्टं भावयेत्'इति वाक्यार्थः ।

२. 'तस्मादात्रेयं चन्द्रेणेच्छन्ती'ति ( तां. ब्रा. ६. ६. ११. ) पाठः । 'आत्रेयाय हिरण्यं ददाती'ति ( श. ब्रा. ४. ३. ४. २१. ) पाठः । आत्रेयः अत्रिगोत्रोद्भवः । तत्संप्रदानकहिरण्यकर्मकदानेन प्रकृतज्योतिष्टोमयागोपकारं कुर्यादिति वाक्यार्थः ।

३. ( तै. ब्रा. २. २. ४. ) हिरण्यशब्दो रजतसुवर्णोभयसाधारणः । सुवर्ण-( हेम ) रूपं यत् हिरण्यं तद्धारणेन पुरुषः आत्मानं संस्कुर्यात् इति वाक्यार्थः ।

४. षड्वि. ब्रा. ३. १०.　　५. तै. सं. २. ४. ६. १.

६. तं. वा. २. १. २. पृ. ३५०. चौ. सं.

यविधिः । स चाऽऽख्यातप्रत्ययार्थ ओदनोत्पत्तेरनुकूलः । ततो भवितुरोदनस्य प्रयोजकव्यापारत्वाण्णिजन्तेन भावनाशब्देनोच्यत इति । अन्ये भावनापक्षा अयुक्ताः । प्रयत्नो भावनेति चेत्—न; 'रथो गच्छति' इत्यत्र तदभावप्रसङ्गात् । स्पन्द इति चेत्—न; मानसत्यागरूपे यजतावव्याप्तेः । उभयसाधरणमुदासीनत्वविच्छेदसामान्यं भावनेति चेत्—न; शब्दभावनायामव्याप्तिः । न हि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वाऽस्ति । लिङ्-लेट्-लोट्तव्यप्रत्ययमात्रगता शब्दभावना । सर्वाख्यातगताऽर्थभवना । तदुक्तम्—

(१) "अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यत" ॥ इति ॥

किंच स्पन्दादिवादिनोऽपि न स्वरूपेण स्पन्दादीनां भावनात्वमाहुः, किन्त्वन्योत्पादानुकूलं स्वरूपम् । तस्मादस्मदुक्तैव भावना । यथा 'पचति, इत्यत्रौदनफलोत्पत्त्यनुकूला, तथा 'यजति'इत्यत्र स्वर्गादिफलोत्पत्त्यनुकूला । तस्यां च फलभावनायां प्रत्ययवाच्यायामेकपदोपात्तत्वेन प्रत्यासन्नत्वात्प्रकृत्यर्थः करणम् । न तु द्रव्यादि, तस्य पदान्तरोपात्तत्वेन विप्रकृष्टत्वात् । साध्यरूपोऽपि प्रकृत्यर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम् । द्रव्यादीनां तु प्रकृत्यर्थोत्पादनेन दृष्ट एवोपकारः, द्रव्यादिनिष्पादितेन धातुवाच्येन यागादिकरणेन स्वर्गादिफलोत्पत्तौ सत्यां येयनुकूलव्यापारात्मा कृतिशब्दाभिधेया फलोत्पादना सेयं यज्यादिधातूनामन्यतमेन केनाऽपि नाऽभिधीयते, सर्वधात्वर्थानुयायित्वात् । अतो न भावनायाः प्रकृत्यर्थत्वमाशङ्कितुं शक्यम् । अस्तु तर्हि धात्वर्थसामान्यमेव भावनेति चेत्—न; प्रतिधात्वर्थं विलक्षणरूपत्वात् । अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यम् , अन्यच्च चलनस्य संयोगविभागौ प्रति । अन्यथा फलविभागानुपपत्तेः । भिन्नासु भावनाव्यक्तिषु भावनात्वसामान्यमनुवर्ततां नाम, नैतावता प्रकृत्यर्थसामान्यं तद्भवति । तस्माद्विशेषरूपात्सामान्यरूपाच्च यज्यादिधातुवाच्यादन्यैवाऽऽख्यातप्रत्ययवाच्या भावना । तथा सति 'यजेत' इत्यत्राऽऽख्यातस्य 'भावयेत्' इत्यर्थो भवति । तत्र 'किं भावयेत्, केन भावयेत्, कथं भावयेत्, इत्याकाङ्क्षायां 'स्वर्गं भावयेत्' 'यागेन भावयेत्' 'अग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं संपाद्य भावयेत्' इत्येवं भाव्यकरणेतिकर्तव्यतासमर्पणेनाऽऽकाङ्क्षापूरणात्प्रकरणाम्नातः सकलः शब्दसंदर्भो भावनावाचिन आख्यातस्यैव प्रपञ्चः । भाव्याद्यंशत्रयवती सेयमार्थीभावनेत्युच्यते । सा सर्वाऽपि शब्दभावनाया भाव्या । विधायको लिङादिः करणम् । अर्थवादसम्पादिता स्तुतिरितिकर्तव्यता । सेयं शब्दभावना लिङादिभिरेव गम्यते । अर्थभावना तु सर्वैराख्यातप्रत्ययैर्गम्यत इत्युक्तम् । तस्यां चार्थभावनायां स्वर्गस्य भाव्यत्वं कमियोगादवगम्यते । प्रकृत्यर्थस्य करणत्वं तृतीयाश्रुत्या । तथा च श्रूयते—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "चित्रया यजेत पशुकामः" इति । तच्च करणत्वमपू-

१. तं. वा. २. १. २. पृ. ३४४. चौ. सं.

र्वकल्पनामन्तरेण न संभवतीत्यभिधास्यते । तस्मादाख्यातप्रत्ययान्ताद्भावार्थपदादपूर्वं गम्यते ।

चिन्ताप्रयोजनं तु—पूर्वपक्षे द्रव्याद्यपचारे प्रतिनिध्यभावः, सिद्धान्ते तु तत्सद्भाव इति ॥

इति प्रथमं भावार्थाधिकरणम् ॥ १ ॥

अथ द्वितीयमपूर्वाधिकरणम् ॥ २ ॥

( १ ) द्वितीयाधिकरणमारचयति—

**अपूर्वसदसद्भावसंशये सति नाऽस्ति तत् ।**
**मानाभावात्फलं यागात्सिध्येच्छास्त्रप्रमाणतः ॥ ८ ॥**
**क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम् ।**
**विरुद्धं मान्तरेणाऽतः श्रेयोपूर्वस्य कल्पनम् ॥ ९ ॥**
**अवान्तरव्यापृतिर्वा शक्तिर्वा यागजोच्यते ।**
**अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम् ॥ १० ॥**

पूर्वाधिकरणे वर्णकाभ्यां यदिदमुक्तम्—अपूर्वस्यैकमेव पदं प्रत्यायकम् , तच्च 'यजेत' इत्याख्यातान्तभावार्थपदमिति । तदनुपपन्नम् ; अपूर्वसद्भावे मानाभावात् । 'यजेत' इत्याभ्यां प्रकृतिप्रत्ययाभ्यां करणभावनयोरभिधानात् । अपूर्वाभावे कालान्तरभाविस्वर्गसाधनत्वं विनश्वरस्य यागस्याऽनुपपन्नमिति चेत्—न; शास्त्रप्रामाण्येन तदुपपत्तेरिति प्राप्ते—

**ब्रूमः**—'दर्शपूर्णमासाभ्याम्' इति तृतीयाश्रुत्या तावद्यागस्य स्वर्गसाधनत्वं प्रमितम् । तद्यथोपपद्येत तथाऽवश्यं भवताऽपि कल्पनीयम् । तत्र किं यावत्फलं यागस्याऽवस्थानं कल्प्यते ? किंवा विनष्टस्याऽपि स्वर्गोत्पादनम् ? नाऽऽद्यः—यागे क्षणिकत्वस्य प्रत्यक्षसिद्धत्वात् । न द्वितीयः—मृतयोर्दम्पत्योः पुत्रोत्पत्त्यदर्शनात् । अतो मानान्तरविरुद्धाद्भवदीयकल्पनादस्मदीयमविरुद्धमपूर्वकल्पनं ज्यायः । कल्पितेऽप्यपूर्वे तस्यैव स्वर्गसाधनत्वाद्यागस्य स्वर्गसाधनत्वश्रुतिर्विरुध्येतेति चेत्—न; यागावान्तरव्यापारोऽपूर्वमित्यङ्गीकारात् । न ह्युद्यमननिपतनयोरवान्तरव्यापारयोः सत्त्वे कुठारस्य साधनत्वमपैति । यदि व्यापारवतो यागस्य नाशे व्यापारो न तिष्ठेत् , तर्हि यागजन्या

१. पूर्वाधिकरणेनाऽस्याऽऽक्षेपिकी सङ्गतिः ।

काचिच्छक्तिरपूर्वमस्तु । शक्तिव्यवधानेऽपि यागस्य साधनत्वमविरुद्धम् । औष्ण्यव्यवहितेऽप्यग्नौ दाहकत्वाङ्गीकारात् । यथाऽङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्तते, तथा यागजन्यमपूर्वं नष्टेऽपि यागे कर्तर्यात्मन्यनुवर्तताम् । तस्मादस्त्यपूर्वम् ।

तद्विशेषस्तु—संप्रदायसिद्धयागप्रक्रिययाऽवगन्तव्यः । तथा हि प्रक्रिया पूर्वाचार्यैरित्थं दर्शिता—प्रथमं तावत्फलवाक्येन कर्मणः फलसाधनता बोध्यते—'योगेन स्वर्गं कुर्यात्' इति । कथं विनश्वरेण फलं कर्तव्यम् ? इत्यपेक्षायाम्—'अपूर्वं कृत्वे'त्युच्यते । कथमपूर्वं क्रियत इत्यपेक्षायां–'यागानुष्ठानप्रकारेण' इति । तच्चाऽपूर्वं दर्शपूर्णमासयोरनेकविधम्—फलापूर्वम्, समुदायापूर्वम्, उत्पत्त्यपूर्वम्, अङ्गापूर्वं चेति । येन स्वर्ग आरभ्यते तत्फलापूर्वम् । अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यामपरः, तयोर्भिन्नकालवर्तिनोः संहत्य फलापूर्वारम्भायोगात्तदारम्भाय समुदायद्वयजन्यमपूर्वद्वयं कल्पनीयम् । तयोरेकैकस्याऽऽरम्भायैकैकसमुदायवर्तिनां त्रयाणां यागानां भिन्नक्षणवर्तित्वेन संघातापत्त्यभावाद्यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि । तेषां चाङ्गोपकारमन्तरेणाऽनिष्पत्तेरङ्गानां चाऽनेकक्षणवर्तिनां संघातासंभवादङ्गापूर्वाणि कल्पनीयानि ।

तत्र त्वयं विभागः—(१)संनिपत्योपकारकाण्यवघातादीनि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैवाऽतिशयाधानेन तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते, तद्द्वारेण फलापूर्वे । (२)आरादुपकारकाणि तु प्रयाजादीन्युत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते । एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गान्यपूर्वनिष्पत्तावनुग्राहकाणीत्येकरूपेणेत्थंभावेन स्वीक्रियन्ते । अनयैव दिशा सर्वत्राऽपूर्वप्रक्रियाऽवगन्तव्या ॥

अत्र गुरुमतमाह—

**यागक्रिया सूक्ष्मरूपा परमाण्वात्मसंश्रिता ।**
**यावत्फलं नियोगाख्यं नाऽपूर्वमिति चेन्न तत् ॥ ११ ॥**
**मानहीनं क्रियासौक्ष्म्यं नियोगस्तु लिङादिना ।**
**अभिधेयः पृथग्यागादपूर्वं कार्यमस्त्यतः ॥ १२ ॥**

गुरुणा यन्नियोगाख्यमपूर्वमभिप्रेयते, तन्नाऽस्ति । कुतः ? अन्तरेणैव तदपूर्वं फलनिष्पत्तेः । न च यागनाशात्कथं फलसिद्धिरिति वाच्यम् । न हि यागक्रिया सर्वात्मना

---

१. यागाङ्गद्रव्यदेवताद्युद्दिश्य विधीयमानं कर्म सन्निपत्योपकारकम् । यथा 'व्रीहीनवहन्ती'ति वाक्यं प्रकृतदर्शपूर्णमासयागाङ्गभूतव्रीहीनुद्दिश्याऽवहननं विधत्त इत्यवहननं सन्निपत्योपकारकं भवति ।

२. यागाङ्गद्रव्यदेवताद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् ।

नश्यति, किंतु सूक्ष्मरूपत्वेनाऽदृश्या सती स्वर्गदेहारम्भकेषु यागसंबन्धिद्रव्यगतपरमाणुषु यागकर्तर्यात्मनि वाऽवस्थाय फलमारभत इति **पूर्वपक्षः** ।

**नैतद्युक्तम्**; उक्तेऽर्थे प्रमाणाभावात् । न च ानयोगेऽपि प्रमाणाभावः शङ्कनीयः। वैदिकलिङ्गादीनां तदभिधायकत्वात् । ततो धात्वर्थातिरिक्तं कालान्तरभाविकाम्यफलसाधनमपूर्वमस्ति ॥

इति द्वितीयमपूर्वाधिकरणम् ॥ २ ॥

---

**अथ तृतीयं तानिद्वैधाधिकरणम् ॥ ३ ॥**

(१)तृतीयाधिकरणमारचयति—

**अवघातादिनाऽपूर्वमुत्पाद्यं विद्यते न वा ।**
**यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा ॥ १३ ॥**
**दृष्टे तुषविमोके तु नाऽपूर्वं द्रव्यतन्त्रतः ।**
**स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्वचः ॥ १४ ॥**

दर्शपूर्णमासयोः श्रूयते—(२)"व्रीहीनवहन्ति" "तण्डुलान् पिनष्टि" इति । तत्र अवघातपेषणे अपूर्वजनके, विहितधात्वर्थत्वात्, यजत्यादिधात्वर्थवत् । विपक्षे विधिवाक्यवैयर्थ्यरूपो बाधकस्तर्कोऽवगन्तव्यः । तुषविमोकचूर्णत्वयोर्दृष्टप्रयोजनयोर्लोकसिद्धत्वेन तादर्थ्येऽवघातपेषणयोर्विधिर्व्यर्थस्स्यात् । तस्मात् अस्त्यपूर्वमिति **प्राप्ते**—

**ब्रूमः**—दृष्टफले संभवत्यपूर्वं न कल्पनीयम् । यजत्यादिदृष्टान्तस्तु विषमः । तत्र हि क्रियाप्राधान्येन द्रव्यपारतन्त्र्याभावादपूर्वसाधनत्वं क्रियाया युक्तम् । इह तु 'व्रीहीन्' इति कर्मकारकविभक्त्या व्रीहीणामीप्सिततमत्वेन प्राधान्यावगमाद्द्रव्यपरतन्त्रोऽवघातो द्रव्य एवाऽतिशयं कुर्यात्, न त्वपूर्वं जनयति । न च विधिवैयर्थ्यम्, नखनिर्भेदनादिना तुषविमोकसंभवेऽपि अवघातेनैवाऽसौ कर्तव्य इति यो नियमस्तस्य नियमस्याऽपूर्वहेतुत्वेन विधेयत्वात् । तस्मान्नाऽस्त्यवघातादिजन्यमपूर्वम् ॥

---

१. धात्वर्थेभ्योऽपूर्वमिति भावार्थाधिकरणे स्थितम् । तदेतदपवदितुमिदमारभ्यत इत्यापवादिकी सङ्गतिः ।

२. अवहननेन व्रीहीन् संस्कुर्यात्, पेषणेन तण्डुलान् संस्कुर्यादिति वाक्यार्थः । पेषणं नाम चूर्णीकरणम् ।

अत्र गुरुमतमाह—

**द्वितीयां सक्तुवद्भङ्क्त्वा नियोगेऽन्वीयतां क्रिया ।**
**साक्षादिति न मन्तव्यं दृष्टस्याऽत्रोपपत्तितः ॥ १५ ॥**

"सक्तून् जुहोती" त्यत्र द्रव्यप्राधान्यं परित्यज्य द्वितीयाया भङ्गं कृत्वा क्रियाप्राधान्याय "सक्तुभिर्जुहोती"ति तृतीयात्वेन विपरिणामो वक्ष्यते । तथा 'व्रीहिभिरवहन्ती'ति विपरिणामेन प्रधानभूता क्रिया द्रव्यव्यवधानमन्तरेण साक्षादेव नियोगेऽन्वेत्विति **चेत्**—

**मैवम्**; वैषम्यात् । तत्र होमेन सक्तुषु संस्कारो न संभवति, भस्मीभूतानामन्यत्र विनियोगासंभवादित्यभिप्रेत्य संस्कारकर्मत्वं परित्यक्तम् । इह तु दृष्टस्तुषविमोकसंस्कार उपपद्यते, वितुषाणां तेषां पुरोडाशे विनियोगसंभवात् ॥

इति तृतीयं तानिद्वैधाधिकरणम् ॥ ३ ॥

## अथ चतुर्थं सम्मार्गाधिकरणम् ॥ ४ ॥

(१)चतुर्थाधिकरणमारचयति—

**समार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता ।**
**गुणकर्मत्वमथवा ? दृष्टाभावेऽवघातवत् ॥ १६ ॥**
**गुणत्वं न हि संभाव्यं, प्राधान्यं तु प्रयाजवत् ।**
**अदृष्टकल्पनेनाऽपि गुणत्वं स्याद्द्वितीयया ॥ १७ ॥**

दर्शपूर्णमासयोर्जुह्वादीनां दर्भैः सम्मार्जनमाम्नायते—(२)"स्रुचः संमार्ष्टि" इति । तत्र संमार्जनं प्रधानकर्म । कुतः ? गुणकर्मलक्षणरहितत्वात्, प्रधानकर्मलक्षणयुक्तत्वाच्च । सूत्रकारो हि कर्मणां राशिद्वयं प्रतिज्ञाय तयोर्लक्षणं पृथक्सूत्रयामास—(३) "तानि द्वैधं गुणप्रधानभूतानि"(४)"यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्" (५)"यैस्तु द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्" इति । यैः कर्मभिर्द्रव्यमुत्पादयितुं संस्कर्तुं वेष्यते, तेषु कर्मसु गुणत्वम् । कुतः ? तस्य कर्मणो द्रव्यप्रधानत्वात् । द्रव्यं प्रधानमस्येति बहुव्रीहिः । "यूपं तक्ष-

१. पूर्वाधिकरणसिद्धान्तहेतुभूतदृष्टोपकारकत्वस्याऽऽक्षेपादाक्षेपिकी सङ्गतिः ।
२. ( तै. ब्रा. ३. ३. १. ) सम्मार्गेण स्रुचस्संस्कुर्यात् । स्रुचः–जुह्वपभृद्ध्रुवाः ।
३. पू. मी. २. १. ६. ४. पू. मी. २. १. ८. ५. पू. मी. २. १. ७.

ति''(१)''आहवनीयमादधाति'' इत्यादौ यूपाहवनीयादिद्रव्यमुत्पादयितुमिष्यते । ''व्रीहीनवहन्ति'' ''तण्डुलान् पिनष्टि'' इत्यादौ व्रीह्यादिद्रव्यं संस्कर्तुमिष्टम् । प्रयाजादिसूक्तवैपरीत्यात्प्रधानकर्मत्वम् । एवं सत्यवघातेन यथा व्रीहीणां तुषविमोको दृष्टः संस्कारः, तथा संमार्जनेन जुह्वादिषु कंचिदतिशयं न पश्यामः । अतोऽवघातवद्गुणकर्मत्वाभावात्प्रयाजादिवत्प्रधानकर्मत्वमिति **प्राप्ते**—

**ब्रूमः**—'स्रुच' इति द्वितीया कर्मकारके विहिता । कर्मत्वं चेप्सिततमत्वे सति भवति (२)''कर्तुरीप्सिततमं कर्म'' इति कर्मसंज्ञाविधानात् । क्रतुसाधनत्वेन च स्रुचां युक्तमीप्सिततमत्वम् । अतः प्रधानभूताः स्रुचः । तथा सति संमार्जनक्रियाया गुणकर्मत्वमवघातवद्भविष्यति । यदि स्रुक्षु दृष्टोऽतिशयो न स्यात्, तर्ह्यपूर्वं कल्पनीयम् ॥

इति चतुर्थं सम्मार्गाधिकरणम् ॥ ४ ॥

## अथ पञ्चमं स्तुतशस्त्राधिकरणम् ॥ ५ ॥

(३)पञ्चमाधिकरणमारचयति—

**प्रउगं शंसतीत्यादौ गुणतोत प्रधानता ।**
**दृष्टा दैवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः ॥ १८ ॥**
**स्मृत्यर्थत्वे स्तौतिशंसयोर्धात्वोः श्रौतार्थबाधनम् ।**
**तेनाऽदृष्टमुपेत्याऽपि प्राधान्यं श्रुतये मतम् ॥ १९ ॥**

ज्योतिष्टोमे श्रूयते—(४)''प्रउगं शंसति'' (५)''निष्केवल्यं शंसति'' ''आज्यैस्स्तुवते'' ''पृष्ठैः स्तुवत'' इति । प्रउगनिष्केवल्यशब्दौ शस्त्रविशेषनामनी । आज्यपृष्ठशब्दौ तु व्याख्यातौ । (६)अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम् । (७)प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । तयोः स्तुतशस्त्रयोर्गुणकर्मत्वं युक्तम् । कुतः ? तुषविमोकवद्दृ-

---

१. सत्या. श्रौ. १. ६. ४४.　　२. पा. सू. १. ४. ४९.

३. पूर्वाधिकरणोक्तगुणकर्मत्वापवादादापवादिकी सङ्गतिः ।

४. प्रउगसंज्ञकशंसनेन ( शस्त्रेण ) प्रकृतज्योतिष्टोमापूर्वं भावयेदिति वाक्यार्थः ।

५. निष्केवल्यसंज्ञकेन शस्त्रेण प्रकृतज्योतिष्टोमापूर्वं भावयेदिति वाक्यार्थः ।

६. सामरहितैः केवलैर्मन्त्रैः स्तुतिः शस्त्रमित्यर्थः ।

७. सामविशिष्टमन्त्रैः स्तुतिः गुणिनिष्ठगुणबोधकशब्दप्रयोगः स्तोत्रमित्यर्थः ।

ष्टार्थलाभात्। पठ्यमानेषु मन्त्रेष्वनुस्मरणेन देवता (१)संस्क्रियत इति **प्राप्ते**--

**ब्रूमः**--स्तोतव्याया देवतायाः स्तावकैर्गुणैः संबन्धकीर्तनं स्तौतिशंसतिधात्वोर्वाच्योऽर्थः। यदि मन्त्रवाक्यानि गुणसम्बन्धाभिधानपराणि, तदा धात्वोर्मुख्यार्थलाभाच्छ्रुतिरनुगृहीता भविष्यति। यदा तु गुणद्वारेणाऽनुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि स्युः, तदा धात्वोर्मुख्योऽर्थो न स्यात्। लोके हि 'देवदत्तश्चतुर्वेदाभिज्ञः' इत्युक्ते स्तुतिः प्रतीयते, तस्य वाक्यस्य गुणसंबन्धपरत्वात्। यदा तु देवदत्तस्वरूपपरता 'यश्चतुर्वेदी तमानये'त्यादौ, तत्र न स्तुतिप्रतीतिः। तस्य चतुर्वेदसंबन्धद्वारेण देवदत्तस्वरूपोपलक्षणपरत्वेन गुणसंबन्धपरत्वाभावात्। ततश्च 'आज्यैर्देवं प्रकाशयेत्' 'पृष्ठैर्देवं प्रकाशयेत्' इत्येवं विध्यर्थपर्यवसानाद्धात्वोर्मुख्योऽर्थो बाध्येत। ततो धातुश्रुतिमबाधितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमभ्युपेतव्यम्। तत्र दृष्टं प्रयोजनं नाऽस्तीति चेत्—तर्ह्यपूर्वमस्तु॥

इति पञ्चमं स्तुतशस्त्राधिकरणम्॥ ५॥

## अथ षष्ठं विधिमन्त्राधिकरणम्॥ ६॥

(२)षष्ठाधिकरणमारचयति—

**देवांश्च याभिर्यजत इत्याख्यातं तु मन्त्रगम्।**
**विधायकं न वाऽन्येन समत्वात्तद्विधायकम्॥ २०॥**
**यच्छब्दादेः क्षीणशक्तिर्न विधिस्त्रिविधं ततः।**
**आख्यातमभिधानं च प्रधानगुणकर्मणी॥ २१॥**

अयं मन्त्र आम्नायते—(३)"देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह" इति। अयमर्थः—गोपतिर्यजमानो याभिर्गोभिर्देवान्यजते, याश्च गा ब्राह्मणेभ्यो ददाति, चिरमेव ताभिः सह परलोकेऽवतिष्ठत इति। तत्र यथा ब्राह्मणगतमाख्यातपदं प्रधानगुणकर्मणोरन्यतरस्य विधायकम्, तथा मन्त्रगतमपीति **चेत्**—

**मैवम्**: यच्छब्दादिना विधिशक्तेः क्षीणत्वात्। सति हि यच्छब्दे तस्य वाक्यस्याऽनुवादकत्वं प्रतीयते, न तु विधायकत्वम्। 'यच्छब्दादेः' इत्यादिशब्देनोत्तमपुरुषा-

१. गुणिबोधं विना तन्निष्ठगुणाभिधानासम्भवेन गुणिनोऽप्यभिधानावश्यकत्वे लिङ्गाद्दृष्टार्थे गुणिप्रकाशन एव स्तुतिशंसनयोर्विनियोगः कल्पनीयः—स्तोत्रशस्त्राभ्यां यागीयदेवतादिकं प्रकाशयेदिति। अतो गुणकर्मत्वमेव स्वीकर्तव्यमिति भावः।

२. पूर्वाधिकरणेनाऽस्य प्रासङ्गिकी सङ्गतिः। ३. तै. ब्रा. २. ४. ६. ९.

मन्त्रणादयः । (१)"बर्हिर्देवसदनं दामि" इत्युत्तमपुरुषः । (२)"अग्नीदग्नीन्विहर" इत्यामन्त्रणम् । एवं ब्राह्मणेऽपि (३)"यस्योभयं हविरार्त्तिमार्च्छेत्" इत्युदाहरणीयम् । तस्मात्—आख्यातस्य प्रधानकर्मविधायकत्वं गुणकर्मविधायकत्वं चेत्येवं द्वावेव प्रकारौ न भवतः, किन्तु 'अभिधायकत्वम्' इत्यप्यस्ति तृतीयः प्रकारः । ततो न मन्त्रगताख्यातस्य विधायकत्वम् ॥

इति षष्ठं विधिमन्त्राधिकरणम् ॥ ६ ॥

## अथ सप्तमं मन्त्रलक्षणाधिकरणम् ॥ ७ ॥

सप्तमाधिकरणमारचयति—

**अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् ।**
**नाऽस्त्यस्ति वाऽस्य नाऽस्त्येतदव्याप्त्यादेरवारणात् ॥ २२ ॥**
**याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।**
**तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥ २३ ॥**

आधान इदमाम्नायते—(४)"अहे बुध्निय मन्त्रं मे गोपाय" इति । तत्र मन्त्रस्य लक्षणं नाऽस्ति, अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात् । 'विहितार्थाभिधायको मन्त्रः' इत्युक्ते(५) "वसन्ताय कपिञ्जलानालभेत" इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । 'मननहेतुर्मन्त्रः' इत्युक्ते ब्राह्मणेऽतिव्याप्तिः । एवं 'असिपदान्तो

---

१. ( मै. सं. १. १. २. ) देवोपसदनयोग्यं बर्हिः खण्डयामीत्यर्थः ।

२. (श.ब्रा. ४.२.४.११.) हे अग्नीत् अग्नीन् गार्हपत्यादीन् विहर प्रज्वालयेत्यर्थः ।

३. ( तै. ब्रा. ३. ७. १. ७. ) यस्य यजमानस्य उभयं हविः सायंप्रातःकालिकं चेत्युभयं दधिपयोरूपं आर्त्तिमार्च्छेत् नश्येत् केनाऽपि कारणवशेन, स यजमानः तद्दोषपरिहारार्थं इन्द्रदेवताकशरावपञ्चकपरिमितव्रीहिनिष्पन्नतण्डुलसम्पाद्यचरुद्रव्यकयागमनुतिष्ठेदित्यर्थः । शरावः–मृन्मयपात्रविशेषः । मडक्कु इति द्रविडभाषायाम्, परई इति हिन्दीभाषायाञ्च प्रसिद्धः ।

४. ( तै. ब्रा. १. २. १. २६. ) अहिर्बुध्न्यः देवताविशेषः, परमेश्वर इति केचित् । हे अहे बुध्निय मदीयं मन्त्रं रक्ष । य मन्त्रं त्रैविद्यवृद्धाः जानन्तीत्यर्थः ।

५. ( मा. सं. २४. २०, मै. सं. ३. १४. १. ) अश्वमेधप्रकरणस्थोऽयं मन्त्रः । यद्यप्ययं मन्त्रत्वेन प्रसिद्धः, तथाऽप्यस्य विधिरेव कार्यम् । वसन्तदेवताकेन कपिञ्जलाख्यपक्षिविशेषत्रितयद्रव्यकेण यागेनेष्टं भावयेदित्यर्थः ।

मन्त्रः' 'उत्तमपुरुषान्तो मन्त्रः' इत्यादिलक्षणानां परस्परमव्याप्तिरिति **चेत्**—

**मैवम्**; याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् । तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति । (१)"उरु प्रथस्व" इत्यादयोऽनुष्ठानस्मारकाः । (२)"अग्निमीळे पुरोहितम्" इत्यादयः स्तुतिरूपाः । (३) "इषे त्वा" इत्यादयस्त्वान्ताः । (४)"अग्न आ याहि वीतये" इत्यादय आमन्त्रणोपेताः । (५)"अग्नीदग्नीन्विहर" इत्यादयः प्रैषरूपाः । (६)"अधः स्विदासीदुपरि स्विदासीत्" इत्यादयो विचाररूपाः । (७)"अम्बे अम्बिके अम्बालिके न मा नयति कश्चन" इत्यादयः परिदेवनरूपाः ।(८) "पृच्छामि त्वा परमन्तं पृथिव्याः" इत्यादयः प्रश्नरूपाः । (९)"वेदिमाहुः परमन्तं पृथिव्याः" इत्यादय उत्तररूपाः । एवमन्यदप्युदाहर्तव्यम् । ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नाऽन्यः कश्चिदनुगतो धर्मोऽस्ति, यस्य लक्षणत्वमुच्येत । लक्षणस्योपयोगश्च पूर्वाचार्यैर्दर्शितः—

(१०)"ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः" ॥ इति ।

तस्मात्—अभियुक्तानां "मन्त्रोऽयम्" इति समाख्यानं लक्षणम् ॥

इति सप्तमं मन्त्रलक्षणाधिकरणम् ॥ ७ ॥

---

## अथाऽष्टमं ब्राह्मणलक्षणाधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**नाऽस्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा ।**
**नाऽस्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥ २४ ॥**
**मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ।**
**अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ॥ २५ ॥**

चातुर्मास्येष्विदमाम्नायते—(११) "एतद्ब्राह्मणान्येव पञ्च हवींषि' इति ।

---

१. तै. सं. १. १. ८. २. ऋ. सं. १. १. १. ३. तै. सं. १. १. १.
४. ऋ. सं. ४. ५. २२; तै. ब्रा. ३. ५. २. १.
५. श. ब्रा. ४. २. ४. ११. ६. तै. ब्रा. २. ८. ९. ५.
७. ( मा. सं. २३. १८. ) एतानि राजपत्नीविशेषणां नामानि ।
८. तै. सं. ७. ४. १८. ९. तै. सं. ७. ४. १८. १०. शा. भा. २. १. ७.
११. ( तै. ब्रा. १. ७. १. ) वरुणप्रघासपवर्ण्यैतच्छ्रुतम् । पञ्च हवींषि वरुण-

तत्र ब्राह्मणस्य लक्षणं नाऽस्ति । कुतः ? वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याऽव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात् । पूर्वोक्तो मन्त्रभाग एकः । भागान्तराणि च कानिचित्पूर्वैरुदाहर्तुं संगृहीतानि—

"हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना" ॥ इति ॥

(१)"तेन ह्यन्नं क्रियते" इति हेतुः। (२)"तद्दध्नो दधित्वम्" इति निर्वचनम् । (३)"अयज्ञिया वै माषाः" इति निन्दा । (४)"वायुर्वै क्षेपिष्ठा देवता" इति प्रशंसा। (५)"तद्व्यचिकित्सज्जुहवानि, मा हौषम्" इति संशयः । (६)"यजमानेन संमितौदुम्बरी भवति" इति विधिः । "माषानेव मह्यं पचते"ति परकृतिः । "पुरा ब्राह्मणा अभैषु"रिति पुराकल्पः । (७)"यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति विशेषावधारणकल्पना । एवमन्यदप्युदाहार्यम् ।

न च 'हेत्वादीनामन्यतमं ब्राह्मणम्' इति लक्षणम् । मन्त्रेष्वपि हेत्वादिसद्भावात् । तथा हि—(८)"इन्दवो वामुशन्ति हि" इति हेतुः । (९)"उदानिषुर्महीरिति तस्मादुदकमुच्यते" इति निर्वचनम् । (१०)"मोघमन्नं विन्दते अप्रचेताः" इति निन्दा । (११)"अग्निर्मूर्धा दिवः ककुत्पतिः" इति प्रशंसा। (१२)"अधः स्विदासी३दुपरि स्विदासीत्" इति संशयः। (१३)"कपिञ्जलानालभेत" इति विधिः । "सहस्रमयुता ददत्" इति परकृतिः । (१४)"यज्ञेन यज्ञमयजन्त देवाः" इति पुराकल्पः । 'इतिकरणबहुलं ब्राह्मणम्' इति चेत्—न; (१५)"इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्" इत्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः । 'इत्याहेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणम्' इति चेत्—न; (१६)"राजा चित्रं भगं भक्षीत्याह" (१७)"योवा रक्षाः शुचिरस्मीत्याह" इत्यनयोर्मन्त्रयोरतिव्याप्तेः । 'आख्यायिकारूपं ब्राह्मणम्' इति चेत्—न; यमयमीसं-

---

प्रघासपर्वगतानि आग्नेयसौम्यसावित्रसारस्वतपौष्णरूपाणि एतद्ब्राह्मणान्येव—वैश्वदेवपर्वगतब्राह्मणविधिविधेयान्येव । वैश्वदेवपर्वणि आग्नेयादीनां पञ्चानां हविषां यान्यङ्गविधायकानि वाक्यानि तान्येव वाक्यानि तद्विधेयाङ्गानि वा वरुणप्रघासपञ्चहविष्ष्वप्यतिदेष्टव्यानीत्यर्थः ।

१. 'शूर्पेण ह्यन्नं क्रियत' ( श. ब्रा. २. ५. २. २३. ) इति पाठः ।
२. तै. सं. २. ५. ३. ४.　३. मै. सं. १. ४. १०.
४. तै.सं. २.१.१.　५. तै. ब्रा. २. १. २.　६. तै.सं. ६. २. १०.
७ तै. सं. २. ३. १२.　८. तै. सं. १. ४. ४.　९. तै. सं. ५. ६. १.
१०. ऋ. सं. ८. ६. २३, तै. ब्रा. २. ८. ८. ३.　११. ऋ.सं.६.३. ३९,
१२. तै. ब्रा. २. ८. ९. ५.　१३. मां. सं. २४. २०.　१४. तै. सं. ५. ३. १०.
१५. तै. ब्रा. ३. ९. १४.　१६. तै. ब्रा. २. ८. ९.　१७. ऋ. सं. ५. ७. ८.

वादसूक्तादावतिव्याप्तेः । तस्मात् नाऽस्ति ब्राह्मणस्य लक्षणमिति **प्राप्ते**—

**ब्रूमः**—मन्त्रब्राह्मणरूपौ द्वावेव वेदभागावित्यङ्गीकारान्मन्त्रलक्षणस्य पूर्वमभिहितत्वात् 'अवशिष्टो वेदभागो ब्राह्मणम्' इत्येतल्लक्षणं भवतीति ॥

इत्यष्टमं ब्राह्मणलक्षणाधिकरणम् ॥ ८ ॥

---

**अथ नवमं ऊहाद्यमन्त्रताधिकरणम् ॥ ९ ॥**

नवमाधिकरणमारचयति—

**ऊहप्रवरनाम्नां किं मन्त्रताऽस्त्यथवा न हि ।**
**मन्त्रास्तदेकवाक्यत्वान्न तल्लक्षणवर्जनात् ॥ २६ ॥**

(१)"अग्नये जुष्टं निर्वपामि" इत्यस्य सौर्ये चरौ 'सूर्याय जुष्टं निर्वपामि' इत्येवं पदान्तरप्रक्षेप ऊहः । (२)"अदीक्षिष्टाऽयं ब्राह्मणः" इत्यस्य मन्त्रस्य शेषत्वेन प्रयोगकाले ब्राह्मणनामधेयविशेषं तदीयप्रवरं चैवं पठन्ति—'असौ देवदत्तोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्ता' इति । 'आङ्गिरसबार्हस्पत्य-भारद्वाजगोत्रः' इति च । एतेषामूहप्रवरनामधेयानां मन्त्रत्वमस्ति । कुतः ? मन्त्रेण सहैकवाक्यत्वादिति **चेत्**—

**मैवम्** ; याज्ञिकप्रसिद्धिरूपस्य मन्त्रलक्षणस्यैतेष्वभावात् । न ह्यध्येतार ऊहादीन्मन्त्रकाण्डेऽधीयते । तस्मात् नाऽस्ति मन्त्रत्वम् ॥

इति नवमं ऊहाद्यमन्त्रताधिकरणम् ॥ ९ ॥

---

**ऋक्सामयजुर्लक्षणाधिकरणम् ॥ १०-१२ ॥**

दशमैकादशद्वादशाधिकरणमारचयति—

**नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते ।**
**पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः ॥ २७ ॥**

---

१. तै. सं. १. १. ४. २.

२. सोमयागे यमनियमपरिग्रहरूपदीक्षाग्रहणानन्तरं अध्वर्युणा पठनीयोऽयं मंत्रः । अयं ब्राह्मणः दीक्षां गृहीतवान् 'अमुकशर्मा अमुकस्य पुत्रः' इत्यादि ।

इदमाम्नायते—(१)"अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः— ऋचस्सामानि यजूंषि" इति । त्रीन्वेदान्विदन्तीति त्रिविदः, त्रिविदां संबन्धिनोऽध्येतारस्त्रैविदाः । ते च यं मन्त्रभागमृगादिरूपेण त्रिविधमाहुः, तं गोपायेति योजना । तत्र त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नाऽस्ति । कुतः ? सांकर्यस्य दुष्परिहरत्वात् । 'अध्यापकप्रसिद्धेर्ऋग्वेदादिषु पठितो मन्त्र ऋगादिः' इति हि लक्षणं वक्तव्यम् । तच्च संकीर्णम् । (२)"देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इत्ययं मन्त्रो यजुर्वेदे संप्रतिपन्नयजुषां मध्ये पठितः । न च तस्य यजुष्ट्वमस्ति । तद्ब्राह्मणे "सावित्र्यर्चा" इत्यृक्त्वेन व्यवहृतत्वात् । (३)"एतत्साम गायन्नास्ते" इति प्रतिज्ञाय किंचित्साम यजुर्वेदे गीतम् । "अक्षितमसि" "अच्युतमसि" "प्राणसंशितमसि" इति त्रीणि यजूंषि सामवेदे समाम्नातानि । तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते । तस्मात् नाऽस्ति लक्षणमिति **चेत्**—

**न**; पादादीनामसंकीर्णलक्षणत्वात् । (४)पादेनाऽर्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः, गीतिरूपा मन्त्राः सामानि, वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि इत्युक्ते न काऽपि संकरः ॥

इति ऋक्सामयजुर्लक्षणाधिकरणम् ॥१०–१२ ॥

---

## अथ त्रयोदशं निगदाधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

**प्रोक्षणीरासादयेति निगदस्त्रिविधाद्बहिः ।**
**यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता ॥ २८ ॥**
**परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः ।**
**तल्लक्षणेन युक्तत्वात्त्रैविध्यमिति सुस्थितम् ॥ २९ ॥**

(५)"प्रोक्षणीरासादय" (६)"इध्माबर्हिरुपसादय" (७)"अग्निदग्नीन्विहर"

---

१. तै. ब्रा. १. २. १. २६.

२. ( तै. सं. १. १. ५. ) दर्शपूर्णमासयोः प्रोक्षण्युत्पवनार्थोऽयं मन्त्रः । हे आपः देवस्सविता छिद्ररहितेन पवित्रेण, व्यापकस्य सूर्यस्य रश्मिभिश्च वः उत्पुनात्वित्यर्थः ।　　३. तै. आ ९. १०. ५.

४. पादबन्धेनाऽर्थबन्धेन चोपेता इति. ख. पु.　　५. तै. ब्रा. ३. २. १०. १४.

६. तै. ब्रा. ३. २. १०. १४.　　७. श. ब्रा. ४. २. ४. ११.

(१)"बर्हिः स्तृणीहि" (२)"इन्द्र आगच्छ, हरिव आगच्छ" इत्यादयो निगदा आम्नाताः । (३)परप्रत्यायनार्था मन्त्रा निगदाः । एते च पूर्वोक्तेभ्य ऋग्यजुसामभ्यो बहिर्भूताश्चतुर्थप्रकाराः । कुतः ? पादगीत्योः ऋक्सामलक्षणयोरभावात् । प्रश्लिष्टपाठस्य यजुर्लक्षणस्य सत्त्वेऽपि धर्मभेदेन यजुष्यन्तर्भावानुपपत्तेः । 'उपांशु यजुषा उच्चैर्निगदेन' इति हि धर्मभेद इति प्राप्ते—

**ब्रूमः**—'बहिर्ब्राह्मणा भोज्यन्ताम्, परिव्राजकास्त्वन्तः' इत्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषो यथा, तथा निगदानां यजुर्लक्षणोपेतत्वेन यजुषामेव सतां परप्रत्यायननिमित्तमुच्चैस्त्वधर्मः । ततो मन्त्राणां त्रैविध्यं सुस्थितम् ॥

इति त्रयोदशं निगदाधिकरणम् ॥ १३ ॥

---

## अथ चतुर्दशमेकवाक्यताधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**देवस्य त्वेति वाक्यस्य भिन्नत्वमथवैकता ।**
**ऐक्यप्रयोजकस्याऽत्र दुर्बोधत्वेन भिन्नता ॥ ३० ॥**
**विभागे सति साकाङ्क्षस्यैकार्थत्वं प्रयोजकम् ।**
**तस्माद्वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते ॥ ३१ ॥**

दर्शपूर्णमासयोराम्नायते—(४)"देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्याम्, पूष्णो हस्ताभ्याम्, अग्नये जुष्टं निर्वपामि" इति । तत्र वाक्यानि भिन्नानि भवितुमर्हन्ति । कुतः ? एकत्वनियामकस्य दुर्बोधत्वात् । अर्थैक्यं वाक्यैक्ये प्रयोजकमिति चेत्—न ; एकस्मिन् पदेऽतिव्याप्तेः । पदसमूहस्य वाक्यत्वे, समूहानामत्र बहूनां सम्भवाद्वाक्यभेदः स्यादिति चेत्—

**मैवम्** ; 'यद्विभागे साकाङ्क्षमविभागे चैकार्थम्, तदेकं वाक्यम्' इति प्रयोजकस्य बोद्धुं शक्यत्वात् । 'विभागे साकाङ्क्षम्' इत्युक्तेऽतिव्याप्तिः स्यात् । (५)"स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि, तस्मिन्सीदाऽमृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इत्यत्र 'तस्मिन्' इत्यादिपदसमूहस्य विभागे सति प्रकृतवाचि-

---

१. श. ब्रा. ४. २. ४. ११.
२. तै. आ. १. १२. ३.
३. परसंबोधनार्था इति. ख. पु.
४. तै. सं. १. १. ४. २.
५. तै. ब्रा. ३. ७. ५.

तच्छब्दार्थनिर्णयाय पूर्वपदसमूहसाकाङ्क्षत्वमस्ति । अतस्तद्व्यवच्छेत्तुम्—'एकार्थम्' इत्युच्यते । न हि तत्रैकार्थत्वमस्ति । पूर्वसमूहस्य सदनकरणमर्थः, उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनम् । स्योनं समीचीनम् । सुशेवं सुष्ठु सेवितुं योग्यम् । मेध्र सारभूत पुरोडाशेत्यर्थः । अत्र द्वयोः पदसमूहयोर्वाक्यद्वयत्वमुभयवादिसिद्धम् । (१)तदेतत् 'एकार्थम्' इत्यनेन व्यावर्त्यते । 'एकार्थम्' इत्युक्तेऽतिव्याप्तिः स्यात् । "भगो वां विभजतु, पूषा वां विभजतु" इत्यनयोः (२)विभिन्नमन्त्रत्वेन सम्मतयोः पदसमूहयोस्तात्पर्यविषयस्य द्रव्यविभागरूपस्याऽर्थस्यैकत्वात्, तद्व्यवच्छेत्तुं 'विभागे साकाङ्क्षम्' इत्युक्तम् । प्रकृते तु "अग्नये जुष्टम्" इत्यादिसमूहे पृथक्कृते पूर्वो 'देवस्य त्वा' इति समूहः साकांक्षो भवति । एकीकृते तु कृत्स्नस्यैक एव निर्वापोऽर्थः । एतेनैकवाक्यत्वनिर्णयेनाऽनियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यम् ॥

इति चतुर्दशमेकवाक्याधिकरणम् ॥ १४ ॥

---

## अथ पञ्चदशं वाक्यभेदाधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे ।**
**असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात् ॥ ३२ ॥**
**छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे ।**
**आध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः ॥ ३३ ॥**

(३) "इषे त्वा ऊर्जे त्वा" इति श्रूयते । सोऽयं पदसमुदाय एको मन्त्रः । कुतः ? अस्य मन्त्रस्याऽदृष्टार्थत्वेनैकस्यैवाऽदृष्टस्य कल्पने लाघवात् । न च (४)"उरु प्रथस्वे"त्यादिमन्त्रवदनुष्ठेयार्थस्मारकत्वं सम्भवति, क्रियापदाभावेन तदर्थप्रतीत्यभावादिति **प्राप्ते—**

**ब्रूमः**—(५)'इषे त्वेत्याच्छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति पलाशशाखायाश्छेदनमार्जनयोरेतौ विनियुक्तौ । ततस्तदनुसारेण 'छिनद्मि' 'अनुमार्ज्मी'त्येवं क्रियापदेऽध्याहृते सत्यनुष्ठेयार्थस्मारकत्वादर्थभेदेन वाक्यभेदाद्यजुर्मन्त्रभेदः । 'इष्यमाणायाऽन्नाय भोः पलाशशाखे त्वा छिनद्मि' 'ऊर्जे रसाय बलाय वा त्वामनुमार्ज्मी'त्यर्थभेदः । एवं(६)"आ-

---

१. तदेकार्थमिति. ख. पु.		२. विभजनमन्त्रत्वेनेति. क. पु.
३. तै. सं. १. १. १.		४. तै. सं. १. १. ८.
५. आप. श्रौ. १. १. ११.		६. तै. सं. १. ७. ९.

युर्यज्ञेन कल्पताम्" "प्राणो यज्ञेन कल्पताम्" इत्यादौ क्लृप्तिसामान्यरूपस्याऽर्थस्यैकत्वेऽप्यायुरादिभिर्भिन्नत्वादर्थभेदवाक्यभेदयोः स्पष्टत्वात्, "क्लृप्तीर्वाचयती"ति क्लृप्तिबहुत्वस्य चोदितत्वाच्च यजुर्भेदो द्रष्टव्यः ॥

इति पञ्चदशं वाक्यभेदाधिकरणम् ॥ १५ ॥

---

### अथ षोडशमनुषङ्गाधिकरणम् ॥ १६ ॥

षोडशाधिकरणे प्रथमं वर्णकमारचयति—

**या ते अग्ने रजेत्यध्याहारो यद्वाऽनुषञ्जनम् ।**
**तनूरित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः ॥ ३४ ॥**
**वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम् ।**
**अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः ॥ ३५ ॥**

ज्योतिष्टोम (१)उपसद्धोमेष्वेवमाम्नायते—(२)"या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा । या ते अग्ने रजाशया, या ते अग्ने हराशया" इति । अयमर्थः—अयसा रजतेन हिरण्येन च निर्मिता अग्नेरितस्तनवः । तास्वाद्या येयमुक्ता तनूः साऽतिशयेन वृद्धा, गह्वरे तीक्ष्णे द्रव्ये लोहेऽवस्थिता । तया तन्वा क्षुत्पिपासे उपपातकम्, वीरहत्यादिमहापातकं च हतवानसीति । तथा च ब्राह्मणम्—"यदुग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेति । अशनायापिपासे ह वा उग्रं वचः, एनश्च वैरहत्यं च त्वेषं वचः" इति । तत्र स्वाहान्तः प्रथमो मन्त्रः सम्पूर्णवाक्यत्वान्निराकाङ्क्षः । द्वितीयतृतीययोर्मन्त्रयोराकाङ्क्षां पूरयितुमुचितो लौकिको वाक्यशेषोऽध्याहर्तव्यः । न हि 'तनूर्वर्षिष्ठा' इत्यादिभागस्तयोरन्वेतुं योग्यः, तस्य प्रथममन्त्रशेषत्वादिति प्राप्ते—

**ब्रूमः**—वैदिकयोर्मन्त्रयोराकाङ्क्षा वैदिकेनैव वाक्यशेषेण पूरणीया । ततः 'तनूर्वर्षिष्ठे' त्यादिभाग उत्तरयोर्मन्त्रयोरनुषज्यते । यद्यप्यसावन्यमन्त्रस्य शेषः, तथाऽपि बुद्धिस्थः सन् कल्पनीयादध्याहारात्सन्निकृष्यते । तस्मादनुषङ्गः कर्तव्यः ॥

---

१. "औपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्नेऽयाशया तनूरिति स्रुवेणोपसदं जुहोती" (आप. श्रौ. ११. ३. १२. )ति सूत्रं द्रष्टव्यम् ।

२. तै. सं. १. २. ११; मा. सं. ५. ८; 'या ते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वनेष्ठे'ति ( मै. सं. १. २. ७. ) पाठः ।

द्वितीयं वर्णकमारचयति—

नाऽनुषङ्गोऽनुषङ्गो वाऽच्छिद्रेणेत्यस्य शेषिणौ ।
चित्पतिस्त्वेत्यनाकाङ्क्षावतो नाऽत्राऽनुषज्यते ॥ ३६ ॥
करणत्वं क्रियापेक्षं क्रिया चैका पुनात्विति ।
मन्त्रत्रयेऽतस्तद्द्वारा सर्वशेषोऽनुषज्यते ॥ ३७ ॥

ज्योतिष्टोमे दीक्षाप्रकरणे पठ्यते—(१) "चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इति । तत्र तृतीयमन्त्रशेषः 'अच्छिद्रेणे'त्यादिभागः प्रथमद्वितीययोर्मन्त्रयोर्नानुषज्यते । कुतः ? निराकाङ्क्षत्वात् । न हि "चित्पतिस्त्वा पुनातु" "वाक्पतिस्त्वा पुनातु" इत्यनयोः शेषिणोः सम्पूर्णवाक्ययोः काचिच्छेषाकाङ्क्षाऽस्तीति प्राप्ते—

ब्रूमः—मा भूच्छेषिणोराकाङ्क्षा, तथाऽपि शेषस्याऽऽकाङ्क्षाऽस्ति । 'पवित्रेण रश्मिभिः' इत्युक्तं करणत्वं हि क्रियामपेक्षते । क्रिया च 'पुनातु' इत्येषा त्रिष्वपि मन्त्रेष्वेका । तया क्रियया सम्बद्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षेऽपि यथाऽन्वेति, तथा पूर्वयोरप्यन्वेतुमर्हति । तस्मादस्त्यनुषङ्गः ॥

इति षोडशमनुषङ्गाधिकरणम् ॥ १६ ॥

---

अथ सप्तदशं व्यवायाधिकरणम् ॥ १७ ॥

सप्तदशाधिकरणमारचयति—

गच्छतामिति शब्दस्याऽनुषङ्गोऽस्ति न वोपरि ।
सं यज्ञपतिरित्यत्र योग्यत्वात्सोऽस्ति पूर्ववत् ॥ ३८ ॥
तदेकवचनं मध्यमन्त्रेऽङ्गानीत्यनेन हि ।
नाऽन्वेति तद्व्यवायेन नोपर्यप्यनुषज्यते ॥ ३९ ॥

इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां
द्वितीयाध्यायस्य प्रथमः पादः ॥

---

१. तै. सं. १. २. १.

अग्नीषोमीयपशौ श्रूयते—(१) "सं ते प्राणो वातेन गच्छताम्, समङ्गानि यजत्रैः, सं यज्ञपतिराशिषा" इति। अयमर्थः—'भोः पशो तव प्राणो वातेन बाह्येन वायुना सङ्गच्छताम्, तव हृदयाद्यङ्गानि यागविशेषैः संयुज्यन्ताम्, यज्ञपतिराशिषा संयुज्यताम्' इति। तत्र 'यज्ञपतिरि'त्यस्मिंस्तृतीये मन्त्रे समित्युपसर्गस्य क्रियापदाकाङ्क्षत्वात्प्रथममन्त्रगतस्य 'गच्छताम्' इति पदस्यैकवचनान्तस्य यज्ञपतिशब्देनाऽन्वेतुं योग्यत्वात्पूर्ववद्बुद्धिस्थत्वेन सन्निहितत्वादाकाङ्क्षासन्निधियोग्यतानां सद्भावेन क्रियापदमनुषज्यत इति प्राप्ते—

**ब्रूमः**—मध्यमसन्त्रे बहुवचनान्तेन 'अङ्गानि' इत्यनेनान्वेतुमयोग्यत्वात्तद्व्यवायेन बुद्धिसन्निध्यभावान्नाऽस्त्यनुषङ्गः। ततो द्वितीयतृतीयमन्त्रयोर्यथोचितं वाक्यशेषोऽध्याहर्तव्यः॥

इति सप्तदशं व्यवायाधिकरणम्॥ १७॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे द्वितीयाध्यायस्य प्रथमः पादः॥ १॥**

---

## अथ द्वितीयाध्यायस्य द्वितीयः पादः॥

### तत्र प्रथमं शब्दान्तराधिकरणम्॥ १॥

(२)द्वितीयपादस्य प्रथमाधिकरणमारचयति—

**ददाति यजतीत्यादौ भावनैक्यमुतान्यता।**
**आख्यातैक्यात्तदेकत्वं धातुभेदोऽप्रयोजकः॥ १॥**
**धातुभेदेन भिन्नत्वमाख्याते श्रूयते ततः।**
**उत्पत्त्येकानुरक्तत्वाद्भिद्यन्ते भावना मिथः॥ २॥**

---

१. श. ब्रा. ३. ७. ४. ८; 'सन्ते वायुर्वातेन गच्छतामि' (मै. सं. १ २. १५.) ति पाठः।

२. पूर्वस्मिन् पादे उपोद्धातप्रसक्तानुप्रसक्तं वृत्तम्। इदानीमस्मिन् पादेऽवसरप्राप्तोऽध्यायार्थभूतो भावनाभेदः प्राधान्येन शब्दान्तरा, भ्यास, संख्या, संज्ञा, गुण, प्रकरणान्तरैष्षड्भिः प्रमाणैः प्रतिपाद्यते। तत्राऽपि शब्दान्तरस्थले धात्वर्थभेदस्य स्पष्टत्वेन तद्भेदनिबन्धनभावनाभेदस्य सुखेनोपपादयितुं शक्यत्वात् सूचीकटाहन्यायेन प्रथमं तस्यैव भेदकता निरूप्यत इति बोध्यम्॥

इहैकप्रकरणगतान्यपर्यायधातुनिष्पन्नान्याख्यातानि यजति, ददाति, जुहोतीत्यादीन्युदाहरणम् । तानि चैवं श्रूयन्ते—"सोमेन यजेत"(१) "हिरण्यमात्रेयाय ददाति"(२) "दाक्षिणानि जुहोति" इति । तेषु भावनावाचिन आख्यातस्यैकत्वाद्भावनाया एकत्वं युक्तम् । न च धातुभेदाद्भावनाभेदः । तद्वाचित्वाभावेन धातोस्तस्यामप्रयोजकत्वादिति प्राप्ते—

**ब्रूमः**—अस्त्वाख्यातमेव भावनायाः प्रयोजकम् । तच्चाऽऽख्यातं प्रतिधातु भिन्नम् । न हि बहूनां धातूनामुपर्येक आख्यातप्रत्ययः श्रूयते । नाऽपि व्याकरणे धातुसमूहादेकमाख्यातं विहितम् । तत आख्यातानां बहूनामेकैकधातुविशेषानुरक्तत्वेनैवोत्पन्नानां भावनावाचित्वेन यागदानहोमभावनाः परस्परं भिद्यन्ते ॥

अत्र गुरुतमाह—

**नियोगैकत्वतः शास्त्रमभिन्नमिति चेन्न तत् ।**
**धातुभेदाच्छास्त्रभेदे नियोगो भिद्यते बलात् ॥ ३ ॥**

कर्मभेदचिन्ता नाऽध्यायार्थः, किंतु शास्त्रभेदचिन्तेति गुरोर्मतम् । तत्र यजेत, दद्यात्, जुहुयादित्येतेषु लिङ्प्रत्ययवाच्यस्य नियोगस्यैकत्वाद्धातूनां नियोगवाचकत्वाभावेनाऽप्रयोजकत्वादेकनियोगार्थं कृत्स्नं शास्त्रमेकमिति **पूर्वपक्षः** ।

प्रतिधातु लिङ्प्रत्ययस्य भिन्नत्वाद्धात्वर्थानुबन्धभेदेन तद्विशिष्टे नियोगेऽपि भेदस्य वारयितुमशक्यतया नियोगानुसारि शास्त्रं भिन्नमिति **सिद्धान्तः** ॥

इति प्रथमं शब्दान्तराधिकरणम् ॥ १ ॥

---

**अथ द्वितीयमभ्यासाधिकरणम् ॥ २ ॥**

(३)द्वितीयाधिकरणमारचयति—

**समिधो यजतीत्यादावेकत्वमुत भिन्नता ।**

---

१. श. ब्रा. ( ४. ३. ४. २१. ) अस्याऽर्थः ७१ पृष्ठे टिप्पण्यां द्रष्टव्यः ।

२. ( तै. सं. ६. ६. १. १. ) सोमयागे माध्यन्दिनसवने दक्षिणादानात्पूर्वं क्रियमाणानि हवनानि दाक्षिणानीत्युच्यन्ते । दक्षिणां दित्सुना क्रियमाणत्वाद्दाक्षिणानीत्येषां संज्ञा । तदाहाऽऽपस्तम्बः—'प्रचरण्या दाक्षिणानि जुहोति हिरण्यं प्रबध्य घृतेऽवदायोदुत्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति' ( आ. श्रौ. १३. ५. ६. ) इति ।

३. पूर्वाधिकरणवदिह धात्वर्थभेदाभावान्न भावनाभेद इति पूर्वपक्षोत्थानात्प्रत्युदाहरणसङ्गतिः ।

**धातुप्रत्यययोरैक्यादेकत्वं भिन्नता कुतः ॥ ४ ॥**
**अभ्यासात्कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे ।**
**विधित्वं श्रुतितो भाति सन्निधेरनुवादता ॥ ५ ॥**

दर्शपूर्णमासयोः श्रूयते—(१) "समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इति । तत्र पञ्चकृत्वः श्रूयमाणे यजतिपदे पूर्वोक्तेषु 'यजति ददाति' इत्यादिपदेष्विव धातुभेदो नाऽस्ति, येन भावनाभेद आशङ्क्येत । तस्मादाख्यातैक्यप्रयुक्तं भावनैक्यमनिवार्यमिति चेत्—

**मैवम्**; यजतिपदाभ्यासेन कर्मभेदावगमात् । कर्मैकत्वेऽभ्यासो निरर्थकः स्यात् । अथोच्येत—'समिधो यजति' इत्यनेन प्रथमश्रुतेन वाक्येन विहितं समिन्नामकं यागमुपरितनैश्चतुर्भिर्यजतिपदैरनूद्य तनूनपादादयो देवतारूपा द्रव्यरूपा वा गुणाश्चत्वारो विकल्पिता विधीयन्ते, ततोऽनुवादार्थत्वान्नाभ्यासवैयर्थ्यमिति । तन्न; तनूनपादादिशब्दानां यागनामत्वेन गुणविधित्वाभावात् । न तावदत्र देवताविधिः, चतुर्थीतद्धितयोरश्रवणात् । नाऽपि द्रव्यविधिः, तृतीयान्तत्वाभावात् । ततः "अग्निहोत्रं जुहोति" इत्यादाविव द्वितीयान्तानां युक्तं नामत्वम् । यत्तु—चतुर्णामुपरितनानां यजतिपदानामनुवादत्वम् । तदसत्; तेषां विधायकत्वात् । यथा 'समिधो यजति' इत्यत्र यजतिपदे विधित्वं श्रुत्या प्रतीयते, तथाऽन्येष्वपि चतुर्षु पदेषु विधित्वं श्रौतम् । अनुवादत्वं तु पुरोवादरूपस्य 'समिधो यजति' इत्यस्य सन्निधिनाऽवगम्यते । सन्निधिश्च श्रुतेर्दुर्बलः । विधित्वे च पूर्ववाक्यविहितस्य समिन्नामकस्य यागस्य पुनर्विधानायोगात्तनूनपादादिनामकानि यागान्तराणि विधीयन्ते ।

नन्वेवं सति संज्ञाभेदात्कर्मभेदः सम्पद्यते, न त्वभ्यासात् । तथासति वक्ष्यमाणेनाधिकरणेन संकीर्येत । मैवम्; वैषम्यात् । (२)"अथैष ज्योतिः" इत्यस्मिन् वक्ष्यमाणोदाहरणे यागावगमात्प्रागेव संज्ञात्वावगमात्संज्ञायाः कर्मभेदहेतुत्वम् । इह तु—विधायकैर्यजतिपदैर्यागेष्ववगतेषु, भेदे चाभ्यासादवगते, भिन्नानां यागानां समित्संज्ञाया अन्यास्संज्ञा अपेक्षिता इति तनूनपादादीनां संज्ञात्वं पश्चादवगम्यते । तस्मात् अभ्यास एवाऽत्र भेदहेतुः ॥

इति द्वितीयमभ्यासाधिकरणम् ॥ २ ॥

---

१. तै. सं. १. १. २; श. ब्रा. १. ४. ५. १.
२. तां. ब्रा. १६. ८. १.

## अथ तृतीयं पौर्णमास्यधिकरणम् ॥ ३ ॥

(१) तृतीयाधिकरणमारचयति—

एवं विद्वान् पौर्णमासीममावास्यामितीरितम् ।
कर्माऽन्यत् उत पूर्वोक्तसमुदायानुवादकम् ॥ ६ ॥
कर्मान्तरं स्यादभ्यासादुभ्यैवं द्रव्यं हि देवता ।
वार्त्रघ्नीत्यादितो लभ्याऽनुवादस्तु न युज्यते ॥ ७ ॥
वार्त्रघ्नीत्याज्यभागाङ्गव्यवस्थोक्तेर्न देवता ।
पौर्णेत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा ॥ ८ ॥
अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम् ।
सहास्थितिः पौर्णमास्यामित्युक्तिस्यां त्रिके त्रिके ॥ ९ ॥
विद्वद्वाक्यविधौ विध्यावृत्तिराग्नेयकादिना ।
विहितस्य फलित्वेन प्राधान्यमितरे गुणाः ॥ १० ॥

इदमाम्नायते—(२)"य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" इति । अत्र यजतिना कर्मान्तरं विधीयते, न तु प्रकृता आग्नेयादयः षड् यागा अनूद्यन्ते। आग्नेयादयश्च कालसंयुक्तास्तस्मिन् प्रकरण एवमाम्नायन्ते–(३)"यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाऽच्युतो भवति" "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" (४)"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" (५)"ऐन्द्रं दध्यमावास्यायाम्" "ऐन्द्रं पयोऽमावास्यायाम्" इति । एतेभ्यः प्रकृतेभ्यः षड्भ्य आग्नेयादिभ्यो विद्वद्वाक्यविहितस्य कर्मणोऽन्यत्वे

---

१. पूर्वाधिकरणेनाऽस्याऽऽपवादिकी संगतिः ।

२. ( तै. सं. १. ६. ९. १. ) पूर्वं प्रजापतिः अग्निहोत्रदर्शपूर्णमासान् हविर्यज्ञान्, अग्निष्टोमोक्थ्यातिरात्रसंस्थाकान् सोमयज्ञान् असृजत् । सृष्ट्वा च तान् परस्परमतोलयत् । तत्र तुलनायामग्निहोत्रमग्निष्टोमसममासीत्, पूर्णमासी चोक्थ्यसमा, अमावास्या चाऽतिरात्रसमा वास्तामिति पूर्वसन्दर्भः । य एवं विद्वान् पौर्णमास्युक्थ्ययोस्साम्यं जानन् पौर्णमासीं यजते, सोऽनेनैव पौर्णमासयागेनोक्थ्यानुष्ठानफलभाग्भवति । य एवं अमावास्यातिरात्रयोस्साम्यं जानन् अमावास्यां यजते, सोऽतिरात्रसमानफलभाग्भवतीति विषयवाक्यार्थः ।

३. तै. सं. २. ६. ३. ३.     ४. तै. सं. २. ५. २. ३.

५. तै. सं. २. ५. ४. १.

सति पूर्वाधिकरणन्यायेन विध्यभ्यास उपपद्यते । न च कर्मान्तरे द्रव्यदेवतयोरभावः, ध्रौवाज्यसद्भावात् । अत एवोक्तम्—

(१) "ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी ।
रूपवन्तौ ततो यागौ विधीयेते पृथक्तया" इति ॥

(२)"सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति ध्रौवस्य साधारणत्वं श्रुतम् । देवताया मान्त्रवर्णिकत्वमित्थमुन्नेतव्यम्—(३)"तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते, वृधन्वती अमावास्यायाम्" इति वार्त्रघ्नौ वृधन्वत्यौ चर्चौ क्रमेण कालद्वयोपेते कर्मणि विधीयेते । तत्र—(४)"अग्निर्वृत्राणि जङ्घनत्" इत्येको वार्त्रघ्नो मन्त्रः,(५) "त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा" इत्यपरः । तयोरुक्तावग्नीषोमौ पौर्णमासदेवते । एवमनन्तराम्नातयोर्वृधिधातुयुक्तयोः(६)मन्त्रयोरुक्तावग्नीषोमावमावास्यादेवते । आभ्यां द्रव्यदेवताभ्यां रूपवत्त्वाद्यागान्तरमत्र विधीयते । षड्यागानुवादत्वे तदनुवादेन विधेयान्तरस्य कस्यचिददर्शनाद्विद्वद्वाक्यमनर्थकं स्यात् । न केवलं तदानर्थक्यम् , किन्तु "पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत" इत्येतदपि व्यर्थं स्यात् । न चैतत्कालविधायकम्, "यदाग्नेय" इत्याद्युत्पत्तिवाक्यैरेव तद्विधानात् । कर्मान्तरत्वे तु कालं विधास्यति । तस्मात्कर्मान्तरविधिरिति प्राप्ते—

ब्रूमः—आस्तां तावद्द्रव्यम् । देवता तु विधित्सितस्य कर्मान्तरस्य सर्वथा न लभ्यते । वार्त्रघ्न्योर्वृधन्वत्योश्चाऽऽज्यभागदेवताप्रतिपादकत्वात् । हौत्रे मन्त्रकाण्डे सामिधेनीरावाहननिगदं प्रयाजमन्त्रांश्चाऽऽम्नाय प्रयाजानन्तरभाविनोराज्यभागयोः क्रमे वार्त्रघ्न्यौ वृधन्वत्यौ चाऽऽम्नाते । लिङ्गं चाग्निविषयं सोमविषयं च तत्रोपलभ्यते। ततो लिङ्गक्रमाभ्यामाज्यभागविषयत्वमवगम्यते । यत्तु "वार्त्रघ्नी पौर्णमास्याम्" इत्यादि वाक्यम्, तल्लिङ्गक्रमक्लृप्तयोराज्यभागाङ्गयोर्मन्त्रयुगलयोः कालद्वये व्यवस्थामाचष्टे, न तु नूतनकर्माङ्गतां तयोर्विदधाति । अतो रूपराहित्याद्विद्वद्वाक्यं कर्मान्तरवि-

---

१. तं. वा. २. २. ३. पृ. ४७५. पू. सं.

२. तै. ब्रा. ३. ३. ५. ५.

३. तै. सं. २. ५. २. ५.

४. 'अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धश्शुक्र आहुतः' (ऋ.सं.४. ५. २७. ) इति समग्रो मन्त्रः ।

५. 'त्वं सोमाऽसि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः' ( ऋ. सं. १. ६. १९. ) इति समग्रो मन्त्रः ।

६. 'अग्निः प्रत्नेन मन्मना शुंभानस्तन्वं स्वाम् । कविर्विप्रेण वावृधे' ॥ ( ऋ. सं. ६. ३. ३८. ) 'सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आविश' ॥ ( ऋ. सं. १. ६. २१. ) इति द्वौ वृधन्वतीमन्त्रौ द्रष्टव्यौ ।

धायकं न भवति, किन्तर्हि ? पूर्वप्रकृतेष्वाग्नेयादिषु षट्सु त्रिकरूपौ द्वौ समुदायावनुवदति । न च कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागानुवादानुपपत्तिः, तत्तत्कालविहितयोर्यागत्रिकयोरुपलक्षितत्वात् । न चाऽनुवादो व्यर्थः, समुदायद्वित्वसिद्धेस्तत्प्रयोजनत्वात् । तत्सिद्धौ च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यस्मिन् फलवाक्ये षड्यागविवक्षया द्विवचननिर्देश उपपद्यते । यदप्युक्तमनुवादपक्षे "पौर्णमास्यां" इत्यादिवाक्यवैयर्थ्यमिति, तदयुक्तम्; कालविधानासंभवेऽप्येकैकस्य त्रिकस्य सहप्रयोगविधानात् । आग्नेयोपांशुयाजाग्नीषोमीयागां त्रयाणां पौर्णमासीकालविहितानां सहप्रयोगः 'पौर्णमास्या' इत्यनेन तृतीयैकवचनान्तेन विधीयते । एवमितरत्राऽपि ।

ननु विद्वद्वाक्यस्य कर्मान्तरविधायकत्वाभावेऽपि नाऽनुवादकत्वम्, तस्य यागविधायकत्वाभ्युपगमात् । "आग्नेयोऽष्टाकपालः" इत्यादिवाक्यानि तु विहितयागानुवादेन द्रव्यदेवतालक्षणगुणविधायकानीति चेत्—न; तथासत्येकेन वाक्येनाऽनेकगुणविध्यसंभवात् प्रतिगुणं पृथग्विधौ विध्यावृत्तिः प्रसज्येत । आग्नेयादिवाक्यानां विधायकत्वे तु विशिष्टविधित्वान्नाऽस्ति विध्यावृत्तिदोषः । तस्मादाग्नेयादिवाक्यविहितानां विद्वद्वाक्यमनुवादकम् । किं चानुवादत्वमनभ्युपगम्य कर्मान्तरविधिं वदतः प्रयाजादीनामाग्नेयादीनां च गुणप्रधानभावो न सिध्येत् । तथा हि—(१)"समिधो यजति"(२)"आघारमाघारयति" इत्यादयः कालयोगरहिताः केचिद्विधय आम्नाताः । "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चे" त्यादयः कालयुक्ता अपरे । तेषामुभयेषां प्रकृतत्वात् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्येन सर्वेषां फलसंबन्धो बोधनीयः । 'दर्शपूर्णमासाभ्यां' इति द्विवचनमत्र बहुवचनत्वेन परिणेतव्यम् । विद्वद्वाक्यविहिते द्वे कर्मान्तरे प्रयाजादय आग्नेयादयश्चेत्येतेषु द्वित्वासंभवात् । सर्वेषां च फलसंबन्धे राजसूयगतेष्टिपशुसोमवत्समप्राधान्यात्प्रयाजादीनां गुणभावो न स्यात् । तदभावे चानङ्गत्वात्सौर्यादिविकृतिष्वाग्नेयादीनामिवाऽतिदेशो न स्यात् । अनुवादपक्षे तु त्रिकयोः कालयोगेन दर्शपूर्णमासशब्दार्हत्वात्, समुदायद्वित्वेन द्विवचनार्हत्वाच्चाऽऽग्नेयादीनामेव फलसंबन्धेन प्राधान्यम्, प्रयाजादीनां तु गुणभाव इति न कोऽपि दोषः । तस्मात् विद्वद्वाक्यमनुवादकम् ॥

इति तृतीयं पौर्णमास्यधिकरणम् ॥ ३ ॥

---

१. तै. सं. २. ६. १. १. १; श. ब्रा. १. ४. ५. १.

२. ( तै. ब्रा. ३. ३. ७. ) अस्य वाक्यस्याऽर्थः ५० पृष्ठे टिप्पण्यां द्रष्टव्यः

## अथ चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥

(१)चतुर्थाधिकरणमारचयति—

**उपांशुयाजमित्येषोऽनुवादोऽत्राऽथवा विधिः ।**
**विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता ॥ ११ ॥**
**जामित्वोक्तेरन्तराल उपांशुगुणके विधौ ।**
**सत्यर्थवादो विष्ण्वादिस्तद्रूपं ध्रौवमन्त्रतः ॥ १२ ॥**

इदमाम्नायते—(२)"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशु-याजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामि-त्वाय अग्नीषोमावुपांशु यष्टव्योऽजामित्वाय" इति । तत्र विष्ण्वादिवाक्येषु विहितस्य यागत्रयसमुदायस्याऽनुवाद इति चेत्—

**मैवम्**; आग्नेयाग्नीषोमीयपुरोडाशद्वयनैरन्तर्यकृतस्य जामित्वदोषस्य वाक्योपक्रम उपन्यासात्पुरोडाशयोरन्तराले किंचिद्विधित्सितम् । न ह्यन्तरालगुणविशिष्टं विधेयं विष्ण्वादिवाक्येषु प्रतीयते । पूर्ववाक्ये तु तत्प्रतीयत इति विधायकं तद्वाक्यम् । न चाऽत्र यजतीति वर्तमानापदेशः शङ्कनीयः, पञ्चमलकारस्याऽऽश्रयणात् । अन्तरालका-लवदुपांशुत्वगुणस्याऽपि विशेषणत्वात्तद्विशिष्टकर्मण उपांशुयाजनामकत्वम् । सत्येवं गुणद्वयविशिष्टकर्मण्याद्येन वाक्येन विहिते विष्ण्वादिवाक्यमर्थवादः स्यात् । न चाऽत्र विहितयागानुवादेन देवताविधिः शङ्कनीयः, समाधातव्येन जामित्वदोषेणोपक्रमात्, अजामित्वेन समाधानेनोपसंहाराच्च "जामि वा" इत्यादेः "अजामित्वाय" इत्यन्तस्य सर्वस्य महावाक्यस्यैकत्वप्रतीतेः । न खल्वेकस्मिन्वाक्ये विधेयबाहुल्यं संभवति । न चाऽत्र विधित्सितस्योपांशुयाजस्य द्रव्याभावः, ध्रौवस्य तद्द्रव्यत्वात् । नापि देवताया अभावः, नानाशाखासूपांशुयाजक्रमे पठितैर्वैष्णवप्राजापत्याग्नीषोमीयमन्त्रैर्विकल्पेन देव-तात्रयस्य प्रतीयमानत्वात् । तस्मात् यजतीत्येतद्विधायकम् ॥

इति चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥

---

१. पूर्वाधिकरणेनाऽस्याऽऽपवादिकी सङ्गतिः ।

२. ( तै. सं. २. ६. ६. ) अन्वञ्चौ अव्यवहितौ पुरोडाशसाध्यौ आग्नेयाग्नी-षोमीययागौ यत्क्रियेते, तदेतत् जामि आलस्यजनकम् , एकरूपत्वात् । अतस्तौ यागौ अन्तरा तदन्तरालकाले उपांशुयाजं यजतीत्यर्थः ।

## अथ पञ्चममाघाराग्निहोत्राधिकरणम् ॥ ५ ॥

(१)पञ्चमाधिकरणमारचयति—

**अग्निहोत्राघारवाक्यमनुवादोऽथवा विधिः ।**
**अरूपत्वात्तु दध्यूर्ध्ववाक्येनोक्तमनूद्यते ॥ १२ ॥**
**गुण्यसिद्धौ न दध्यादिर्गुणो दृष्टा विशिष्टता ।**
**रूपं दध्यादिमन्त्राभ्यामतोऽसौ गुणिनो विधिः ॥ १४ ॥**

इदमाम्नायते—(२)"अग्निहोत्रं जुहोति" "दध्ना जुहोति" "पयसा जुहोति" इति च । इदमपरमाम्नायते—(३)"आघारमाघारयति" "ऊर्ध्वमाघारयति" "ऋजुमाघारयति" इति च । तत्राऽग्निहोत्रवाक्यं दध्यादिवाक्यविहितस्य कर्मसमुदायस्याऽनुवादः । आघारवाक्यं चोर्ध्वादिवाक्यविहितस्य । न त्वेतद्वाक्यद्वयं कर्मविधायकम् । कुतः ? द्रव्यदेवतालक्षणस्य यागरूपस्याऽभावादिति चेत्—

तत्र वक्तव्यम्—किं दध्यादिवाक्येन गुणमात्रं विधीयते ? किं वा गुणविशिष्टं कर्म ? नाऽऽद्यः—अग्निहोत्रादिवाक्यस्य त्वन्मते कर्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धौ गुण्यनुवादपुरस्सरस्य गुणमात्रविधानस्याऽसंभवात् । द्वितीये–विधिगौरवं स्यात् । तच्च सत्यां गतावयुक्तम् । अतोऽग्निहोत्रादिवाक्यं कर्मविधायकम् । तत्र द्रव्यं दध्यादिवाक्यैर्लभ्यते । देवता तु मान्त्रवर्णिकी । (४)आघारेऽप्येवं द्रव्यदेवते उन्नेतव्ये ॥

इति पञ्चममाघाराग्निहोत्राधिकरणम् ॥ ५ ॥



---

१. इह दध्यादेरन्यतः प्राप्त्यभावेन मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेन विष्ण्वादिवाक्यानामिव स्तावकत्वासंभवात् विधायकत्वे सति दध्यादिविशिष्टकर्मविधेरग्निहोत्रवाक्यमनुवाद इति पूर्वपक्षोत्थानात्प्रत्युदाहरणसंगतिः ।

२. तै. सं. १. ५. ९.			३. तै. ब्रा. ३. ३. ७.

४. "चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्य" त्यनेन द्रव्यस्य, "इन्द्र ऊर्ध्वोऽध्वरो दिवि स्पृश महुतो यज्ञो यज्ञपतेरिन्द्रावान् स्वाहेत्याघारमाघारयती"त्यनेन विनियुक्तमान्त्रवर्णिकेन्द्रदेवतायाश्च प्राप्तिर्द्रष्टव्या ।

## अथ षष्ठं पशुसोमाधिकरणम् ॥ ६ ॥

(१)षष्ठाधिकरणमारचयति—

**यजत्यालभतीत्येतावनुवादौ विधी उत ।**
**गृह्णात्यवद्यतीत्याभ्यां विहितेऽर्थेऽनुवादिनौ ॥ १५ ॥**
**नानुवादोऽपुरोवाद यज्यालभ्योरतो विधिः ।**
**ग्रहणे सोमसंस्कारोऽवदाने पशुसंस्क्रिया ॥ १६ ॥**

"सोमेन यजेत" इति श्रूयते । तत्र "ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति" इत्यादीन्यपि श्रुतानि । एवं(२) "अग्नीषोमीयं पशुमालभेत" इति श्रूयते । तत्र(३) "हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः" इत्यादीन्यपि श्रुतानि । तत्रैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते । इन्द्रवाय्वादिप्रातिपदिकैर्देवतानां, तद्धितेन सोमरसद्रव्यस्य च प्रतीयमानत्वात् । एतेषां ग्रहणवाक्यविहितानां यागानां समुदायः "सोमेन यजेत" इत्यनेनाऽनूद्यते । तथाऽवदानवाक्येषु हृदयादिद्रव्यं श्रुतम् । अतो द्रव्यविशिष्टा यागास्तत्र विधीयन्ते । तदनुवादेन पश्वालम्भवाक्येऽग्नीषोमरूपा देवता विधीयते । तस्मादवदानवाक्यविहितानां यागानां समुदायः "पशुमालभेत" इत्यनेनानूद्यत इति **प्राप्ते—**

**ब्रूमः**—सति हि पुरोवादेऽनुवादो भवति । न चाऽत्र पुरोवादोऽस्ति, "सोमेन यजेत" इत्यनेन प्रतीतस्याऽर्थस्य ग्रहणवाक्येष्वप्रतीतेः । न हि ग्रहणं यजनं भवति । नाऽपि तद्धितप्रत्ययोक्तो रसः सोमलता । न च तद्धितप्रत्ययः सर्वनामार्थे विहितः प्रकृतं ब्रूते, न तु रसमिति शङ्कनीयम् । "धारया गृह्णाति" इति रसस्यैव प्रकृतत्वात् । तथा "पशुमालभेत" इत्यनेन प्रतीतोऽर्थो नाऽवदानवाक्येषु प्रतीयते । ततः पुरोवादाभावेनाऽनुवादासंभवाद्यजत्यालभतिभ्यां कर्मणी विधीयेते । ग्रहणवाक्यैस्तु देवताविशिष्टः सोमसंस्कारो विधीयते । अवदानवाक्यैश्च पशुसंस्कारः ॥

इति षष्ठं पशुसोमाधिकरणम् ॥

---

१. आघाराग्निहोत्राधिकरणे 'दध्ना जुहोति' 'पयसा जुहोती' त्यादिवाक्यैरग्निहोत्रवाक्यविहितकर्मानुवादेन गुणमात्रस्य विधातुं शक्यत्वात् प्रकृतकर्माभावेनाऽग्निहोत्रवाक्ये समुदायानुवादत्व नाऽङ्गीकृतम्, प्रकृते तु 'अग्नीषोमीयं पशुमालभेत' 'सोमेन यजेते' ति वाक्यविहि[illegible]यागीयद्रव्योद्देशेन हृदयादिविषयकावदानादिरूपसंस्कारविध्ययोगादवश्यमवदानादिवाक्येषु कर्मविध्यगतेः प्रकृतकर्मसद्भावेन समुदायानुवादत्वोपपत्तिरिति पूर्वपक्षोत्थानात् प्रत्युदाहरणसङ्गतिः ।

२. तै. सं. ६. १. ११. ६. ३. तै. सं. ६. ३. १०. ४.

## अथ सप्तमं संख्याधिकरणम् ॥ ७ ॥

(१)सप्तमाधिकरणमारचयति—

आहुतीस्तिस्र इत्यत्र कर्मैक्यमुत भिन्नता ।
एकत्वं सकृदाख्यातात्संख्यावृत्त्या प्रयाजवत् ॥ १७ ॥
आख्यातमात्रं नो मानं संख्यया बहुकर्मता ।
आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः ॥ १८ ॥
पशून् सप्तदश प्राजापत्यानित्यत्र भाष्यकृत् ।
विचारमाह पूर्वत्र क्रियात्रित्वस्फुटत्वतः ॥ १९ ॥
बहुत्वोपेतपशुभिर्देवयोगादभिन्नता ।
रूपस्य तेन कर्मैक्यं संख्या नाऽत्र क्रियागता ॥ २० ॥
देवतासङ्गतस्यैव तद्धितार्थस्य पश्चिमः ।
बहुत्वसङ्गमो रूपसङ्ख्यया तत्क्रियाभिदा ॥ २१ ॥

(२)"तिस्र आहुतीर्जुहोती" ति श्रूयते । तत्र 'जुहोति' इत्येतदाख्यातं(३) "समिधो यजति" इत्यादिवन्नाऽभ्यस्तम्, किन्तु सकृदेवाऽऽम्नातम् । तत एकमिदं कर्म । त्रित्वसंख्या तु तस्यैव कर्मण आवृत्त्या नेतव्या । यथा (४)प्रयाजेष्वेकादशत्वसंख्या पञ्चानामेव प्रयाजानामावृत्त्या नीता, तद्वदिति **प्राप्ते**—

**ब्रूमः**—किमिदमाख्यातं पदान्तरनिरपेक्षमेव कर्मैक्ये प्रमाणम् ? उत पदान्तरान्वितम् ? नाऽऽद्यः—वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्वाभावात् । द्वितीये—त्रित्वसंख्यया विशेषितेनाऽऽख्यातेन कर्मबहुत्वं गम्यते । प्रयाजानां तु पूर्वमेव पञ्चसंख्यावरुद्धत्वादावृत्तिमन्तरेणैकादशत्वं दुस्सम्पादम् । इह त्वेतद्विधितः पूर्वं कर्मण एकत्वसंख्यावरोधो नाऽस्तीति वैषम्यम् ।

तदेतद्वृत्तिकारोदाहरणं भाष्यकारो नाऽनुमन्यते, कर्मवाचिन आहुतिशब्दस्य विशेषणेन त्रिशब्देन कर्मबहुत्वस्य स्फुटतया पूर्वपक्षानुत्थानात् । इदं त्वत्रोदाहरणम्–(५)"सप्तदश प्राजापत्यान् पशूनालभत" इति । अत्र प्रजापतिर्देवता येषां पशूनां

---

१. पूर्वत्र सोमवाक्ये यागैकत्ववदत्रापि सकृच्छ्रवणेनाऽभ्यासाभावात् कर्मैकत्वं स्यादिति पूर्वपक्षोत्थानात्प्रत्युदाहरणसङ्गतिः ।

२. (तै. सं. २. ३. ९. ) 'वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः' इति वाक्यविहितसाङ्ग्रहणीष्टिसन्निधौ श्रुतमिदं वाक्यम् ।

३. तै. सं. २. ६. १. ४. 'एकादश प्रयाजान् यजती' (तै. सं. ६. ३. ७. ) ति वाक्यविहितैकादशत्वसंख्येत्यर्थः । ५. तै. ब्रा. १. ३. ४.

ते प्राजापत्याः इति तद्धितव्युत्पत्तौ बहुत्वोपेताः पशव एकं द्रव्यम् । ततो द्रव्यैक्या-द्देवतैक्याच्च यागस्य रूपमभिन्नमित्येकमिदं कर्म । या तु 'सप्तदश' इति संख्या, सा पशुद्रव्यगता, न तु पूर्वोदाहृतत्रित्वसंख्येव क्रियागता । तस्मात् न कर्मभेदमापादयतीति प्राप्ते--

ब्रूमः—अत्र 'प्रजापतिर्देवता यस्य पशोः स प्राजापत्यः' इति तद्धितान्तं प्रातिपदिकं व्युत्पाद्य पश्चात्तद्धितान्तप्रातिपदिकार्थस्य प्रजापतिदेवताविशिष्टपशोः कर्मबहुत्वविवक्षायामुत्पन्ने इमे द्वितीयाविभक्तिबहुवचने । तत्र प्रथमभाविन्या द्वितीयाविभक्तेरेव तद्धितोत्पत्तिवेलायामन्वयो नाऽस्ति, कुतः पश्चाद्भाविनो बहुवचनस्याऽन्वयः ? एवं सति प्राजापत्य इत्यनेन तद्धितान्तप्रातिपदिकेनैकपशुद्रव्यमेकदेवतोपेतं यागस्य रूपं समर्प्यते । तादृशानां रूपाणां बहुत्वाय बहुवचनम् । बहुत्वविशेषश्च 'सप्तदश' इति निर्दिश्यते । तस्मादत्र संख्यया कर्मभेदः । एवं च सत्यष्टमे वक्ष्यमाणं सप्तदशपशूनामैकादशिनपशुगणविकृतित्वमुपपद्यते ॥

इति सप्तमं संख्याधिकरणम् ॥ ७ ॥

## अथाऽष्टमं संज्ञाधिकरणम् ॥ ८ ॥

( १ ) अष्टमाधिकरणमारचयति—

**अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक् ।**
**गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते ॥ २२ ॥**
**अथेति प्रकृते छिन्न एतच्छब्दोऽग्रगं वदेत् ।**
**संख्ययेवाऽन्यकर्मत्वमिह नूतनसंज्ञया ॥ २३ ॥**

(२) "अथैष ज्योतिः" (३) "अथैष विश्वज्योतिः" (४) "अथैष सर्वज्योतिः, एतेन सहस्रदक्षिणेन यजेते"ति श्रूयते । अत्र प्रकृतं ज्योतिष्टोमं "एष ज्योति" रित्यनूद्य तस्मिन् सहस्रदानलक्षणो गुणो विधीयत इति चेत्—

न; प्रकृतस्य ज्योतिष्टोमस्य 'अथ' इत्यनेन विच्छिन्नत्वात् । न चैवं सति "अथैष ज्योति" रित्युक्त एतच्छब्दोऽनुपपन्न इति वाच्यम् । सन्निहितवाचिनैतच्छब्देनाऽतीतसन्निहितस्येवाऽऽगामिसन्निहितस्याऽपि परामर्शसम्भवात । आगामिसंनिहितश्च ज्यो-

१. संख्यावत् संज्ञायाः पृथक्त्वनिवेशित्वाभावात् न भेदकतेति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा संगतिः । २. तां. ब्रा. १६. ८. १.
३. तां. ब्रा. १६. ९. १. ४. तां. ब्रा. १६. १०. १.

तिशब्दार्थः । स च ज्योतिश्शब्दोऽतीतमपरामृशन्नपूर्वसंज्ञारूपत्वान्नूतनं किंचित्कर्माऽभिधत्ते । ततो यथा पूर्वत्र संख्यया कर्मभेदः, तथाऽत्रापि संज्ञया कर्म भिद्यते । विश्वज्योतिस्सर्वज्योतिश्शब्दयोरप्ययं न्यायो द्रष्टव्यः ॥

इत्यष्टमं संज्ञाधिकरणम् ॥ ८ ॥

अथ नवमं गुणाधिकरणम् ॥ ९ ॥

(१) नवमाधिकरणमारचयति—

**गुणः कर्मान्तरं वा स्याद्वाजिभ्यो वाजिनं त्विति ।**
**गुणो देवाननूद्योक्तसमुच्चयविकल्पतः ॥ २४ ॥**
**आमिक्षोत्पत्तिशिष्टत्वात्प्रबला तत्र वाजिनम् ।**
**गुणोऽप्रविश्य कर्माऽन्यत्कल्पयेद्वाजिदेवकम् ॥ २५ ॥**

"तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्" इति श्रूयते । घनीभूतः पयःपिण्ड आमिक्षा, जलं वाजिनम् । तत्र आमिक्षाद्रव्यभाजो ये विश्वे देवा उक्ताः, ते 'वाजिभ्यः' इत्यनेनाऽनूद्यन्ते, 'वाजोऽन्नमामिक्षारूपमेषामस्तीति' तन्निष्पत्तेः । ताननूद्य वाजिनद्रव्यरूपो गुणो विधीयते । तच्च द्रव्यमामिक्षाद्रव्येण सह समुच्चीयतां विकल्प्यतां वेति प्राप्ते—

ब्रूमः—उत्पत्तिशिष्टेनाऽऽमिक्षाद्रव्येणाऽवरुद्धे वैश्वदेवयागे वाजिनद्रव्यस्योत्पन्नशिष्टस्य प्रवेशाभावाद्वाजिनं वाजिशब्दार्थस्य देवतान्तरमापादयति । ततो द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात्कर्मान्तरम् ॥

इति नवमं गुणाधिकरणम् ॥ ९ ॥

अथ दशमं गुणशेषाधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**दधिहोमेऽन्यकर्मत्वं गुणो वाऽन्यत्तु पूर्ववत् ।**
**निर्गुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः ॥ २६ ॥**

"दध्ना जुहोती" इति श्रूयते । तत्र(२)"अग्निहोत्रं जुहोती" त्येतस्मात्प्रकृता-

---

१. पूर्वाधिकरणेनाऽस्य प्रासङ्गिकी सङ्गतिः । २. तै. सं १. ५. ९.

त्कर्मणोऽन्यद्दधिहोमरूपं कर्म इति पूर्वन्यायेनाऽवगम्यते । यथा पूर्वत्र वाजिनद्रव्येण कर्म भिद्यते, तथा दधिद्रव्येणेति चेत्--

**न**; वैषम्यात् । यथा वैश्वदेवो याग आमिक्षागुणावरुद्धः, तथाऽग्निहोत्रं न गुणान्तरावरुद्धम् । प्रत्युत निर्गुणत्वाद्गुणमाकाङ्क्षति । तस्मादयं गुणविधिः । एवं "पयसा जुहोती" त्यादिषु द्रष्टव्यम् । पयोदध्यादीनां सर्वेषामुत्पन्नशिष्टतया समबलत्वादेकैकेन द्रव्येणाऽग्निहोत्रनिष्पत्तेश्च व्रीहियववद्विकल्पः ॥

इति दशमं गुणशेषाधिकरणम् ॥ १० ॥

---

अथैकादशमिन्द्रियकामाधिकरणम् ॥ ११ ॥

(१)एकादशाधिकरणमारचयति—

**यद्दध्नेन्द्रियकामस्य जुहुयादिति तत्पृथक् ।**
**गुणो वा भिद्यते कर्म धात्वर्थस्य फलित्वतः ॥ २७ ॥**
**मत्वर्थगौरवादिभ्यो नान्यत्कर्म फलाय तु ।**
**गुणे विधेये धात्वर्थो विहितत्वादनूद्यते ॥ २८ ॥**

(२)"दध्नेन्द्रियकामस्य जुहुयात्" इति श्रूयते । तदिदं प्रकृतादग्निहोत्रादन्यत्कर्म, न त्वत्र विधिः । कुतः ? 'इन्द्रियकामस्य' इत्युक्तस्य फलस्य धात्वर्थमन्तरेण द्रव्यमात्रादनिष्पत्तेरिति चेत्—

**मैवम्**; कर्मान्तरविधौ 'दधिमता होमेनेन्द्रियं भावयेत्' इति मत्वर्थलक्षणाप्रसङ्गात् , गुणविशिष्टक्रियाविधौ गौरवात् , प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गाच्च । गुणमात्रं तु फलाय विधीयते । यद्यपि 'दध्ना जुहोती'ति प्राप्तम् , तथाऽपि फलसम्बन्धो न प्राप्तः । धात्वर्थाभावे फलासंभव इति चेत्—न; "अग्निहोत्रं जुहोती"ति विहितस्य धात्वर्थस्याऽनूद्यमानत्वात् ॥

इत्येकादशमिन्द्रियकामाधिकरणम् ॥

---

१. पूर्वाधिकरणेनाऽस्याऽऽपवादिकी सङ्गतिः । २. तै. ब्रा. २. १. ५. ६.

## अथ द्वादशं रेवत्यधिकरणम् ॥ १२ ॥

(१)द्वादशाधिकरणमारचयति—

**उक्त्वाऽग्निष्टुतमेतस्य वारवन्तीयसाम हि ।**
**रेवतीष्वृक्षु कृत्वेति श्रुतं पशुफलाप्तये ॥ २९ ॥**
**रेवत्यादिर्गुणः कर्म पृथग्वा पूर्ववद्गुणः ।**
**रेवतीवारवन्तीयसंबन्धाख्यः पशुप्रदः ॥ ३० ॥**
**साम्नोऽत्र फलकर्मभ्यां सम्बन्धे वाक्यभिन्नता ।**
**तेनोक्तगुणसंयुक्तमन्यत्कर्मोच्यते फले ॥ ३१ ॥**

(२)"त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वृक्ष्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" इत्यस्य संनिधौ श्रूयते—"एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति । अस्याऽयमर्थः—अग्निष्टोमस्य विकृतिरूपः कश्चिदेकाहोऽग्निष्टुन्नामकः । स च पृष्ठस्तोत्रे त्रिवृत्स्तोमयुक्ततया 'त्रिवृत्' इत्युच्यते । अग्निष्टोमोक्थ्यादीनां सप्तानां सोमसंस्थानां मध्येऽग्निष्टोमसंस्थारूपत्वात् 'अग्निष्टोमः' इत्युच्यते । प्रकृतौ तृतीयसवन आर्भवपवमानस्योपरि यज्ञायज्ञीयं साम गीयते । तेन च साम्नाऽग्निष्टोमयागस्य समाप्यमानत्वात् 'अग्निष्टोमसाम' इत्युच्यते । तच्च प्रकृतौ(३) "यज्ञायज्ञा वो अग्नये"इत्याद्याग्नेयीष्वृक्षु गीयते । अस्मिंस्त्वग्निष्टुति ब्रह्मवर्चसकामेन वायव्यास्वृक्षु तत्साम गातव्यम् । तच्च प्रकृताविवैकविंशस्तोमयुक्तम् । पशुकामस्य तु(४) "रेवतीर्नः सधमाद" इत्यादिषु रेवतीष्वृक्षु वारवन्तीयं साम गायेदिति । तत्र रेवतीनामृचां वारयन्तीयनामकेन साम्ना यः संबन्धः, सोऽयं पशुफलायाऽग्निष्टुति विधीयते, 'एतस्यैवे'ति प्रकृतपरामर्शकेनैतच्छब्देन, अन्यव्यावर्तकेनैवकारेण चाऽग्निष्टुतः समर्प्यमाणत्वात् । यथा पूर्वाधिकरण इन्द्रियफलाय प्रकृतेऽग्निहोत्रे दधिगुणो विहितः, तद्वदिति **प्राप्ते**--

**ब्रूमः**—विषमो दृष्टान्तः, दध्नो होमजनकत्वं न शास्त्रेण बोधनीयम्, तस्य लोकतोऽवगन्तुं शक्यत्वात् । फलसंबन्ध एक एव शास्त्रबोध्य इति न तत्र वाक्यभेदः । इह तु रेवत्यृगाधारकवारवन्तीयसाम्नोऽग्निष्टुत्कर्मसाधनत्वं फलसाधनत्वं चेत्युभयस्य

---

१. अत्राऽपि पूर्ववद्गुणफलसम्बन्धोऽस्त्विति पूर्वपक्षोत्थानात्प्रत्युदाहरणसङ्गतिः ।

२. तां. ब्रा. १७. ६. १.    ३. सा. सं. उ.

४. रेवतीर्नस्सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
आ घ त्वा वां त्मना युक्तस्स्तोतृभ्यो धृष्णवीयानः । ऋणोरक्षं न चक्र्योः ॥
आ यद्दुवः शतक्रतवा कामं जरितॄणाम् । ऋणोरक्षं न शचीभिः ॥
सा. सं. उ. ४. १. १४.

शाब्दैकबोध्यत्वाद्दुर्वारो वाक्यभेदः । तेन पशुफलकं यथोक्तगुणविशिष्टं कर्मान्तरमत्र विधीयते । एतच्छब्द एवकारश्च विधीयमानकर्मान्तरविषयतया योजनीयः ॥

इति द्वादशं रेवत्यधिकरणम् ॥ १२ ॥

---

अथ त्रयोदशं सौभराधिकरणम् ॥ १३ ॥

(१)त्रयोदशाधिकरणमारचयति—

वृष्ट्यन्नस्वर्गकामानां सौभरं स्तोत्रमीरितम् ।
निधनान्यपि हीषूर्गू इति वृष्ट्यादिकामिनाम् ॥ ३२ ॥
फलान्तरं किं वृष्ट्यादि हीषादीनामुताऽदिते ।
सौभरे फलसंभिन्ने निधनं विनियम्यते ॥ ३३ ॥
फलान्तरं चतुर्थ्योक्तं वृष्टिकामाय हीषिति ।
सौभरस्य फलं वृष्टिर्हीषित्युक्त्या विवर्धते ॥ ३४ ॥
नोक्तवृष्ट्यन्नकामानामन्यत्वं प्रत्यभिज्ञया ।
नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते ॥ ३५ ॥

इति श्रीमाधवाचार्यविरचितयां जैमिनीयन्यायमालायां
द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

(२)"यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरे" इति समाम्नाय पुनस्समाम्नातम्—(३) "हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय" इति । सौभरं नाम सामविशेषः । निधनं नाम पञ्चभिः सप्तभिर्वा (४)भागैरुपेतस्य साम्नोऽन्तिमो भागः । तस्मिन्निधने हीषादयो विशेषाः सौभरसामसाध्यस्तोत्रफलेभ्यो वृष्ट्यादिभ्योऽन्यानि वृष्ट्यादिफलानि जनयितुं विधीयन्ते । कुतः ? हीषादिविधिवाक्ये 'वृष्टिकामाये'त्यादिना चतुर्थीश्रवणात् । तादर्थ्यं ब्रुवती चतुर्थी हीषादीनां वृष्ट्यादिकामपुरुषशेषत्वं गमयति । तच्छे-

१. पूर्वाधिकरणेनाऽस्याऽऽपवादिकी सङ्गतिः ।

२. तां. ब्रा. ८. ८. १८. ३. तां. ब्रा. ८. ८. १९.

४. हिङ्कारः, प्रस्तावः, उद्गीथः, ओङ्कारः, प्रतिहारः, उपद्रवः, निधनञ्चेति साम्नः सप्त भक्तयः । भक्तिः भागः—अवयव इति यावत् ।

षत्वं च पुरुषाभिलषितफलसाधनत्वे सत्युपपद्यते । ततः सौभरस्य हीषिति निधनविशेषस्य च फलभूते द्वे वृष्टी भवतः । तदुभयमेलनान्महती वृष्टिरिति प्राप्ते—

ब्रूमः—सौभरविधौ यो वृष्ट्यादिकामः स एव हीषादिविधौ प्रत्यभिज्ञायते । ततः सौभरस्य फलभूता ये वृष्ट्यादयः, त एव हीषादिवाक्येष्वनूद्यन्त इति न फलान्तरम् । अथोच्येत—नूतनफलान्तराभावात् हीषादीनां च नानाशाखाध्ययनादेव सौभरे प्राप्तत्वादनर्थकोऽयं विधिरिति । तन्न, फलत्रयकामानां त्रयाणामनियमेनैव हीषादिषु मध्ये यस्य कस्यचिन्निधनस्य प्राप्तौ विधेर्नियमार्थत्वात् । तादर्थ्यं तु फलान्तराभावेऽपि सौभरवाक्योक्तवृष्ट्यादिफलसाधने सौभरे हीषादीनां नियम्यमानत्वादुपपद्यते । तस्मादयं निधनविशेषनियमनविधिः ॥

इति त्रयोदशं सौभराधिकरणम् ॥ १३ ॥

इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे
द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## अथ द्वितीयाध्यायस्य तृतीयपादः ॥

तत्र प्रथमं रथन्तराधिकरणम् ॥ १ ॥

(१)तृतीयपादस्य प्रथमाधिकरणमारचयति—

**रथन्तरं साम सोमे भवेत्तद्वद्बृहज्जगत् ।**
**ऐन्द्रवायवशुक्राग्रयणाग्राश्च ग्रहाः श्रुताः ॥ १ ॥**
**रथन्तरादिसंयुक्तमन्यत्कर्माऽथवा गुणः ।**
**गायत्रादियुतात्पूर्वादन्यद्व्यावृत्तितो गुणैः ॥ २ ॥**
**सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके ।**
**ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परम् ॥ ३ ॥**

ज्योतिष्टोमप्रकरणे श्रूयते—(२)"यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्

---

१. पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः । अस्मिन् पादे तदपवादः प्राधान्येन प्रतिपाद्यत इति बोध्यम् ।

२. ( आप. श्रौ. १२. १४. १. ) अत्राऽयं विषयविवेकः—ज्योतिष्टोमे प्रातस्सवने उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, ऋतुग्रहाः, वैश्वदेवश्चेत्यादीनां ग्रहाणां ग्रहणं विहितम् ।

ग्रहान् गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामाऽऽग्रयणाग्रान्" इति । तत्र सोमशब्देन सोमलतासाधनको यागोऽभिधीयते । तस्मिंश्च यागे माध्यन्दिने सवने पृष्ठस्तोत्रे रथन्तरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि । (१)"अभि त्वा शूर" इत्येतस्यां योनावुत्पन्नं रथंतरम् । (२)"त्वामिद्धि हवामहे" इत्येतस्यामुत्पन्नं बृहत् । जगतीच्छन्दस्कायामृच्युत्पन्नं जगत् । ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, इत्यादिनामका ग्रहाः प्रातस्सवने गृह्यन्ते । दारुपात्रेषु सोमरसस्य ग्रहणाद्ग्रहा भवन्ति । सोमयागस्य रथन्तरसामोपेतत्वपक्षे एतेषु ग्रहेष्वैन्द्रवायवः प्रथमं ग्रहीतव्यः । बृहत्सामोपेतत्वपक्षे शुक्रः । जगत्सामोपेतत्वपक्ष आग्रयणः प्राथमिक इति विषयवाक्यार्थः । तत्र प्रकृतो ज्योतिष्टोमो गायत्रादिसामोपेतः, तद्व्यावृत्त्यर्थमिह रथन्तरादयो गुणाः कीर्त्यन्ते । तस्मात् ऐन्द्रवायवादिगुणोपेतानि कर्मान्तराण्यत्र विधीयन्त इति **प्राप्ते**—

**ब्रूमः**—"यदि रथंतरसामा सोमः स्यात्" इत्युक्तो यः सोमशब्दः, तेन प्रकरणेन चाऽत्र ज्योतिष्टोमः समर्प्यते । समर्पिते तस्मिन् यथोक्तग्रहाग्रत्वं गुणो विधीयते । न च रथन्तरादिगुणानुवादेन ज्योतिष्टोमस्य व्यावृत्तिः सम्भवति, तस्य प्रातस्सवनादौ गायत्रादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथन्तरादियोगस्याऽपि सद्भावात् । किं तर्हि व्यावर्त्यत इति चेत्—रथंतरबृहज्जगतां परस्परव्यावृत्तिरिति वदामः । रथन्तरादयः पृष्ठस्तोत्रे विकल्पिताः । तत्र रथन्तरानुवादेनेतरौ पक्षौ व्यावर्त्येते । एवमितरत्राऽपि । तस्माद्गुणविधिः । ननु यः प्रकृतो ज्योतिष्टोमः सोऽन्येषां सोमयागानां प्रकृतिः । न हि प्रकृतौ जगत्यामुत्पन्नं साम विहितमस्ति । अत एव दशमाध्याये पञ्चमपादस्य पञ्चदशाधिकरणे प्रथमवर्णके "यदि जगत्सामा" इति वाक्योक्तमाग्रयणाग्रत्वं विकृतौ (३)विषुवन्नामके मुख्येऽहनि व्यवस्थापितम् । बाढम्; तथाऽपि नाऽत्र कश्चिद्विरोधः ।

---

एतेषु 'अण्व्या धारया गृह्णाती'ति विधिना धारया ग्रहीतव्यतया विहिता ऐन्द्रवायवादयो धाराग्रहाः । उपांश्वन्तर्यामौ चाऽधाराग्रहौ । तत्रोपांश्वन्तर्यामयोरधाराग्रहयोर्ग्रहणानन्तरं धाराग्रहाणामैन्द्रवायवादीनामुपक्रमः । तत्र पृष्ठस्तोत्रे रथन्तरबृहतोस्साम्नोर्विकल्पेन विधानात् रथन्तरपक्षे धाराग्रहेष्वैन्द्रवायवमादितो गृहीत्वा पश्चान्मैत्रावरुणादीन् गृह्णीयात् । बृहत्पक्षे शुक्रं प्रथमतो गृहीत्वाऽनन्तरमैन्द्रवायवादीन् गृह्णीयादिति ।

१. अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतस्स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ सा. सं. पू. ३. २. ५. १.

२. त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ सा. सं. पू. ३. २. ५. २.

३. गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके (३६१)यो मध्यमो दिवसः एकाशीत्युत्तरशततमरूपः तस्य विषुवानिति संज्ञा ।

आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधायकम्, किन्तु अन्येन विहिते सोमयागे यत्र जगत्साम संभवति तत्र गुणविधायकमित्येतावन्मात्रस्याऽत्र प्रतिपाद्यत्वात् ॥

इति प्रथमं रथन्तराधिकरणम् ॥ १ ॥

### अथ द्वितीयमवेष्ट्यधिकरणम् ॥ २ ॥

(१)द्वितीयाधिकरणमारचयति—

**राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुताऽत्र तु ।**
**विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे ॥ ४ ॥**
**विप्रादेरनुवादः स्यात्प्रापणं वाऽनुवादगीः ।**
**व्यत्ययाय त्रयाणां च राजत्वाप्राप्तिरस्ति हि ॥ ५ ॥**
**न राज्ययोगाद्राजत्वं क्षत्रियत्वं तु तत्त्वतः ।**
**अप्राप्तप्रापणं तस्मान्न रथन्तरतुल्यता ॥ ६ ॥**

राजसूयप्रकरणे काचिदिष्टिः(२) अवेष्टिनामिका श्रूयते—(३)"आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं (४)पिशङ्गी(५) पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां (६) वशा दक्षिणा, बार्हस्पत्यं चरुं (७)-शितिपृष्ठो दक्षिणा" इति । तस्यामवेष्टौ हविषां क्रमव्यत्ययः श्रूयते—(८)"यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेवम्" इति । तत्र यथा पूर्वाधिकरणे ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदिशब्दयुक्तेन वाक्येन रथन्तरं निमित्तत्वेनाऽनूदितम्, एवमत्रापि पञ्चमस्थाने श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीयस्थाने स्थापयितुं "यदि ब्राह्मणः" इत्यादि

---

१. पूर्वाधिकरणेनाऽस्याऽऽपवादिकी सङ्गतिः ।

२. दिग्व्यवस्थापनप्रयुक्तोन्मादयितॄणामवजननहेतुत्वात् अवेष्टिरिति कर्मनामधेयम् । इष्टेरस्याः पूर्वोक्तावजननहेतुत्वं तैत्तिरीयब्राह्मणे प्रथमाष्टके अष्टमप्रपाठके तृतीयानुवाके प्रतिपादितम् ।

३. तै. सं. १. ८. १९.  ४. पिशङ्गी पिङ्गलवर्णा ।  ५. पष्ठौही बालगर्भिणी ।

६. वशा वन्ध्या ।  ७. यस्य पशोरुपरि भागे श्वेतवर्णस्स शितिपृष्ठः ।

८.(मै.सं.४.४.९.) ब्राह्मणकर्तृके प्रयोगे आग्नेयादीनि चत्वारि हवींषि प्रतिदिशमासाद्य तेषां मध्ये बार्हस्पत्यमासाद्य आग्नेयाद्येकैकं हविर्हुत्वा तस्य तस्य संस्रवेण मध्ये निहितं हविरभिघारयेत् । एवं राजन्यकर्तृकप्रयोगे ऐन्द्रं हविर्मध्ये निधाय, वैश्यकर्तृकप्रयोगे वैश्वदेवं मध्ये निधाय तदभिघारयेदित्यर्थः ।

निमित्तत्वेनाऽनूद्यते । द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृतीयस्थानेऽवस्थापयितुं "यदि राजन्यः" इत्यनुवादः । वैश्वदेवस्य तु स्वत एव तृतीयस्थाने श्रवणात्तत्र मध्ये निधानविधिर्नित्यानुवादः । ननु राजकर्तृके राजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नाऽनुवादो युक्त इति चेत्—न; तयोरपि राज्ययोगहेतुराजशब्दार्थत्वादिति प्राप्ते—

**ब्रूमः**—राजशब्दः क्षत्रियजातौ रूढः, न तु राज्ययोगस्तस्य प्रवृत्तिनिमित्तम् । प्रत्युत राज्यशब्दस्य राजयोगः प्रवृत्तिनिमित्तम्, 'राज्ञः कर्म' इति विगृह्य राजप्रातिपदिकस्योपरि(१) प्रत्ययविशेषविधानात् । ब्राह्मणवैश्ययोः प्रजापालनेन राजशब्द उपचरितः । तस्मात् अवेष्टौ ब्राह्मणवैश्यौ पूर्वमप्राप्तावनेन वचनेन प्राप्येते । ननु राजसूयस्य राजकर्तृकत्वात्तदन्तर्गताया अवेष्टेरपि तथात्वात्तस्यां ब्राह्मणवैश्ययोः प्रापणमयुक्तमिति चेत्—मैवम्; । अन्तरवेष्टौ तदसम्भवेऽपि राजसूयाद्बहिः प्रयुज्यमानायामवेष्टौ तत्संभवात् । तस्मादत्र ब्राह्मणादिकर्तृकं यथोक्तगुणविशिष्टं कर्मान्तरं विधीयत इति न रथन्तरादितुल्यत्वम् । यदिशब्दस्तु निपातत्वादनर्थकोऽर्थान्तरवाची वेत्युन्नेयम् ॥

इति द्वितीयमवेष्ट्यधिकरणम् ॥ २ ॥

---

अथ तृतीयमाधानाधिकरणम् ॥ ३ ॥

(२) तृतीयाधिकरणमारचयति—

**वसन्ते विप्र आदध्यात्तत्रैवोपनयीत तम् ।**
**अनुवादः प्रापणं वाऽनुवादः कालसिद्धये ॥ ७ ॥**
**अन्तरेणाऽग्निविद्याभ्यां कर्मानुष्ठित्यसम्भवात् ।**
**क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः ॥ ८ ॥**
**लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नाऽस्ति कल्पनम् ।**
**कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते ॥ ९ ॥**

(३) "वसन्ते ब्राह्मणोऽग्नीनादधीत" (४) "ग्रीष्मे राजन्यः" (५) "शरदि वैश्यः"

---

१. 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा. सू. ५. १. १२४.) ति सूत्रेण ष्यञ्प्रत्ययविधानादित्यर्थः ।

२. पूर्वाधिकरणेनाऽस्य प्रत्युदाहरणसङ्गतिः ।

३. तै. ब्रा. १. १. २. ६. ४. तै. ब्रा. १. १ २.

५ तै. ब्रा. १. १. २. ७.

इति श्रूयते । "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इति च । तत्र वसन्तादिकालविशेषं विधातुं ब्राह्मणादयोऽनूद्यन्ते । न च तेषां प्राप्त्यभावः, क्रत्वनुष्ठानान्यथानुपपत्त्या क्लृप्तत्वात् । न ह्याहुत्याधारभूतमग्निम्, अनुष्ठानप्रकारज्ञापिकां विद्यां च विना कर्मानुष्ठानं संभवति । अग्निश्च नाऽऽधानमन्तरेणाऽस्तीति ब्राह्मणादिकर्तृकमाधानं कल्पयति । विद्या चोपनयनपूर्वकाध्ययनमन्तरेणाऽसंभवन्ती ब्राह्मणाद्युपनयनं कल्पयतीति तत्र प्राप्तिरिति **चेत्**—

**मैवम्**; लौकिकाग्नौ होतुं, पुस्तकपाठेनाऽधिगन्तुं च शक्यत्वेनाऽऽधानोपनयनयोरकल्पने ब्राह्मणादीनामप्राप्तेः । तस्मात् वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने अत्र विधीयेते ॥

इति तृतीयमाधानाधिकरणम् ॥ ३ ॥

---

## अथ चतुर्थं दाक्षायणयज्ञाधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**यदाक्षायणयज्ञेन स्वर्गकामो यजेत तत् ।**
**कर्मान्तरं गुणो वोक्तदर्शादौ फलसिद्धये ॥ १० ॥**
**गुणस्याऽस्याऽप्रसिद्धत्वात्कर्मभेदोऽत्र संज्ञया ।**
**गुणो व्युत्पत्तिशेषाभ्यामावृत्त्याख्या न नाम तत् ॥ ११ ॥**

दर्शपूर्णमासप्रकरणे श्रूयते—(१)"दाक्षायणयज्ञेन स्वर्गकामो यजेत" इति । तत्र दाक्षायणशब्दवाच्यस्य कस्यचिद्गुणस्य लोके प्रसिद्ध्यभावादुद्भिदादिवद्यजिसामानाधिकरण्येन कर्मनामत्वात् "अथैष ज्योतिः" इत्यादिवदपूर्वसंज्ञायां कर्मान्तरविधिरिति **चेत्**—

**न**; दाक्षायणशब्दस्याऽऽवृत्तिवाचकत्वात् । तच्च शब्दनिर्वचनाद्वाक्यशेषाद्वाऽवगम्यते । तथा हि—'अयनम्' इत्यावृत्तिरुच्यते (२)दक्षस्येमे दाक्षाः, तेषामयनमिति तन्निर्वचनम् । दक्ष उत्साही पुनः पुनरावृत्तावनलस इत्यर्थः । तदीयानां प्रयोगाणामा-

---

१. ( तै. सं. २. ५. ५. ४. ) प्रकृतदर्शपूर्णमासाश्रितेन दाक्षायणाख्येन ( दर्शपूर्णमासावृत्तिरूपेण ) गुणेन स्वर्गं भावयेदिति विषयवाक्यार्थः ।

२. शतपथकौषीतकिब्राह्मणयोस्तु "स वै ( प्रजापतिः ) दक्षो नाम । तद्यदेनेन सोऽग्रेऽयजत, तस्माद्दाक्षायणयज्ञः" ( श. ब्रा. २. ४. ४. २. ) इति, "दक्षो ह वै पार्वतिरेतेन यज्ञेनेष्ट्वा सर्वान् कामानाप ( कौ. ब्रा. ४. ४. ) इति वाक्यशेषो दृश्यते ।

वृत्तिर्दाक्षायणशब्दार्थः । तथा चाऽऽवृत्त्या युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञः । आवृत्तिप्रकारस्तु (१)"द्वे पौर्णमास्यौ यजेत, द्वे अमावास्ये" इत्यादिवाक्यशेषादवगम्यते । ततो दध्यादिवत्प्रसिद्धार्थत्वाद्दर्शपूर्णमासयोः प्रकृतयोरयं स्वर्गफलसिद्ध्यर्थमावृत्त्याख्यगुणविधिः, (२)न तूद्भिदादिवत्कर्मनामधेयम् ।

एवं (३)"साकंप्रस्थायीयेन यजेत पशुकामः" इत्यत्राऽपि द्रष्टव्यम् । अमावास्यायागे द्वौ द्वौ दोहौ सम्पाद्य चतसृणां दधिपयसोः कुम्भीनां सह प्रस्थापनं साकं प्रस्थायः । तद्युक्तो यागः साकंप्रस्थायीयः । तथा सति प्रकृते दर्शयागे पशुफलाय साकंप्रस्थायाख्यो गुणो विधीयते ॥

इति चतुर्थं दाक्षायणयज्ञाधिकरणम् ॥४॥

---

## अथ पञ्चममीषालम्भाधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

**वायव्यः श्वेत आलभ्यो भूत्यै सौर्यं चरुं तथा ।**
**निर्वपेद्ब्रह्मतजोर्थमीषामुष्टिनिरुप्तयोः ॥ १२ ॥**

---

१. मा. श. ब्रा. २. ४. १. ६ ; ११. १. २. १३, and का. श. ब्रा. १. ३. ४. ४.

२. "य एवं विद्वांस्त्रिंशतं वर्षाणि यजेत ( दर्शपूर्णमासाभ्यां ) तस्मादु त्रिंशतमेव वर्षाणि यजेत, यद्यु दाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेताऽत्र ह्येव सा सम्पत्सम्पद्यते द्वे हि पौर्णमास्यौ यजते द्वे अमावास्ये" ( श. ब्रा, ११. १. २. १३. ) इति शतपथब्राह्मणे यावज्जीवपक्षानुकल्पतया त्रिंशद्वर्षपक्षमभिधाय, तदनुकल्पत्वेनाऽपि दाक्षायणयाजिनः पञ्चदशवर्षपक्षमुपदिश्य तदर्थवादे तावतैव त्रिंशद्वर्षसाध्यप्रयोगावृत्तिरभिहिता । तदिदं गुणफलार्थत्व एवोपपद्येत, न तु कर्मनामत्व इति बोध्यम् ।

३. ( तै. सं. २. ५. ४. ) अयमत्र विषयसंग्रहः—दर्शे आग्नेयपुरोडाशयागः ऐन्द्रदधियागः, ऐन्द्रपयोयागश्चेति यागत्रयमेकदाऽनुष्ठीयते । तत्र वेद्यामासादितेषु पुरोडाशदधिपयस्सु प्रथमतः पुरोडाशादवदानधर्मेण जुह्वामवदाय हुत्वाऽनन्तरं कुम्भीस्थस्थाद्दध्नः पयसश्च सहैवाऽवदाय होतव्यमिति नित्यदार्शिकस्थितिः । प्रकृते चाऽऽग्नेययागानन्तरमध्वर्युस्स्वहस्तस्थिते जुहूपभृतावाग्नीध्रहस्ते दत्वा दधिकुम्भीं पयःकुम्भीञ्च तथैवाऽऽदाय आहवनीयसमीपं गत्वा कुम्भीभ्यामेव दधिपयसी जुहुयात् । तदेतत्कुम्भीभ्यां सह होमार्थमाहवनीयसमीपगमनं साकं प्रस्थाय इत्युच्यते । तच्च सहप्रस्थानं पशुरूपफलोद्देशेन विधीयत इति गुणगलसम्बन्धविधिरयम् ।

**गुणौ श्वेतं चरुं किं वा यात्रत्कथितकर्मणी ।**
**फलार्थे, अथवा यागौ विशिष्टौ विहिताविह ॥ १३ ॥**
**श्वैत्यं वायुस्पृगीषायामाग्नेये च रविप्रभे ।**
**चरुर्गुणश्चरुः स्थाली निर्वापस्तु तदाश्रितः ॥ १४ ॥**
**फलहानेर्न तत्किं तु यावच्चोदितकर्म तत् ।**
**द्रव्यादिरूपसंपत्तेरवार्था यागताऽऽर्थिकी ॥ १५ ॥**

अनारभ्येदमाम्नायते—(१)"वायव्यं श्वेतमालभेत भूतिकामः" इति, (२)"सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति च । तथा दर्शपूर्णमासयोरिदमाम्नायते—"ईषामालभेत" इति, "चतुरो मुष्टीन्निर्वपती"ति च । ईषा शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषः । तस्या आलम्भः स्पर्शः । तमेतं दर्शपूर्णमासगतमीषालम्भमनूद्य तस्यामालभ्यायामीषायां (३)श्वेतगुणो विधीयते । तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वाद्वायव्यता सम्भवति । तथा चतुर्मुष्टिनिर्वपणमनूद्य चरुर्गुणत्वेन विधीयते । चरुः स्थाली । सा च निर्वापस्याऽऽश्रयः । निरुप्तस्य हविष आग्नेयतया सूर्य्यवत्प्रभासंबन्धात्सौर्यत्वम् । भूतिब्रह्मवर्चसे फले च सार्वकामिकयोर्दर्शपूर्णमासयोः पूर्वसिद्धे एवाऽनूद्येते । तस्मात् गुणविधी इत्येकः **पूर्वपक्षः** ।

न हि फलपदयोर्नित्यवच्छ्रुतयोः संभवत्प्रयोजनयोश्च पाक्षिकानुवादत्वम् , आनर्थक्यं वा युक्तम् । तस्मात् गुणफलविशिष्टे कर्मान्तरे विधीयेते । तदाऽपि यागस्याऽश्रवणादालम्भनिर्वापयोरेव श्रवणाद्यावदुक्तकर्मविधिरिति **द्वितीयः पूर्वपक्षः** ।

श्वेतपशुचरुद्रव्ययोः वायुसूर्यदेवतयोश्च स्पष्टं प्रतीयमानतया रूपवतोर्यागयोरार्थिकयोर्वारयितुमशक्यत्वाद्द्रव्यदेवताविशिष्टयोर्यागयोर्विधिरभ्युपगन्तव्यः । 'भूतिकामो वायव्येन श्वेतेन पशुना यजेत' 'ब्रह्मवर्चसकामः सौर्येण चरुणा यजेत' इत्येवंविधोऽर्थसिद्धो विधिः । द्रव्यदेवतासम्बन्धकल्पितस्य यागस्य लिङ्प्रत्ययेन कर्तव्यताविधावालम्भनिर्वापयोर्धात्वर्थयोः का गतिरिति चेत्—अनुवाद इति ब्रूमः । तत्प्राप्तिस्त्वार्थिकी, निर्वापालम्भावन्तरेण तत्तद्यागासिद्धेः । तस्मात् यागविधिरिति **राद्धान्तः** ।

इति पञ्चममीषालम्भाधिकरणम् ॥ ५ ॥

---

१. तै. सं. २. १. १. १. See. मै. सं. २. २. २. also.
२. तै. सं. २. ३. २. ३.  ३. श्वेतत्वं गुणो विधीयत इति क. पु.

## अथ षष्ठं वत्सालम्भाधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**वत्सालम्भो यजिः स्पर्शो वा वायव्यादिवद्यजिः ।**
**स्पर्शः स्याद्देवराहित्यात्संस्कारः प्रायपाठतः ॥ १६ ॥**

अग्निहोत्रदोहाधिकारे श्रूयते—(१)"वत्समालभेत" इति । तत्र विमतो वत्सालम्भो यजिः स्यात्, प्राणिद्रव्यकालम्भत्वात्, वायव्यालम्भवदिति चेत्—

न;—देवताराहित्येन तद्वैषम्यात् । किंचाऽयं वत्सालम्भोऽग्निहोत्राङ्गसंस्कारः, तत्प्राये पठितत्वात्, इतरसंस्कारवत् । (२)तस्मादयं स्पर्शमात्रविधिः ॥

इति षष्ठं वत्सालम्भाधिकरणम् ॥ ६ ॥

## अथ सप्तमं चरूपधानाधिकरणम् ॥ ७ ॥

सप्तमाधिकरणमारचयति—

**चरुर्भवति नैवार उपधत्ते चरुं त्विति ।**
**यागः स्यादुपधानं वा यागः शेषोक्तदैवतः ॥ १७ ॥**
**यागत्वानिश्चये शेषो नापेक्ष्योऽतो यजिः कुतः ।**
**किं तूपधानमात्रत्वं यावदुक्तं चरौ स्थितम् ॥ १८ ॥**

अग्नौ श्रूयते—"नैवारश्चरुर्भवति" इति, "चरुमुपदधाति" इति च । तत्र–नीवारचरुद्रव्यको यागो विधीयते । न चाऽत्र देवताया अभावः "बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इति वाक्यशेषेण देवतासिद्धेः । (३)उपधानं तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृदादिवदिति प्राप्ते—

ब्रूमः—यागविधौ निश्चिते सति पश्चाद्देवतायामपेक्षितायां वाक्यशेषबलाद्देवताक्लृप्तिः, इह तु देवताकल्पनेन यागविधित्वनिश्चय इत्यन्योन्याश्रयः । तस्मादिहोपधानमात्रं विधीयते ॥

इति सप्तमं चरूपधानाधिकरणम् ॥ ७ ॥

---

१. मै. सं. १.५.९.

२. "वत्सनिकान्ता हि पशवः" (मै.सं.१.५.९., का.सं.७.७.) इति तद्वाक्यशेषे पशूनां वत्सप्रियत्वात् समीपधारणफलकस्पर्शनेन प्रस्नवनं जायत इति प्रतीयमाना स्तुतिः स्पर्शमात्रविधित्वे सत्युपपद्यते, न तु यागपरत्व इति ध्येयम् ।

३. इष्टकामध्ये पात्रेण सह चरोर्निक्षेपणम् । ( गाड़ देना )

## अथाऽष्टमं पात्नीवताधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**पर्यग्निकृतः पात्नीवत उत्सृज्यत इत्यसौ ।**
**यागो गुणो वा यागः स्यादन्वयाव्यवधानतः ॥ १९ ॥**
**प्रत्यभिज्ञातमालभ्यमनूद्योत्सर्गशब्दतः ।**
**गुणं पर्यग्निकृत्याख्यं वक्त्युत्तरनिवृत्तये ॥ २० ॥**
**न दुष्टा परिसंख्याऽत्र चोदकात्प्राग्विधौ सति ।**
**पर्यग्निकरणान्ताङ्गरीतिः क्लृप्तोपकारतः ॥ २१ ॥**

"त्वाष्ट्रं पात्नीवतमालभेत" इति प्रकृत्येदमाम्नातम्—(१)"पर्यग्निकृतं पात्नीवतमुत्सृजन्ती"ति । तत्र पर्यग्निकृतशब्देन संस्कृतपशुद्रव्यस्य पात्नीवतशब्देन पत्नीवन्नामकदेवतासंबन्धस्य च प्रतीयमानत्वादयं यागविधिः । एवं सति पर्यग्निकृतपात्नीवतशब्दयोरव्यवहितान्वयो लभ्यते । सिद्धान्ती तु 'पर्यग्निकृतमुत्सृजन्ति' इत्यन्वयं वाञ्छति । तदा व्यवहितान्वयो दुर्वारः । तस्मात् वायव्यपशुवद्यागविधिरिति **प्राप्ते**—

**ब्रूमः**—अनारभ्याधीतत्वान्नाऽस्ति वायव्ये प्रकृतप्रत्यभिज्ञा । इह त्वालभ्यत्वेन प्रकृतः पशुः पात्नीवतशब्देन प्रत्यभिज्ञायते। तमनूद्य पर्यग्निकृतशब्दान्वितेन उत्सृजन्तीत्याख्यातेन पर्यग्निकरणाख्यो गुणो विधीयते । न च प्रकृतिगतस्य पर्यग्निकरणस्य विकृतौ चोदकेन प्राप्तत्वादनर्थकोऽयं विधिरिति वाच्यम् । उपरितनाङ्गाननुवृत्तेर्विधिप्रयोजनत्वात् ।

नन्वेवं सति परिसंख्या स्यात् । सा च दोषत्रयदुष्टा । स्वार्थत्यागः, अन्यार्थस्वीकारः, प्राप्तबाधश्चेति त्रयो दोषाः । पर्यग्निकरणवाक्ये स्वार्थो विधिस्त्यज्येत, अन्यार्थो निषेधः स्वीक्रियेत, चोदकप्राप्तान्युपरितनाङ्गानि बाध्येरन् । मैवम् ; पर्यग्निकरणोत्तरभावीन्यङ्गानि नाऽनुष्ठेयानीत्येतस्याः परिसंख्याया अनङ्गीकारात् । कथं तर्हि तन्निवृत्तिः ? आर्थिकीति ब्रूमः । चोदकप्रवृत्तेः प्रागेवाऽयं विधिः प्रवर्तते, प्रत्यक्षोपदेशस्य शीघ्रबुद्धिजनकतया कल्प्यातिदेशात्प्रबलत्वात् । तथा सत्युपदिष्टैरेवाङ्गैर्निराकाङ्क्षायां विकृतौ चोदकस्याऽप्रवृत्त्यैवोपरितनान्यङ्गानि न प्राप्यन्ते । न चाऽनेन न्यायेन पर्यग्निकरणात्प्राचीनानामप्यप्राप्तिरिति वाच्यम् । विधीयमानस्य पर्यग्निकरणस्य नूतनत्वे सत्युपकारकल्पनापत्त्या प्रकृतौ यत्क्लृप्तोपकारं पर्यग्निकरणं, तदवस्थापन्नस्यैवाऽत्र विधेयत्वात् । प्रकृतौ च प्राचीनाङ्गानन्तरभाविन एवोपकारः क्लृप्त इत्यत्राऽपि तादृशस्यैव विधानात्पर्यग्निकरणान्ताङ्गरीतिः सिध्यति । एवं च सति 'उत्सृजन्ती' त्याख्यातेन यथोक्तपर्यग्निकरणविधावर्थसिद्ध उपरितनाङ्गोत्सर्गो धातुनाऽनूद्यते । तदेवमत्र गुणविधिः ॥

इत्यष्टमं पात्नीवताधिकरणम् ॥ ८ ॥

---

१. तै. सं. ६. ६. ६.

## अथ नवममंश्वदाभ्याधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**यददाभ्यं गृहीत्वेति गृह्णात्यंशुमिति द्वयम् ।**
**तद्यागो वा गुणो यागः स्याददाभ्यांशुनामतः ॥ २२ ॥**
**ग्रहयोरेव नाम स्यादानन्तर्याद्विधिस्तयोः ।**
**गुणोऽतस्तस्य वाक्येन ज्योतिष्टोमाभिगामिता ॥ २३ ॥**

अनारभ्य श्रूयते-(१)"एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजत" इति,(२) "परा वा एतस्याऽऽयुः प्राण एति, योंऽशुं गृह्णाति" इति च। तत्र अदाभ्यशब्दस्य ज्योतिरादिवदपूर्वनामत्वात्तन्नामको यागो 'यजत' इत्याख्यातेन विधीयते। 'अंशुम्' इत्यत्र यजतेरश्रवणेऽपि नामविशेषबलादेवाऽपूर्वयागविधिः । न चाऽत्र द्रव्यदेवतयोरभावः, ग्रहणलिङ्गेन ज्योतिष्टोमविकृतित्वावगतौ तदीयविध्यन्तातिदेशेन तत्सिद्धेरिति **प्राप्ते—**

**ब्रूमः**—भवत्वदाभ्यांशुशब्दयोर्नामत्वम्। ते च नामनी ग्रहयोरेव स्याताम्, न तु यागयोः। 'गृहीत्वे'ति शब्दस्याऽनन्तरमेव पाठात्। यजतिस्तु व्यवहितः। तादृशोऽपि यजिरंशुवाक्ये नाऽस्ति। तस्माद्ग्रहयोरेवाऽत्र विधिः। ग्रहणं च ज्योतिष्टोमगतस्य सोमरसस्य संस्काररूपो गुणः, ऐन्द्रवायवादिग्रहणसमानत्वात्। यद्यप्यत्र न प्रकृतो ज्योतिष्टोमः, तथाऽपि तत्सम्बन्धिग्रहणद्वारा वाक्यात् ज्योतिष्टोमगामित्वम्। अत एव 'सोमायाऽदाभ्यं गृहीत्वा' इति निर्दिश्यते। (३)अथवा तैत्तिरीयाणां षष्ठकाण्डे षष्ठे (४)प्रपाठके प्राकरणिकं विनियोजकं वाक्यं द्रष्टव्यम्। तस्मात् ज्योतिष्टोमे (५)गुणविधिः।

इति नवममंश्वदाभ्याधिकरणम् ॥ ९ ॥

---

१, २. 'एष ह वै हविषा हविर्यजति, योऽदाभ्यं गृहीत्वा सोमाय जुहोती' (तै.सं. ३. ३. ४. २. )ति तैत्तिरीयसंहितापाठः। भाष्यशास्त्रदीपिकादौ तु विस्तरनिर्दिष्ट एव पाठो दृश्यते। अत्र हविरपि सोमः, देवताऽपि सोमः । अतो यः अदाभ्यसंज्ञकं ग्रहं गृहीत्वा सोमदेवतायै यागं करोति, सः सोमेनैव सोमं यजतीति प्रथमविषयवाक्यार्थः। यः अंशुसंज्ञकं ग्रहं गृह्णाति, तस्य प्राणः आयुर्मर्यादामतिक्रामति । शतवर्षेभ्योऽप्याधिकं जीवेदिति द्वितीयविषयवाक्यार्थः।

३. "चतुर्जुह्वां गृह्णाति" "अष्टावुपभृति गृह्णाती" ति दर्शपूर्णमासीयप्रयाजाद्याज्येऽपि गृह्णातेर्दर्शनात् कथं ज्योतिष्टोमाङ्गतालाभ इति चेदाह—अथ वेति।

४. नवमानुवाक इति शेषः।

५. मीमांसाकुतूहलवृत्तिकारा वासुदेवदीक्षितास्तु-'योऽदाभ्यं गृहीत्वा सोमाय यजत' इत्यत्र सोमायेति चतुर्थ्या देवतायाः,'उपनद्धस्य गृह्णाति' 'अनभिषुतस्य गृह्णाती' ( तै. सं. ६. ६. ९. ) त्यादितैत्तिरीयकवाक्यैर्द्रव्यस्य च लाभात् द्रव्यदेवतासम्बन्धाक्षिप्तयागविधिरेवेत्यभिप्रयन्ति।

## अथ दशमं चयनाधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**अग्निं चिनुत इत्यत्र यागो वा संस्कृतिर्यजिः ।**
**लिङ्गेन यागनामत्वाद्यजिना चाऽनुवादतः ॥ २४ ॥**
**रूढ्या द्रव्यस्य नामैतद्वह्नेराधानवच्चितिः ।**
**(१)संस्कारः, संस्कृते वह्नावग्निष्टोमो विधीयते ॥ २५ ॥**

(२)"य एवं विद्वानग्निं चिनुत" इत्येवं विधाय श्रूयते—(३)"अथातोऽग्निमग्निष्टोमेनाऽनुयजति, तमुक्थ्येन, तं षोडशिना, तमतिरात्रेण" इत्यादि । अत्र अग्निशब्दो यागवाची, स्तोत्रशस्त्रादेः क्रतुलिङ्गस्य श्रूयमाणत्वात् । तच्च लिङ्गमेवं श्रूयते—(४)"अग्नेः 'स्तोत्रम्, अग्नेः शस्त्रम्' इति, "षडुपसदोऽग्नेश्चित्यस्य भवन्ति" इति च । यदि लिङ्गं प्रापकापेक्षम्, तर्हि यजिना तदनुवादः प्रापकोऽस्तु । "अग्निमग्निष्टोमेनाऽनुयजती' त्येतस्मिन्वाक्ये 'अग्निं यजती'ति यजिसामानाधिकरण्यात् "उपांशु यजतो"तिवद्यागनामत्वम् । अथोच्येत—अनुशब्दस्याऽग्निशब्देनाऽन्वयाद्यज्यन्वयोऽग्निष्टोमस्येति । तथाऽप्यग्नेः पुरोयजने सत्यग्निष्टोमस्याऽनुयजनं सम्भवति । 'देवदत्तमनुगच्छति यज्ञदत्तः' इत्यत्र देवदत्ते पुरोगमनदर्शनात् । तस्मात् "अग्निं चिनुत" इत्यत्राऽग्निनामको याग आख्यातेन विधीयते । चिनोतिस्तु(५) "इष्टकाभिरग्निं चिनुत" इति वाक्यप्राप्तस्य चयनस्य सोमयागविकृतित्वेन प्राप्तस्य ग्रहसमुदायस्येवाऽनुवाद इति **प्राप्ते**—

**ब्रूमः**—अग्निशब्दो रूढया वह्निद्रव्यमाचष्टे । रूढिश्च क्लृप्ततया लिङ्गादिकल्प्याद्यागवाचित्वाद्बलीयसीति न यागनामत्वम् । न चाऽत्र यागरूपमस्ति । द्रव्यदेवतयोरसिद्धेः । अतः "अग्निमादधीत" इत्युक्ताधानवत्(६) "अग्निं चिनुत" इत्युक्तं चयनमग्निद्रव्यसंस्कारः । न च संस्कृतस्य विनियोगाभावः, "अग्निमग्निष्टोमेन यजत" इत्यादिवाक्यैरग्निष्टोमादौ विनियोगात् । तस्मात् संस्कारविधिः ॥

इति दशमं चयनाधिकरणम् ॥ १० ॥

---

१. संस्कृतिरिति क. पु.

२. चयनेनाऽग्निं संस्कुर्यादित्यर्थः । चयनमुपधानम् । चयननिष्पादिते स्थण्डिले आहवनीयाग्निं स्थापयेदिति यावत् ।

३. चयननिष्पादिते स्थण्डिले आहवनीयाग्निस्थापनानन्तरं तस्मिन्नग्नावग्निष्टोमादिभिर्यजेतेत्यर्थः । ४. 'अग्नौ शस्त्रम्, अग्नौ स्तोत्रमि'(तां.ब्रा. ६.३.५.)ति पाठः ।

५. तै. सं. ५. ६. ६. ६. तै. सं. ५. ६. ३.

## अथैकादशं प्रकरणान्तराधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**मासं जुहोत्यग्निहोत्रं गुणोऽन्यत्कर्म वा गुणः ।**
**अनूद्य प्राप्तकर्मात्र मासोऽप्राप्तो विधीयते ॥ २६ ॥**
**उपसद्भिश्चरित्वेति नित्ये तासामसंभवात् ।**
**अनेकस्याऽविधेश्चाऽन्यत्कर्म प्रकरणान्तरात् ॥ २७ ॥**

कुण्डपायिनामयने श्रूयते—(१)"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजेत"इति । अत्र प्राप्तं (२)नित्याग्निहोत्रमनूद्य मासलक्षणो गुणोऽप्राप्तत्वाद्विधीयत इति **चेत्**—

**मैवम्**; किं मास एव विधीयते? उत "उपसद्भिश्चरित्वे" त्युक्तोपसदोऽपि? नाऽऽद्यः—उपसदामपि नित्याग्निहोत्रप्राप्तिरहितानां त्वन्मते विधातव्यत्वात् । न द्वितीयः, प्राप्ते कर्मण्यनेकगुणविधौ वाक्यभेदापत्तेः । ननु मा भूत्तर्हि गुणविधिः । कर्मान्तरत्वे किं प्रमाणमिति चेत्—प्रकरणान्तरमिति ब्रूमः । न ह्येतन्नित्याग्निहोत्रस्य प्रकरणम्, असंनिहितत्वात् । (३)अयनस्य ह्येतत्प्रकरणम्, अयनमारभ्याधीतत्वात् । का तर्हि नित्याग्निहोत्रे गुणविधिशङ्केति चेत्—प्रकरणस्याऽसमर्पकत्वेऽप्यग्निहोत्रशब्देनैतत्समर्पणादेषा शङ्का भवति । सा च वाक्यभेदापत्त्या निराकृता । तथा सति स्वतःसिद्धं प्रकरणभेदं निराकृत्य प्रकरणैक्यापादनेन गुणं विधापयितुं प्रवृत्तस्याऽग्निहोत्रशब्दस्य शक्तौ निरुद्धायां तदवस्थः प्रकरणभेदो नित्याग्निहोत्रादिदं कर्म भिनत्ति । अग्निहोत्रशब्दो धर्मातिदेशार्थ इति सप्तमे वक्ष्यते । ननूपसन्मासाभ्यां विशिष्टमिदं कर्म विधीयते । ततो वाजिनन्यायेन गुणभेदात्कर्मभेदः, न प्रकरणभेदादिति चेत्—न; वैषम्यात् । 'उपादेयतया विधेयो गुणो वाजिनम् । मासस्त्वनुपादेयः' इत्येकं वैषम्यम् । 'द्रव्यत्वेन रूपान्तर्गतं वाजिनम्,

---

१. (तां. ब्रा. २५. ४. १.) कुण्डपायिनामयनं नाम संवत्सरसाध्यसत्रविशेषः । तस्य सोमयागत्वात् तत्प्रकृतिभूताग्निष्टोमात्परम्परयाऽतिदेशेनोपसदः प्राप्ताः । उपसदो नाम आज्यद्रव्यका इष्टिविशेषाः । प्रकृतौ त्रिसंख्याकानामप्यासां द्वादशाहे द्वादशत्वविधानात् सा संख्याऽत्राऽतिदेशेन प्राप्नोति । एवञ्च कुण्डपायिनामयने द्वादशदीक्षानन्तरं द्वादशसु दिनेषु द्वादश उपसदोऽनुष्ठायाऽनन्तरमेकमासपर्यन्तमग्निहोत्रं जुहुयात् । तत एकमासपर्यन्तं दर्शपूर्णमासाभ्यां यजेत इति विषयवाक्यार्थः । कुण्डपायिनो नाम केचन ऋषिविशेषाः, तैरनुष्ठितत्वादिदं कर्म तन्नाम्ना प्रसिद्धं कुण्डपायिनामयनमिति ।

२. आहिताग्निना सायं प्रातः यावज्जीवं कर्तव्यत्वेन विहितमग्निहोत्रं नित्याग्निहोत्रम् ।

३. ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्याये सत्ररूपाण्ययनानि विहितानि । तन्मध्येऽस्याऽपि विधानादिति भावः ।

मासो न तथा' इत्यपरं वैषम्यम् । परमार्थतस्त्वत्र प्रथमतरप्रतीतेन प्रकरणभेदेन सिद्धं कर्मभेदं गुणभेद उपोद्बलयति । ततः प्रकरणान्तरमेवाऽत्र भेदहेतुः ॥

इत्येकादशं प्रकरणान्तराधिकरणम् ॥ ११ ॥

### अथ द्वादशं फलसंस्कार्याधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**अष्टाकपालमाग्नेयं रुक्कामः प्राकृते फलम् ।**
**कर्मान्यद्वा फलं भानात्पूर्वन्यायाप्रवेशनात् ॥ २८ ॥**
**मा भूद्भिन्नं प्रकरणं कर्मान्तरमसंनिधेः ।**
**अनारभ्याधीतमेतद्रूपं त्वन्यूनमीक्षते ॥ २९ ॥**

अनारभ्य श्रूयते—"(१)आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः" इति । रुक्कामस्तेजस्कामः । अत्र इष्टीनां प्रकृतिभूतदर्शपूर्णमासगतमाग्नेययागमनूद्य तत्र तेजस्कामरूपं फलं विधीयते । कुतः ? वाक्येनाऽऽग्नेयफलसम्बन्धस्य भासमानत्वात् । न च पूर्वोक्तमासाग्निहोत्रन्यायेन कर्मान्तरत्वम्, वैषम्यात् । तत्राऽयनमारभ्याधीतत्वादस्ति प्रकरणान्तरत्वम् । इह त्वनारभ्याधीतत्वेन प्रकरणमेव तावन्नास्ति, कुतोऽत्र प्रकरणान्तरत्वम् । किंच मासोऽनुपादेयः, अग्निहोत्रानुसारेण सम्पादयितुमशक्यत्वात् । फलं तूपादेयम्, दार्शपौर्णमासिकाग्नेयानुसारेण तेजसः कामयितुं शक्यत्वात् । तस्मात्—फलविधिरिति प्राप्ते—

ब्रूमः—प्रकरणान्तरत्वाभावेऽप्यनारभ्याधीतत्वादसंनिधिरस्त्येव । स एवाऽत्र कर्म भिनत्ति । न चाऽत्र वाजिनन्यायेन कर्मभेदः, अष्टाकपालद्रव्याग्निदेवतात्मनो रूपस्योभयत्रैकविधत्वात् । यदि प्रकरणान्तरत्वमप्यसन्निधिकृतभित्यसन्निधिरेव मासाग्निहोत्रे कर्मभेदहेतुः, तर्हि तस्यैवाऽयं प्रपञ्चोऽस्तु । फलं च मासवदनुपादेयम् । अन्यथा साधनवदफलत्वप्रसङ्गात् । कामना च विषयसौन्दर्यज्ञानात्स्वत एवोत्पद्यते, न तु विधिश्रवणात्सम्पद्यते । यद्यधिकरणयोर्न्यायभेदः, यदि वा न्यायैक्यम्, सर्वथा तेजस्कामेष्टिः कर्मान्तरम् । काम्येष्टिकाण्डपठितेषु (२)"ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" इत्यादिष्वयमेव न्यायो द्रष्टव्यः ॥

इति द्वादशं फलसंस्कार्याधिकरणम् ॥ १२ ॥

### अथ त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

**यजेत्समे पौर्णमास्यां यावज्जीवं तथैतया ।**

१. तै. सं. २. ३. ३.   २. तै. सं. २. २. १, मै. सं. २. १. १.

**अन्नाद्यकाम इत्यादौ कर्मभेदोऽथवा गुणः ॥ ३० ॥**
**विध्युपादानयोरैक्याद्देशादेरनुपत्तितः ।**
**आवश्यके कर्मविधौ तद्भेदः पुनरुक्तितः ॥ ३१ ॥**
**देशादियोगस्याऽप्राप्तेर्विधिर्न ह्येकता तयोः ।**
**पुंशब्दयोर्व्याप्तितित्वात्पुनरुक्त्या त्वनूद्यते ॥ ३२ ॥**

दर्शपूर्णमासप्रकरणे देशकालनिमित्तान्याम्नायन्ते—"समे यजेत" "पौर्णमास्यां यजेत" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति । अवेष्टिप्रकरणे फलमाम्नातम्—"एतयाऽन्नाद्यकामं याजयेत्" इति । आदिशब्देन संस्कारो गृहीतः । स च दर्शपूर्णमासप्रकरणे समाम्नातः—"शेषं स्विष्टकृते समवद्यति" इति । तत्र—देशकालनिमित्तफलसंस्कारा अननुष्ठेयत्वादनुपादेयाः । अत एव न विधेयाः । उपादानविधिशब्दयोः पर्यायत्वात् । ततः कर्मविधिरित्यवश्यमभ्युपेयम् । तत्र—प्रकरणिनो दर्शादेः पूर्वविहितस्यैवैभिर्वाक्यैः पुनर्विधाने "समिधो यजति" त्यादिवदभ्यासादेव कर्मभेद इति प्राप्ते—

ब्रूमः—देशादीनामविधेयत्वेऽपि विहितकर्मणा सह तेषां संबन्धो विधीयताम् । स च कर्मवत्पूर्वं न विहित इत्यप्राप्तत्वाद्विधिमर्हति । यदुक्तम्—उपादानविधिशब्दौ पर्यायाविति । तदसत्; 'अप्रवृत्तप्रवर्तनं विधानम्, तच्च पुरुषविषयः शब्दव्यापारः । अननुष्ठितस्याऽनुष्ठानमुपादानम्, तच्च कर्मविषयः पुरुषव्यापार इति महान् भेदः । योऽपि दर्शादीनां पुनर्विधिः सोऽपि देशादिसम्बन्धं विधातुं कर्मानुवाद इति न कर्मभेदमावहति । "समिधो यजति" इत्यादौ विधेयगुणान्तराभावेनाऽनुवादासंभवात्पुनर्विधानं भेदहेतुरिति वैषम्यम् ॥

इति त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥ १३ ॥

---

## अथ चतुर्दशमाग्नेयस्तुत्यर्थताधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**दर्शपूर्णमासप्रोक्त आग्नेयः केवलोऽप्यसौ ।**
**दर्शे यदिति वाक्याभ्यां कर्मान्यद्वाऽनुवादगीः ॥ ३३ ॥**
**अभ्यासादन्यकर्मत्वं दर्शेष्टौ द्विः प्रयुज्यताम् ।**
**एकत्वप्रत्यभिज्ञानादनूक्त्यैन्द्राग्नसंस्तुतिः ॥ ३४ ॥**

**इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां**
**द्वितीयाध्यायस्य तृतीयः पादः ॥**

(१)"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाऽच्युतो भवति" इति-कालद्वये विहितम् । (२)"यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति" इत्येकस्मिन् काले पुनर्विहितम् । तत्र—अविशेषपुनःश्रुतिलक्षणेनाऽभ्यासेन प्रयाजानामिव भेदः । तथा सत्याग्नेययागस्य दर्शकाले द्विःप्रयोग इति चेत्—

न;—प्रत्यभिज्ञानादाग्नेयस्यैकत्वे सत्येककालवाक्यस्याऽनुवादकत्वात् । न चानुवादो व्यर्थः, विधेयैन्द्राग्नस्तुत्यर्थत्वात् । यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भवति, तथाऽपि न केवलेनाऽग्निना साधुर्भवति । इन्द्रसहितोऽग्निः समीचीनतरः । तस्मात् "ऐन्द्राग्नः कर्तव्यः" इति विधेयस्तुतिः । प्रयाजवैषम्यं तूक्तमेवाऽनुसन्धेयम् ॥

इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

### तत्र प्रथमं यावज्जीवाधिकरणम् ॥ १ ॥

चतुर्थपादस्य प्रथमाधिकरणमारचयति—

**यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा ।**
**कालत्वात्कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम् ॥ १ ॥**
**न कालो जीवनं तेन निमित्तप्रविभागतः ।**
**काम्यप्रयोगो भिन्नः स्याद्यावज्जीवप्रयोगतः ॥ २ ॥**

बह्वृचब्राह्मणे श्रूयते—"यावज्जीवमग्निहोत्रं जुहोति" इति । तत्र—यावज्जीवशब्दो मरणावधिकालपरः । तत्कालसंबन्धश्च प्रकृते काम्याग्निहोत्रे पूर्वमप्राप्तत्वात् 'जुहोति' इत्यनूदिते कर्मणि विधीयते । तथा सत्यस्य वाक्यस्य नित्यप्रयोगविधायकत्वाभावेन वाक्यान्तरविहितः काम्यप्रयोग एक एवाऽग्निहोत्रस्य पर्यवस्यति । स च काम्यप्रयोगोऽभ्यसितव्यः, सकृदनुष्ठानस्य "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यनेनैव सिद्धत्वात् । 'यावज्जीवम्' इत्यस्य कालविधेर्वैयर्थ्यप्रसङ्गात् । तस्मात्—अयं काम्यकर्मणोऽभ्याससिद्धये कालरूपधर्मविधिरिति प्राप्ते—

**ब्रूमः**—यावज्जीवशब्दो न कालस्य वाचकः, किन्तु लक्षकः । वाच्यार्थस्तु—

---

१ तै. सं. २. ६. ३. ३.　　२. तै. सं. २. ५. ३. २.

कृत्स्नजीवनम्। न च जीवनं कर्मधर्मत्वेन विधातुं शक्यम्, तस्य पुरुषधर्मत्वात्। तं च पुरुषधर्मं निमित्तीकृत्याऽग्निहोत्रप्रयोगो विधीयते। न चाऽत्र कर्मभेदः, तद्धेतूनां शब्दान्तरादीनामभावात्। न चाऽभ्यासस्तद्धेतुः, निमित्तविशेषसद्भावेनाऽविशेषपुनःश्रुतेरभावात्। अतः प्रयोगभेदः पर्यवस्यति, जीवनस्याऽत्र निमित्तत्वात्। सति निमित्ते नैमित्तिकस्य त्यागायोगान्नित्यत्वमर्थसिद्धम्। न च जीवननिमित्तनैरन्तर्येण प्रयोगनैरन्तर्यापत्तिः, सायंप्रातःकालयोर्विहितत्वात्। तस्मात् जीवनस्य पुरुषधर्मत्वान्नित्यकाम्यप्रयोगौ भिन्नौ ॥

इति प्रथमं यावज्जीवाधिकरणम् ॥ १ ॥

---

अथ द्वितीयं शाखान्तराधिकरणम् ॥ २ ॥

द्वितीयाधिकरणमारचयति—

**शाखाभेदात्कर्मभेदो न वा, कर्मात्र भिद्यते।**
**दृष्टं काठकनामादि बहुभेदस्य कारणम् ॥ ३ ॥**
**ग्रन्थद्वारादिना ह्येते युज्यन्ते भेदहेतवः।**
**रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥ ४ ॥**

**इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां**
**द्वितीयाध्यायस्य चतुर्थः पादः ॥**

---

**काठककाण्वमाध्यन्दिनतैत्तिरीयादिशाखासु** दर्शपूर्णमासाख्यं कर्माऽऽम्नातम्। तत्र शाखाभेदात्कर्म भिद्यते। कुतः? भेदकारणानां नामभेदादीनां बहूनामुपलम्भात्। **काठककाण्वादिको** नामभेदः। कारीरीवाक्यान्यधीयानाः केचिच्छाखिनो(१) भूमौ भोजनमाचरन्ति, शाखान्तराध्यायिनो नाऽऽचरन्तीति धर्मभेदः। एकस्यां शाखायामधीताः "इषे त्वा" इत्यादयो मन्त्राः, पलाशशाखाच्छेदादयः क्रियाश्च शाखान्तरेऽप्यधीयन्त इति पुनरुक्तिः। एवमशक्त्यादयो भेदहेतव उदाहार्याः। न ह्यल्पायुषा मनुष्येण सर्वशाखाध्ययनपूर्वकं कर्मानुष्ठानं कर्तुं शक्यम्। तस्मात् शाखाभेदेन कर्मभेद **इति प्राप्ते—**

**ब्रूमः**—रूपाद्यभेदादेकं कर्म। आग्नेयाष्टाकपालादियागरूपं यदेवैकस्यां शाखा-

---

१. भोजनविधिरयं 'अक्षारलवणं भूमौ मुखेन पशुवत्कविः। चतूरात्रन्तु भुञ्जीत कारीर्यध्ययने व्रतमि'ति तैत्तिरीयकाण्डानुक्रमणिकायां ( २. १९. ) स्पष्टः।

याम्, तदेवाऽन्यत्राऽप्युपलभ्यते । "दर्शपूर्णमासाभ्यां यजेते"ति यागरूपः पुरुषव्यापारश्चैकविधः । 'दर्शपूर्णमासौ' इति कर्मनामाप्येकम् । 'स्वर्गकामः' इति फलसंबधोऽप्येकः । तस्मात् अभिन्नं कर्म । पूर्वपक्षहेतवस्त्वन्यथा संगच्छन्ते । काठकादिकं ज्योतिरादिवन्न कर्मनाम, 'काठकेन यजेत' इत्यश्रवणात् । 'काठकमधीते' इति प्रयोगाद्ग्रन्थनामेत्यवगन्तव्यम् । भूमोजनादिरध्ययनधर्मः । पुनरुक्तिरध्येतृभेदान्न दुष्यति । अल्पायुषाऽपि शाखान्तरस्थोपसंहारन्यायेन कर्माऽनुष्ठातुं शक्यते । तस्मात् अनन्यथासिद्धरूपप्रत्यभिज्ञानाच्छाखाभेदेऽपि कर्म न भिद्यते ॥

इति द्वितीयं शाखान्तराधिकरणम् ॥ २ ॥

## इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## द्वितीयोऽध्यायश्च समाप्तः ॥ २ ॥



## अथ तृतीयाध्यायस्य प्रथमः पादः ॥

**द्वितीये कर्मणां भेदे सिद्धे भिन्नक्रियास्त्वयम् ।**
**बुभुत्सितः शेषशेषिभावोऽतोऽत्राभिधीयते ॥ १ ॥**

अनेन द्वितीयतृतीययोरध्याययोः पौर्वापर्यं निरूपितम् ॥

### तत्र प्रथमं प्रतिज्ञाधिकरणम् ॥ १ ॥

तृतीयाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति—

**अशाब्दी शेषता शाब्दी वा न शाब्यप्रतीतितः ।**
**क्रियाकारकसंसर्गमात्रे व्युत्पत्तिसंभवात् ॥ २ ॥**
**गुणप्रधानभावेन संसर्गेऽन्तर्भवत्यसौ ।**
**व्युत्पत्तिसंभवात्तत्र शाब्दता स्यात्क्रियादिवत् ॥ ३ ॥**

यदिदमस्मिंस्तृतीयाध्याये प्रतिपाद्यं शेषत्वम्, न तच्छाब्दम् । कुतः ? केनापि शब्देन शेषत्वस्याऽप्रतीयमानत्वात् । व्युत्पन्नो हि शब्दः प्रत्यायकः । व्युत्पत्तिश्च न शेषशेषिभावे क्वचिद्दृष्टा । लोके सर्वत्र क्रियाकारकान्वयस्यैव व्युत्पत्तिप्रयोजकत्वदर्शनात् । अतः शेषताया अशाब्दत्वान्नाऽयमध्याय आरम्भणीय इति चेत्—

**मैवम्**;—अन्वये शेषशेषिभावस्याऽन्तर्भावात् । न हि गुणप्रधानभावमन्तरेणाऽन्वयः संभवति । द्वयोर्गुणयोः परस्पराकाङ्क्षारहितत्वेनाऽन्वययोग्यत्वाभावात् । एवं द्वयोः प्रधानयोरपि । अतो व्युत्पत्तिसंभवात्क्रियाकारकतदन्वया यथा शाब्दाः, तथा तदन्वयान्तर्गतः शेषशेषिभावोऽपि शाब्दः । तस्मादयमध्याय आरम्भणीयः ॥

इति प्रथमं प्रतिज्ञाधिकरणम् ॥



### अथ द्वितीयं शेषलक्षणाधिकरणम् ॥ २ ॥

द्वितीयाधिकरणमारचयति—

**स्वरूपहेतू न स्तोऽत्र स्तो वा नैवानिरूपणात् ।**
**पारार्थ्यं शेषताहेतू रूपं तेनोपलक्षितम् ॥ ३ ॥**

न तावदत्र शेषत्वस्य स्वरूपं निरूपयितुं शक्यते । तथा हि—शेषत्वं नाम कि-

मविनाभूतत्वम्, प्रयोज्यत्वं वा, (१)विध्यन्तविहितत्वं वा । नाऽऽद्यः-(२)षड्यागानामविनाभूतानां परस्परशेषत्वप्रसङ्गात् । न द्वितीयः—"पुरोडाशकपालेन तुषानुपवपति" इत्यत्र तुषोपवापं प्रति शेषस्याऽपि कपालस्य तत्प्रयोज्यत्वाभावात् । न तृतीयः—विध्यादिविहितस्य पलाशशाखाच्छेदस्य सत्यपि शेषत्वे विध्यन्तविहितत्वाभावात् । तस्मान्नाऽस्ति शेषतायाः स्वरूपम् । नाऽपि हेतुरस्ति, 'विमतः शेषः, एवंत्वात्' इति कस्यचिद्धेतोरनिरूपणादिति **प्राप्ते**—

**ब्रूमः**—विमतः प्रयाजादिः, शेषः, परार्थत्वात्, भृत्यादिवदिति हेतुः सुनिरूपः । अविनाभूतत्वादीनां लक्षणानां दुष्टत्वेऽपि 'परार्थः शेषः' इति लक्षणस्याऽदुष्टत्वात् । तेन लक्षित आकारः स्वरूपम् । न च पारार्थ्यस्यैव हेतुत्वे लक्षणत्वे च साङ्कर्यम्, आकारभेदेन तद्भेदात् । दृष्टान्ते गृहीतव्याप्तिं सहायीकृत्य बोधक आकारो हेतुः । इतरव्यावृत्त्या बोधक आकारो लक्षणम् । तस्माच्छेषताया हेतुस्वरूपे विद्येते ॥

इति द्वितीयं शेषलक्षणाधिकरणम् ॥ २ ॥

---

**अथ तृतीयं वादर्यधिकरणम् ॥ ३ ॥**

तृतीयाधिकरणमारचयति—

**किं द्रव्यगुणसंस्कारमात्रं शेषोऽथवा फलम् ।**
**पुमान् कर्म च पक्षौ द्वावादेयौ मतभेदतः ॥ ५ ॥**
**शेषत्वमुपकारित्वं द्रव्यादावाह बादरिः ।**
**पारार्थ्यं शेषता तच्च सर्वेष्वस्तीति जैमिनिः ॥ ६ ॥**

स्फ्यकपालादिकं द्रव्यम्, अरुणिमादिको गुणः, अवघातप्रोक्षणादिकः संस्कारः, एतेषु त्रिष्वेव शेषत्वम् । स्वर्गः फलम्, तत्कामी पुरुषः, दर्शपूर्णमासौ कर्म । न हि फलादीनां त्रयाणां शेषत्वमस्ति, उपकारित्वस्य शेषत्वलक्षणस्य फलादिष्वभावादिति **बादरेर्मतम्** ।

पारार्थ्यं लक्षणमभिप्रेत्य फलादयोऽपि शेषा इति **जैमिनेर्मतम्** । तथा च त्रीणि सूत्राणि पठ्यन्ते—"कर्माण्यपि जैमिनिः फलार्थत्वात्" "फलं च पुरुषार्थत्वात्" "पुरुषश्च कर्मार्थत्वात्" इति । तत्रोपकारित्वमतिव्याप्तम्, प्रधानभूतेऽपि स्वामिनि गर्भदासोपकारित्वदर्शनात् । तस्माज्जैमिनिमतमेव मुख्यः **सिद्धान्तः** ॥

इति तृतीयं बादर्यधिकरणम् ॥ ३ ॥

---

१. विधेरन्तो विध्यन्तः । विधिरत्र प्रधानविधिः । तत्प्रवृत्त्यनन्तरविहितत्वं विध्यन्तविहितत्वम् ।

२. पौर्णमास्यां त्रयो यागाः—आग्नेयः, उपांशुयाजः, अग्नीषोमीयश्चेति । एवं दर्श-

## अथ चतुर्थं तेषामर्थाधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**श्रुता व्रीह्याज्यसांनाय्यधर्माः साङ्कर्यगामिनः ।**
**व्यवस्थिता वा, साङ्कर्यं फलापूर्वेण सङ्गतेः ॥ ७ ॥**
**अवान्तरापूर्वसत्त्वात्साक्षात्तेनैव सङ्गतौ ।**
**श्रुत्या व्यवस्थापितास्ते सा हि प्रकरणोत्तमा ॥ ८ ॥**

व्रीहिधर्मा अवघातप्रोक्षणादयः, आज्यधर्मा उत्पवनावेक्षणादयः, सान्नाय्यधर्मा दोहनातञ्चनादयः । ते सर्वे फलहेतुतया दर्शपूर्णमासापूर्वेण संगच्छन्ते । अवान्तरापूर्वस्य कस्यचिदभावात् । एकेनैवाऽपूर्वेण फलसिद्धावपूर्वान्तरस्य कल्पकाभावात् । फलापूर्वप्रयुक्त्या चाऽनुष्ठीयमाना धर्मा यस्मिन् कस्मिन्नपि द्रव्येऽनुष्ठिताः फलापूर्वं जनयन्त्येवेति साङ्कर्ये **प्राप्ते**—

**ब्रूमः**—आग्नेयादयः षड्यागा भिन्नक्षणवर्तिनो विनश्वराः संभूय फलापूर्वं जनयितुं न शक्नुवन्ति । ततस्तज्जननसमर्थान्याग्नेयादिजन्यानि षडवान्तरापूर्वाणि कल्प्यानि । तेषु पुरोडाशद्रव्यकयागजन्यापूर्वं व्रीहिधर्माणां प्रयोजकं, प्रत्यासन्नत्वात् । फलापूर्वं तु तेन व्यवहितम् । एवं आज्यधर्माणां सान्नायधर्माणां च तत्तद्द्रव्यकयागजन्यावान्तरापूर्वेणैव साक्षात्सङ्गतिः । तथा सति तत्तदपूर्वप्रयुक्ताः संस्कारास्तत्तदपूर्वसाधनप्रकृतिद्रव्येष्वेव व्यवतिष्ठन्ते । ननु दर्शपूर्णमासप्रकरणमत्र संस्काराणां विनियोजकम् । तच्च सर्वप्रकृतिद्रव्यसाधारणमिति तदवस्थमेव साङ्कर्यम् । अथोच्येत तुषविमोकस्य व्रीहिष्वेव संभवात्तेष्वेवाऽवघातः, न त्वाज्यसान्नाय्ययोः । एवं विलापनमाज्य एव । दोहनादिकं सान्नाय्य एवेति । बाढम्; दृष्टार्थानां धर्माणां व्यवस्थितत्वेऽप्यदृष्टार्थाः प्रोक्षणादयः संकीर्येरन्निति चेत्—मैवम् ; "व्रीहीन् प्रोक्षति" "आज्यमवेक्षते" इत्यादिद्वितीयाश्रुत्या व्यवस्थापितत्वात् । श्रुतिश्च प्रकरणाद्बलीयसी । तस्माद्व्यवस्थिता धर्माः ॥

इति चतुर्थं तेषामर्थाधिकरणम् ॥ ४ ॥

---

## अथ पञ्चमं स्फ्याधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

**द्रव्यस्य स्फ्यकपालादेः साङ्कर्यं वा व्यवस्थितिः ।**
**यज्ञायुधत्वं सर्वेषां समं तेनाऽत्र सङ्करः ॥ ९ ॥**

---

ऽपि त्रयो यागाः—आग्नेयः, ऐन्द्रदधियागः, ऐन्द्रपयोयागश्चेति । तेषां षण्णामपि यागानां सहानुष्ठितानामेव फलजनकत्वं श्रूयते—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' ति । एवञ्च तेषां सहैवाऽनुष्ठानेनाऽविनाभावसत्त्वात्परस्परमङ्गाङ्गिभाव आपद्येतेति भावः ।

**वाक्यस्योद्धननादेः स्याद्वैयर्थ्यं सङ्करे सति ।**
**अनुवादो ह्यायुधोक्तिर्व्यवस्था तेन पूर्ववत् ॥ १० ॥**

**दर्शपूर्णमासयोः** श्रूयते—(१)स्फ्यश्च कपालानि चाऽग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि" इति । **स्फ्यशब्देन** खड्गाकारं काष्ठमुच्यते । **अग्निहोत्रहवणी** निर्वापसाधनं काष्ठपात्रम् । **शम्या** गदाकारं काष्ठम् । तत्र व्रीह्यादिद्रव्येष्ववघातादिसंस्काराणां साङ्कर्ये निराकृतेऽपि स्फ्यकपालादिद्रव्याणामुद्धननपुरोडाशश्रपणाद्यङ्गक्रियासु साङ्कर्यं निराकर्तुमशक्यम्, येन केनाऽपि द्रव्येण यस्यां कस्यांचित्क्रियायां कृतायामपि श्रूयमाणस्य यज्ञायुधत्वस्याऽविरोधात् । न ह्यव्यवस्थामात्रेण यज्ञसाधनत्वमपैतीति **प्राप्ते**—

**ब्रूमः**—(२)"स्फ्येनोद्धन्ति" "कपालेषु श्रपयति" "अग्निहोत्रहवण्या हवींषि निर्वपति" "शूर्पेण विविनक्ति" "कृष्णाजिनमधस्तादुलूखलस्याऽवस्तृणाति" "शम्यया दृषदमुपदधाति" "उलूखलमुसलाभ्यामवहन्ति" "दृषदुपलाभ्यां पिनष्टि" इत्येतेषां विशेषसंयोगबोधकानां वाक्यानां वैयर्थ्यं साङ्कर्यपक्षे प्रसज्येत । व्यवस्थापक्षेऽपि सम्बन्धसामान्यबोधकं यज्ञायुधवाक्यमनर्थकमिति चेत्—न; उद्धननादिवाक्यसिद्धार्थानुवादत्वात् । न च वैपरीत्येनोद्धननादिवाक्यानामेवाऽनुवादत्वमिति वाच्यम् । बहुवैयर्थ्यस्य जघन्यत्वात् । न चाऽत्यन्तं यज्ञायुधानुवादस्य वैयर्थ्यम्,(३)"यज्ञायुधानि सम्भरन्ति" इत्यासादनविधानायोपयुक्तत्वात् । तस्मात् अवघातादिसंस्कार इव स्फ्यकपालादिद्रव्याणि व्यवस्थितानि ॥

इति पञ्चमं स्फ्याधिकरणम् ॥ ५ ॥

---

**अथ षष्ठमरुणाधिकरणम् ॥ ६ ॥**

षष्ठाधिकरणमारचयति—

**क्रीणात्यरुणयेत्येतत्सङ्कीर्णं वा क्रयैकभाक् ।**
**क्रयेणाऽनन्वयात्कीर्णः सर्वद्रव्येषु रक्तिमा ॥ ११ ॥**
**द्रव्यद्वारा क्रये योगात्तद्भागे चाऽन्वयः पुनः ।**
**साक्षात्क्रये गुणस्याऽर्थाद्द्रव्ये सन्निहिते त्वसौ ॥ १२ ॥**

---

१. ( तै. सं. १. ६. ८. ३. ) यज्ञायुधानि यज्ञसाधनानि । अन्यत्सर्वं स्पष्टम् ।

२. दर्शपूर्णमासप्रकरणस्थानीमानि वाक्यानि ।

३. यानि यज्ञपात्राणि पूर्वोक्तानि, तानि गार्हपत्यस्याऽऽहवनीयस्य वोत्तरतस्सादयेयुरित्यर्थः ।

**ज्योतिष्टोमे** श्रूयते—(१)"अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इति। तत्र—अरुणाशब्दोऽरुणिमानं गुणमाचष्टे। गुणिविषयतया प्रयुज्यमानस्याऽपि "नाऽगृहीतविशेषणा विशिष्टे बुद्धिः" इति न्यायेन गुणबोधकत्वात्। अन्वयव्यतिरेकाभ्यां गुणमात्रे तद्व्युत्पत्तेश्च। तस्य चारुणिमगुणस्य तृतीयाश्रुत्या सोमक्रयसाधनत्वं प्रतीयते तच्चाऽनुपपन्नम्, अमूर्तस्य गुणस्य वासोहिरण्यादिवत्क्रयसाधनत्वासम्भवात्। ततस्तृतीयाश्रुतेर्विनियोजकत्वाभावेन प्रकरणस्याऽत्र विनियोजकत्वं वक्तव्यम्। प्रकरणं च ग्रहचमसाद्यखिलद्रव्येष्वरुणिमानं निवेशयति। न चाऽनेन न्यायेन पिङ्गाक्ष्येकहायनीशब्दार्थयोरपि सर्वद्रव्यगामित्वं शङ्कनीयम्, तयोः शब्दयोर्द्रव्यवाचित्वात्। पिङ्गलवर्णे अक्षिणी यस्यास्सा गौः पिङ्गाक्षी। एवमेकहायनी। यद्यप्येकगोवाचिनौ शब्दौ, तथाऽपि विशेषणभूतधर्मभेदाच्छब्दद्वयम्। तच्च युगपत्प्रवृत्तं सद्धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन विदधाति। न चेतरद्द्रव्यमितरद्रव्ये निवेशयितुं शक्यम्। अरुणिमगुणस्तु द्रव्येषु विशेषणत्वेनाऽन्वेतुं योग्यत्वात्तेषु निवेश्यते। तत्रैषाऽक्षरयोजना—'अरुणया' इत्येतत्पृथग्वाक्यम्। तत्र तृतीयाश्रुत्या प्राकरणिकानि साधनद्रव्याणि सर्वाण्यनूद्य प्रातिपदिकेन गुणो विधीयते—यानि ज्योतिष्टोमे साधनद्रव्याणि, तानि सर्वाण्यरुणानि कर्तव्यानीति। तस्मात् गुणस्संकीर्ण **इति प्राप्ते**—

**ब्रूमः**—यद्यप्यमूर्तो गुणः, तथाऽपि हायनवदक्षिवच्च गोद्रव्यमवच्छिनत्ति। तच्च द्रव्यं साधनमिति तद्द्वारा गुणस्य क्रयेणाऽन्वयो भवति। एवं सति वाक्यभेदो न भविष्यति। ननु वाक्यभेदाभावेऽपि लक्षणा दुर्वारा, गुणवाचिनः शब्दस्य गुणिद्रव्यपरत्वाङ्गीकारात्। मैवम्; गुणस्यैवाऽत्र तृतीयाश्रुत्या साधनत्वमुच्यते। तच्च द्रव्यद्वारमन्तरेण न सम्भवतीत्यर्थापत्त्या द्रव्यावच्छेदकत्वं कल्प्यते। तर्हि ग्रहचमसादिद्रव्यमप्यवच्छिद्यतामिति चेत्—न; तस्य द्रव्यस्य क्रयसाधनत्वाभावेन तदवच्छेदे गुणस्य श्रूयमाणक्रयसाधनत्वासिद्धेः। तर्हि 'वाससा क्रीणाति' 'अजया क्रीणाती'ति वस्त्रादीनां क्रयसाधनत्वात्तदवच्छेदोऽस्त्विति चेत्—न; तेषां क्रयान्तरसाधनत्वात्। न हि (२)तत्राऽग्नि-

---

१. (तै.सं. ६.१.९) अरुणा अरुणगुणविशिष्टा, पिङ्गे अक्षिणी यस्यास्सा पिङ्गाक्षी, एकं हायनं यस्यास्सा एकहायनी, एकवर्षवयस्केति यावत्। अत्राऽरुणादिशब्दत्रयं लक्षणया तद्विशिष्टं क्रयमभिदधाति। तस्य च भावनायां करणत्वेनाऽन्वयः। सोमश्च भाव्यत्वेनाऽन्वेति। एवञ्च आरुण्यादियुक्तगोविशिष्टक्रयेण सोमं सम्पादयेदिति विषयवाक्यार्थः।

२. अयमाशयः—'अग्निहोत्रं जुहोती'ति द्रव्यासंसृष्टकर्मविधिः। तस्य च द्रव्यापेक्षायां दध्यादिवाक्यैः द्रव्यसमर्पणं क्रियते। तेषाञ्चैकविषयाणां विकल्प इति युक्तस्तत्रैकस्मिन्नेवाऽग्निहोत्रकर्मणि सर्वेषां द्रव्याणां विकल्पेन निवेशः। प्रकृते तु केवलस्य कर्मणो विधायकं वाक्यं नाऽस्ति, येन तद्विहिते कर्मणि एकहायन्यादिवाक्यैर्गुणसमर्पणं क्रियेत। अतः तेषु गुणविशिष्टक्रयविधिरेवाऽभ्युपगन्तव्यः। उत्पत्तिशिष्टैकगुणावरोधेन गुणान्तरस्याऽनिवेशाच्च तेष्वपि पृथक्पृथक् विशिष्टविधिरभ्युपगन्तव्य इति दशस्वपि

होत्रे पयोदध्यादिविकल्पवत्क्रयानुवादेन वस्त्रादिद्रव्यविकल्पो विधीयते । अनुवाद्यस्य क्रयमात्रस्याऽग्निहोत्रवदन्यत्राऽविधानात् । ततो वस्त्रादिद्रव्यविशिष्टाः क्रयान्तरविधयः। न हि स्ववाक्यगतमेकहायनीद्रव्यमुपेक्ष्य वस्त्राद्यवच्छेदो युक्तः । तस्मात्क्रयेण साक्षादन्वितयोर्द्रव्यगुणयोःपश्चादर्थापत्त्या परस्परावच्छेदकत्वेनाऽन्वयः। तथा सति आरुण्यविशिष्टैकहायन्या क्रीणातीत्यर्थः पर्यवस्यति । तस्मात् आरुण्यगुणः क्रयहेतुमेकहायनीमेव भजते ॥

इति षष्ठमरुणाधिकरणम् ॥ ६ ॥

## अथ सप्तमं ग्रहैकत्वाधिकरणम् ॥ ७ ॥

सप्तमाधिकरणमारचयति—

**संमार्ष्टि ग्रहमित्येको ग्रहः शोध्य उताऽखिलः ।**
**एक उद्देश्यसंख्याया उपादेयवदादरात् ॥ १३ ॥**
**प्राधान्यात्तद्गुणावृत्तेरेकत्वमनपेक्षितम् ।**
**तद्विधौ वाक्यभेदोऽतो द्रव्योक्त्या सर्वशोधनम् ॥ १४ ॥**

सोमे श्रूयते—(१) "दशापवित्रेण ग्रहं संमार्ष्टि" इति । दशापवित्रं वासःखण्डः।

---

वाक्येषु दश क्रयाः तत्तद्गुणविशिष्टा विधीयन्त इति । इदञ्च गुणरहितकेवलक्रयविध्यभावमभिप्रेत्य । यदा तु 'तस्मात्सोमं क्रीणाती'ति केवलक्रयमात्रविधायकं वाक्यमस्तीत्यभ्युपगम्यते, तदा तद्विहिते क्रये एकहायन्यादिवाक्यैर्गुणमात्रं समर्प्यते । तेषाञ्च विकल्प इति कुतूहलवृत्तिकारोक्तमेव साध्वित्यवगन्तव्यम् ।

१. सोमयागे ऐन्द्रवायवादयो ग्रहा धारातो गृह्यन्ते । तत्प्रकारस्तु—अभिषवप्रकरणोक्तप्रकारेण सोममभिषुत्य तं सरसमाधवनीयसंज्ञके सोदके कलशे निक्षिप्य परिप्लाव्य हस्तेन निष्पीड्य, ततो निस्सारमृजीषाख्यं वहिर्निष्कास्याऽधिषवणफलकोपरि प्रसार्य तदुपरि द्रोणकलशाख्यं पात्रं स्थापयित्वा, तत उपरि वस्त्रखण्डं मध्ये सच्छेदमूर्णाकृतनाभिं ( सोमरसस्य धारारूपेण पतनार्थं ) वितत्य, उद्गातृपुरुषाश्चतुर्षु कोणेषु धारयेयुः । ततो यजमानो निग्राभ्यसंज्ञकजलविशिष्टं होतृचमसं स्वहस्ते धारयेत् । तत उन्नेता आधवनीयपात्रस्थं सोमरसं यजमानहस्तस्थितहोतृचमसे समानयेत् । यजमानस्तं रसं पवित्राख्ये वस्त्रखण्डे समानयेत् । तत्र समानीतस्सोमरसः परिपूतो वस्त्रस्थितनाभिद्वारा तनीयस्या धारया अधः पतन्निन्द्रवाय्वादिदेवताभ्य उलूखलाकारेषु पात्रेषु गृह्यते । ग्रहणकाले पात्रोपरि लग्नस्य सोमस्य प्रोञ्छनं सम्मार्ग इत्युच्यते । स एवाऽत्र 'दशापवित्रेण ग्रहं सम्मार्ष्टी'त्यनेन विधीयते । पवित्रार्थं यद्वासस्तदेव दशापवित्राभिधेयमिति विस्तरकृदाशयः । एतच्च 'दशापवित्रेण परिमृज्ये'ति कात्यायनादिसूत्रानुगुणम् । 'पवित्रदशाभिः परिमृज्ये'त्यापस्तम्बसूत्रानुरोधेन तु—पवित्रस्य शोधकस्य वस्त्रखण्डस्य या दशा अग्राणि, ताभिः परिमृज्यादित्यर्थो बोध्यः ।

तत्र यथा "पशुना यजेत" इत्यत्रोपादेयपशुगतमेकत्वं विवक्षितम्, तद्वदुद्देश्यग्रहगतमप्येकत्वं विवक्षितव्यम्। किञ्च ग्रहशब्दस्य जातिवाचित्वेन जातेः संस्कार्यत्वे सति तदाश्रयभूते यस्मिन् कस्मिन्नपि द्रव्येऽनुष्ठितेन संस्कारेण जातिः संस्कृता भवति। तस्मादेक एव ग्रहः शोधनीय इति **प्राप्ते—**

**ब्रूमः**—'ग्रहम्' इति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते। ग्रहं प्रति गुणः संमार्गः। 'प्रतिप्रधानं च गुण आवर्तनीयः' इति न्यायेन यावन्तो ग्रहाः सन्ति, ते संमार्जनीयाः। एवं निश्चये सति संमार्जयितव्यग्रहेयत्ताया अबुभुत्सितत्वादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम्। अथोच्येत—नेदमुद्देश्यगतम्, किंतु द्वयं विधेयमिति। तन्न; वाक्यभेदापत्तेः। ग्रहं संमृज्यात्, तं चैकम् इत्येवं विधेयार्थभेदाद्वाक्यभेदः। 'पशुना यजेत' इत्यत्र तु यागं प्रति गुणभूतः पशुः। न हि प्रतिगुणं प्रधानस्याऽऽवृत्तिरिति कश्चिन्न्यायोऽस्ति। तत इयत्ताया बुभुत्सितत्वाच्छ्रूयमाणमेकत्वं विवक्ष्यत इति वैषम्यम्। न च जातिः संस्कार्या, तस्या अमूर्तत्वात्। ततो जातिद्वारा द्रव्यलक्षको गुणशब्दः। तत्र चाऽऽवृत्तिरुक्ता। तस्मात् सर्वे ग्रहाः संमार्जनीयाः॥

इति सप्तमं ग्रहैकत्वाधिकरणम्॥ ७॥

---

### अथाऽष्टमं चमसाधिकरणम्॥ ८॥

अष्टमाधिकरणमारचयति—

**चमसादि च संमृज्यान्नो वा तस्याऽस्ति मार्जनम्।**
**एकत्ववद्ग्रहत्वस्याऽप्यनादरणसम्भवात्॥ १५॥**
**अबाधोऽत्राऽऽदरे हेतुर्वाक्यभेदस्तु नैव हि।**
**चमसादौ न संमार्गः श्रुत्या तद्विषयार्पणात्॥ १६॥**

'ग्रहम्' इत्यत्र प्रत्ययार्थभूतमेकत्वं यथा न विवक्षितम्, तथा प्रातिपादिकार्थस्य ग्रहत्वस्याऽप्यविवक्षा संभाव्यते। ततो ग्रहशब्दस्य सोमपात्रोपलक्षकत्वाद्ग्रहाणामिव(१) चमसानामपि संमार्गेण सोमावसेकनिर्हरणप्रयोजनसम्भवाच्चमसादयोऽपि मार्जनीया इति **प्राप्ते—**

**ब्रूमः**—एकत्वं वाक्यभेदेन दुष्टत्वादविवक्षितम्। अदुष्टं तु ग्रहत्वं कुतो न विवक्ष्येत। ततः सत्यपि प्रयोजने प्रमाणाभावाच्चमसादौ नाऽस्ति संमार्गः। न च विषयापेक्षया तत्कल्पनम्, ग्रहश्रुत्यैव तद्विषयसमर्पणात्। तस्मान्नाऽस्ति संमार्गः॥

इत्यष्टमं चमसाधिकरणम्॥ ८॥

---

१. चमसो नाम चतुरस्राकारः सत्सरुकः सबिलो दारवः पात्रविशेषः।

## अथ नवममानर्थक्यतदङ्गाधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**भवेत्सप्तदशारत्निर्वाजपेयस्य यूपकः ।**
**उन्मानं द्रव्यगं वाजपेयस्याऽङ्गं पशोरुत ॥ १७ ॥**
**आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।**
**ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्याऽन्वेति कर्मणा ॥ १८ ॥**
**यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।**
**सौमिकत्वाद्वाजपेये यूपो नाऽस्ति पशुं विना ॥ १९ ॥**

**वाजपेयप्रकरणे** श्रूयते—"सप्तदशारत्निर्वाजपेयस्य यूपो भवती"ति । तत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गम्, सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न सम्भवेत्, तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं प्रथमं सम्बध्य तद्द्वारा कर्मणाऽन्वेतीति **प्राप्ते**—

**ब्रूमः**—'सप्तदशारत्निर्यूपः' इति सामानाधिकरण्याद्यूपेन साक्षात्सम्बध्यते । तस्य यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्याऽपि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति, तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसम्बन्धाभावात्पशुव्यवधानमभ्युपेयम् । 'वाजपेयस्य' इति षष्ठ्याः सम्बन्धमात्रवाचित्वेन व्यवहितसम्बन्धमप्यसावभिधत्ते । 'देवदत्तस्य नप्ता' इति प्रयोगात् । यत्तु—सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यम्, यच्च प्रकरणम्, तदुभयमप्यविरुद्धम्, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किंच पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नाऽसौ दोषः ॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥ ९ ॥

---

## अथ दशममभिक्रमणाधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**अभिक्रामं जुहोतीति युक्तं कर्त्राऽखिलस्य तत् ।**
**किंवा प्रयाजमात्रस्य कृत्स्नकर्तृयुतं भवेत् ॥ २० ॥**
**प्रयाजाभिक्रमणयोः क्रियात्वादुभयोरपि ।**
**मिथस्सम्बन्धराहित्यात्, मैवं तेऽपि समत्वतः ॥ २१ ॥**

**कर्तृयोगाददोषश्चेत्समानेयं समाहितिः ।**
**ततः प्रयाजसान्निध्यात्तत्कर्त्रैवाऽस्य संयुतिः ॥ २२ ॥**

**दर्शपूर्णमासयोः**—प्रयाजसमीपे श्रूयते—(१)"अभिक्रामं जुहोति" इति । तत्र होमकाले यदेतदाहवनीयमभितः संचरणम्, तत्कृत्स्नदर्शपूर्णमासकर्त्रा सम्बध्यते; न तु प्रयाजमात्रकर्त्रा । कुतः ? अभिक्रमणस्य क्रियारूपस्य कारकत्वाभावेन प्रयाजक्रियया सम्बन्धासम्भवादिति चेत्—

**मैवम्** ; क्रियारूपत्वादेव दर्शपूर्णमासक्रिययाऽपि सम्बन्धासम्भवात् । अथोच्येत—अभिक्रमणं कर्तृकारकेण साक्षात्सम्बध्यते, तद्द्वारा कृत्स्नदर्शपूर्णमासकर्मणा सम्बध्यत इति । तदेतत्समाधानं प्रयाजसंबन्धेऽपि समानम् । अतः सन्निधिबलात्प्रयाजकर्त्रा सम्बध्यते ॥

एतदेवाधिकरणं वार्तिककारमतेनाऽऽरचयति—

**यद्वा बलित्वं सान्निध्यादस्ति प्रकरणे ततः ।**
**दर्शादिप्रक्रियाधीतेः क्रमणे स्यात्तदङ्गता ॥ २३ ॥**
**अवान्तरप्रकरणं समिधो यजतीत्यतः ।**
**तन्मध्यपाठात्तस्याऽङ्गं तद्द्वारा दर्शशेषता ॥ २४ ॥**

अस्मिन्नपि मते तावेव विषयसंशयौ । पूर्वोत्तरपक्षहेतुमात्रमन्यत् । प्रयाजसन्निधितोऽपि दर्शपूर्णमासप्रकरणस्य प्रबलत्वात्प्राकरणिकेषु कृत्स्नेष्वप्यभिक्रमणं निविशत इति **पूर्वः पक्षः ।**

"समिधो यजती"त्यारभ्याऽऽम्नातमवान्तरप्रयाजप्रकरणम् । तन्मध्येऽभिक्रमणमाम्नातम् । तस्य चाऽभिक्रमणविधेरुभयतः प्रयाजविषयैर्वाक्यैः सन्दष्टत्वादभिक्रमणं प्रयाजमात्रे निविशत इति **राद्धान्तः** । अस्मिन्नपि पक्षे महाप्रकरणं न विरुध्यते, प्रयाजद्वारा दर्शपूर्णमासयोर्निवेशात् ॥

इति दशममभिक्रमणाधिकरणम् ॥ १० ॥

---

१. अभिक्रम्य आहवनीयसमीपं गत्वा जुहुयादित्यर्थः । अयं भावः—दर्शपूर्णमासयोः पञ्चसु प्रयाजेषु यष्टव्येषु प्रथमप्रयाजहोम आहनीयाद्दक्षिणतः कियति चन दूरे स्थित्वा कर्तव्यः। द्वितीयप्रयाजहोमस्ततोऽपि किञ्चिदभिक्रम्याऽग्निसमीपं गत्वा कर्तव्यः। एवं पञ्चस्वपि प्रयाजेषु पूर्वपूर्वप्रयाजापेक्षया उत्तरोत्तरप्रयाजार्थं किञ्चित्किञ्चिदिवाऽग्निसमीपे गन्तव्यम् । तदेतदभिक्रमणमित्युच्यते । अत एव मयूखमालिकायां सोमनाथभट्टैः—अभिक्रमणं आहवनीयसमीपगमनमित्येव व्याख्यातम् । एवञ्च सत्यत्र विस्तरे अभिक्रमणं 'यदेतदाहवनीयमभितस्सञ्चरण'मिति व्याख्यातं तत्पूर्वोक्तार्थपरतयैव नेयम् ।

## अथैकादशमुपवीताधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**उपव्ययत इत्यस्य सामिधेन्यङ्गताऽथवा ।**
**दर्शाङ्गता प्रक्रियैषाऽवन्तराऽतोऽस्त्विहाग्रिमः ॥ २५ ॥**
**लिङ्गादग्नेरङ्गभूतैर्निवित्संज्ञकमन्त्रकैः ।**
**विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः ॥ २६ ॥**

(१)दर्शपूर्णमासप्रकरणे(२) "विश्वरूपो वै त्वाष्ट्रः" इत्यस्मिन् प्रपाठके **सप्त-माष्टमयो**रनुवाकयोः सामिधेनीब्राह्मणमाम्नातम् । **नवमे**—निवित्संज्ञकानां "अग्ने महां असि ब्राह्मण भारत" इत्यादीनां मन्त्रणां ब्राह्मणम् । **दशमे**—काम्याः सामिधे-नीपक्षाः । **एकादशे** तु उपवीतमेवं विहितम्–(३)"निवीतं मनुष्याणाम्, प्राचीना-वीतं पितॄणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । तत्र पूर्वन्यायेन सामिधेनीप्रकरणस्य (४)अवान्तरस्याऽङ्गीकारात्सामिधेन्यङ्गमुपवीत मिति **चेत्**—

न; निविद्ब्राह्मणेन सामिधेनीप्रकरणस्य विच्छेदितत्वात् । न च निविदामपि सामिधेन्यङ्गतया तत्प्रकरणपाठादविच्छेदकत्वमिति वाच्यम्, लिङ्गेन निविदामग्न्यङ्गत्वा-वगमात् । आहुत्यधिकरणभूतमग्निं सम्बोध्य "महानसि" इत्यादिभिर्निविद्वाक्यैरग्नेरु-त्साहजननाय तद्गुणा आवेद्यन्ते । अत एव निर्वचनमेवं श्रूयते—(५)निविद्भिर्न्यवे-दयत्, तन्निविदां निवित्त्वम्" इति । ननु 'सम्यगिध्यतेऽग्निर्याभिर्ऋग्भिस्ताः. सामि-धेन्यः' इति व्युत्पत्त्या ता अप्यत्र ज्वलनद्वारेणाऽग्न्यर्था एवेति चेत्—सन्तु नाम'; नैतावता परस्परमङ्गाङ्गिभावः । ननु विच्छिद्यतां सामधेनीप्रकरणम्, निवित्प्रकरणेनो-पवीतस्य निविदङ्गत्वं स्यादिति चेत्—न ; पूर्वोत्तरानुवाकयोर्निविदामश्रवणेन प्रकरणा-भावात् सन्निधिना तदङ्गत्वमिति चेत्—न ; काम्यसामिधेनीभिर्व्यवधानात् । न च काम्यसामिधेन्यङ्गता शङ्कनीया, सन्निधितः प्रकरणस्य प्रबलत्वात् । तस्मादिह प्रया-जन्यायाभावान्महाप्रकरणेन दर्शपूर्णमासाङ्गमुपवीतम् ॥

इत्येकादशमुपवीताधिकरणम् ॥ ११ ॥

---

१. तैत्तिरीयसंहितायामिति पूरणीयम् ।

२. तै. सं. २. ५. १.		३. तै. सं. २. ५. ११. १.

४. 'फलभावनायाः प्रकरणं महाप्रकरणम् । तदन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणमि'ति तयोर्लक्षणमुक्तं न्यायप्रकाशे । तत्स्वरूपं च विशेषतस्तत एवा-ऽवगन्तव्यम् ।		५. तै. ब्रा. २. २. ८. ५.

## अथ द्वादशं वारणादीनां सर्वयज्ञार्थत्वाधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**वैकङ्कतादिकं पात्रं पवमानहविष्ष्वथ ।**
**यज्ञेऽखिले प्रकरणादाधानेऽन्वितमत्र तत् ॥ २७ ॥**
**अनर्थकं तदङ्गेषु हविष्ष्वेवाऽवतिष्ठते ॥**
**नाऽऽधानहविषां साम्याद्वाक्याद्यज्ञेऽखिले भवेत् ॥ २८ ॥**

**आधानप्रकरणे** दारुपात्रं होमार्थं यज्ञार्थं च श्रूयते—(१)"तस्माद्वारणो यज्ञावचरः स्यान्न त्वेतेन जुहुयात्, वैकङ्कतो यज्ञावचरः स्याज्जुहुयादेवैतेन" इति । यज्ञावचरो यज्ञप्रचारहेतुः । तत्र—वारणवैकङ्कतादिपात्रं प्रकरणबलादाधाने प्रथममन्वेति । एतेन पात्रेणाऽऽधाने प्रयोजनाभावादाधानाङ्गेषु (२)पवमानहविष्ष्वेव तत्पात्रं निविशते। अस्ति हि पवमानहविषामाधानाङ्गत्वम्, तत्प्रकरणे पाठात् । (३)"कृत्तिकास्वग्निमादधीत" इत्यस्मिन् प्रकरणे(४) "प्रजापतिर्वाचः सत्यमपश्यत्" इत्यस्मिन्ननुवाके "त्रीणि हवींषि निर्वपति" इत्यादिना तानि विहितानि । ततो यथा सप्तदशारत्नित्वं वाजपेये साक्षादसम्भवत्तदङ्गपशोरङ्गे निविशते, तद्वदिदमपीति **प्राप्ते**—

**ब्रूमः**—अग्निमुद्दिश्याऽऽधानं यथा विहितं, तथा पवमानहवींष्यपि। (५)"यदाहवनीये जुहति तेन सोऽस्याभीष्टः प्रीतः"इत्याहवनीयोद्देशेन पवमानहविर्होमविधानात् । तस्मादग्निसंस्कारत्वेन समाम्नातानामाधानहविषां नाऽस्ति परस्परमङ्गाङ्गिभावः । तथा सति प्रकरणस्य पात्रं प्रति विनियोजकत्वाभावात् "वैकङ्कतो यज्ञावचरः" इति वाक्येन दर्शपूर्णमासादि(६)सर्वयज्ञेषु तद्विनियुज्यते ॥

इति द्वादशं वारणादीनां सर्वयज्ञार्थत्वाधिकरणम् ॥ १२ ॥

---

१. (मै सं. १·६ ७.) वारणः वरणवृक्षजन्यः, वैकङ्कतः विकङ्कतवृक्षजन्य इत्यर्थः ।

२. "त्रीणि हवींषि निर्वपति—अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' (तै.ब्रा. १.१.५ १०.) इति विहितानि पवमानहवींषि

३. तै. ब्रा. १. १. २. १.      ४. तै. ब्रा. १. १. ५. १.

५. ( तै. ब्रा. १. १. १० ५. )अत्राऽऽहवनीय इति सप्तमी द्वितीयार्थे । अतश्चाऽऽहवनीयस्य कर्मत्वेनाऽन्वयः । धात्वर्थस्य करणत्वेन चाऽन्वयः । तथा च पवमानहविस्सम्बन्धिहोमैराहवनीयं संपादयेदिति वाक्यार्थः । तदेतदभिप्रेत्योक्तं–'आहवनीयोद्देशेने'ति ।

६. यद्यपि यज्ञावचरवाक्यस्य प्रकरणे विनियोगासम्भवेन ततो विच्छेदे सति अनारभ्याधीतन्यायेन प्रकृतिमात्रगामित्वं युक्तम्, तथाऽपि अत्र यज्ञशब्दोपादानात् तस्य च प्रकृतिविकृत्युभयसाधारण्येन सर्वयज्ञवाचकत्वात् सर्वार्थत्वं बोध्यम् ।

अथ त्रयोदशं वार्त्रघ्न्यधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

वार्त्रघ्न्यौ पूर्णमासे स्तो वृधन्वत्यौ तु दर्शगे ।
इति प्रधानशेषत्वमुक्तं किं वा व्यवस्थितिः ॥ २९ ॥
क्रमेण प्रापिता मन्त्राश्चत्वारोऽप्याज्यभागयोः ।
क्रमाद्वाक्यं बलीयोऽत एषां दर्शादिशेषता ॥ ३० ॥
न मुख्ये सोम एकोऽस्ति नाऽऽधारत्वादिकालयोः ।
दर्शादेरव्यवस्थित्याऽप्राप्तौ वाक्याद्व्यवस्थितिः ॥ ३१ ॥

दर्शपूर्णमासप्रकरणे श्रूयते—(१)"वार्त्रघ्नी पूर्णमासेऽनूच्येते, वृधन्वती अमावास्यायाम्" इति । तत्र—इदं वार्त्रघ्नयुगलं वृधन्वतीयुगलं च हौत्रकाण्ड आज्यभागयोः क्रमे(२) "अग्निर्वृत्राणि जङ्घनत्" इत्यनुवाकेऽऽम्नातम् । उदाहृतेन तु ब्राह्मणवाक्येन दर्शपूर्णमासयागयोस्तद्विधिरवगम्यते । तत्र वाक्यस्य प्रबलत्वादेषां मन्त्राणां दर्शपूर्णमासयागाङ्गत्वम्, न त्वाज्यभागाङ्गत्वमिति प्राप्ते—

ब्रूमः—"अग्निर्वृत्राणि जङ्घनत्" इत्याग्नेयी प्रथमा वार्त्रघ्नी,(३)"त्वं सोमासि सत्पतिः" इति सौम्या द्वितीया वार्त्रघ्नी । (४)"अग्निः प्रत्नेन जन्मना"इत्याग्नेयी प्रथमा वृधन्वती । (५)"सोम गीर्भिष्ट्वा वयम्" इति सौम्या द्वितीया वृधन्वती । तत्र मुख्ययोर्दर्शपूर्णमासयागयोराग्नेयपुरोडाशसद्भावादाग्नेयीद्वयस्य विकल्पेन पुरोनुवाक्यात्वं कथंचिद्भवतु । सौम्ययोस्तु तन्न संभवति, सोमदेवताया अभावात् । न ह्यग्नीषोमीयेऽपि केवलः सोमो विद्यते । किंच 'पूर्णमासे, अमावास्यायाम्' इति सप्तमीभ्यामाधारत्वं गम्यते । तच्च यागवाचित्वे यागस्य मुख्यत्वान्न संभवति । कालस्य तूपसर्जनत्वात्तद्वाचित्वं युक्तम् । किंच प्रयाजमन्त्रानुवाकस्याऽनन्तरमेवाऽयमनुवाकः पठितः । स चाऽऽज्यभागयोरङ्गयोः क्रमः । न तु मुख्ययोर्दर्शपूर्णमासयोः । तस्मान्न मन्त्रचतुष्टयस्य मुख्ययागाङ्गत्वम्, किं त्वाज्यभागाङ्गत्वम् । ननु एतत् क्रमेणैव लब्धम् । तत्राऽपि 'आग्नेये प्रथमाज्यभागे मन्त्रोऽप्याग्नेयः । सौम्ये द्वितीये सौम्यः' इत्येषा व्यवस्था लिङ्गेनैव लभ्यते । बाढम्; तथाऽपि 'वार्त्रघ्नीयुगलं पौर्णमासीकाले, वृधन्वतीयुगलममावास्यायाम्' इत्येषा व्यवस्था पूर्वमप्राप्ता ब्राह्मणवाक्येनाऽभिधीयत इति न वैयर्थ्यम् ॥

इति त्रयोदशं वार्त्रघ्न्यधिकरणम् ॥ १३ ॥

---

१. तै. सं. २. ५. २. ५.

२. तै. ब्रा. ३. ५. ६. अत्र समग्रा मन्त्राः पौर्णमास्यधिकरणे ९२ पृष्ठे टिप्पण्यां द्रष्टव्याः ।

३. तै. ब्रा. ३. ५. ६.

४. तै. ब्रा. ३. ५. ६.

५. तै. ब्रा. ३. ५. ६.

## अथ चतुर्दशं हस्तावनेजनाधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**हस्तौ द्वाववनेनिक्ते स्तृणात्युलपराजिकाम् ।**
**दर्भास्तरण एवाऽङ्गं हस्तशुद्धिरुताऽखिले ॥ ३२ ॥**
**तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्मकात्क्रमात् ।**
**लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता ॥ ३३ ॥**

**दर्शपूर्णमासप्रकरणे** श्रूयते–(१)"हस्ताववनेनिक्ते,(२)"उलपराजिं स्तृणाति" इति । वेद्यमास्तरितुं संपादितस्तृणस्तम्ब उलपराजिः । तत्र हस्तशुद्धिदर्भास्तरणवाक्ययोर्नैरन्तर्येण पठितत्वात्क्रमप्रमाणेन हस्तशुद्धिरास्तरणमात्रस्याऽङ्गमिति **चेत्**—

**मैवम्**; अवनेजनं हस्तसंस्कारः । 'संस्कृतौ च हस्तौ सर्वानुष्ठानयोग्यौ' इत्येतादृशं सामर्थ्यं लिङ्गम् । प्रकरणं च दर्शपूर्णमासयोः स्फुटम् । अतः प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रमबाधात्सर्वशेषो हस्तशुद्धिः ।

अयं न्यायो वाग्यमेऽपि द्रष्टव्यः । स च वाग्यमो ज्योतिष्टोमप्रकरणे श्रुतः–(३) "मुष्टीकरोति" "वाचं यच्छति" इति । तदनन्तरमेवेदं श्रुतम्—"दीक्षितमावेदयति" इति । आवेदनप्रकारश्चैवं श्रुतः—अदीक्षिष्टाऽयं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राह, त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राह" इति । अत्र मुष्टीकरणवाङ्नियमाभ्यां हस्तजिह्वागतचापले निवारिते सति मनस एकाग्रस्य सर्वकर्मसु योग्यत्वं लिङ्गम् । तेन क्रमो बाध्यते ॥

इति चतुर्दशं हस्तावनेजनाधिकरणम् ॥ १४ ॥



## अथ पञ्चदशं चतुर्धाकरणाधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**चतुर्धा कार्य आग्नेयः पुरोडाश इतीरितम् ।**
**चतुर्धाकरणं सर्वशेषो वाऽऽग्नेयमात्रगम् ॥ ३४ ॥**

---

१. तै. ब्रा. ३. २. १०.

२. उलपाः तृणविशेषाः दर्भसदृशाः । तान् वेद्यामास्तृणातीत्यर्थः ।

३. ( तै. सं. ६. १. ४. ३. ) 'मुष्टीकरोति' हस्तयोर्मुष्टिरूपेण बन्धनं कुर्यात्, 'वाचं यच्छति' वाग्बन्धनं कुर्यादित्यर्थः ।

उपलक्षणताऽऽग्नेये युक्ताऽतः सर्वशेषता ।
अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्वाग्नेयता ततः ॥ ३५ ॥
नाऽऽग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात् ।
तेनैकस्मिन् पुरोडाशे चतुर्धाकरणास्थितिः ॥ ३६ ॥

इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां
तृतीयाध्यायस्य प्रथमः पादः ॥

दर्शपूर्णमासयोः श्रूयते—"आग्नेयं चतुर्धा करोति" इति । तत्र आग्नेयवदैन्द्राग्नाग्नीषोमीययोरपि पुरोडाशयोरग्निसंवन्धादाग्नेयशब्देन पुरोडाशत्रयमुपलक्ष्यते । ततस्त्रयाणां शेष इति चेत्—

**मैवम्**; न हि 'आग्नेयः' इत्ययं तद्धितः संवन्धमात्रे विहितः, किन्तु देवतासम्बन्धे । अग्निश्च केवलो द्विदैवत्ययोः पुरोडाशयोर्न देवता । ततो देवतैकदेशेन कृत्स्नदेवतोपलक्षणत्वादाग्नेयत्वं तयोर्न मुख्यमिति मुख्य एवाऽऽग्नेये चतुर्धाकरणं व्यवतिष्ठते ॥

इति पञ्चदशं चतुर्धाकरणाधिकरणम् ॥ १५ ॥

इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

## अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

### तत्र प्रथमं लिङ्गाधिकरणम् ॥ १ ॥

( १ )द्वितीयपादे प्रथमाधिकरणमारचयति—

देवोपसदनं बर्हिर्दामिगीर्मुख्यगौणयोः ।
तल्लिङ्गमर्थयोर्मन्त्रं नियुङ्क्ते मुख्य एव वा ॥ १ ॥
शब्दार्थत्वाद्द्वयोस्तत्र युज्यते विनियोजनम् ।
प्रथमावगतत्वेन मुख्ये तद्विनियम्यते ॥ २ ॥

१. पूर्वस्मिन् पादे अङ्गत्वबोधकप्रमाणेषु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपेषु श्रुतिर्विचारिता । इदानीं द्वितीयपादे क्रमप्राप्तं द्वितीयं लिङ्गप्रमाणं विचार्यते ।

(१)"बर्हिर्देवसदनं दामी"ति लवनप्रकाशको मन्त्र आम्नातः। तत्र लवनप्रकाशनसामर्थ्यलक्षणेन लिङ्गेनाऽयं मन्त्रो लवनक्रियायां विनियुज्यते। लवितव्यं च बर्हिर्द्विविधम्–मुख्यं गौणं च। मुख्यं कुशकाशादि (२)दशविधदर्भरूपम्। गौणं तु तत्सदृशं तृणान्तरम्, तस्मिन् बर्हिश्शब्दस्य माणवकेऽग्निशब्दवद्गुणयोगेन प्रवृत्तत्वात्। तथा सति मुख्यवद्गौणस्याऽपि शब्दार्थत्वेन दर्भस्य तृणान्तरस्य च लवने मन्त्रविनियोग इति प्राप्ते––

**ब्रूमः**––मुख्यस्य शीघ्रप्रतीतत्वेन मुख्ये मन्त्रं विनियुज्य चरितार्थं लिङ्गं विलम्बप्रतीततया गौणप्रतीक्षां न करोति। तस्मात् मुख्यस्यैव लवने मन्त्रो नियम्यते।

इति प्रथमं लिङ्गाधिकरणम्॥ १॥

---

अथ द्वितीयमैन्द्र्यधिकरणम्॥ २॥

(३)द्वितीयाधिकरणमारचयति—

**ऐन्द्र्या निवेशनेत्यग्निं गार्हपत्यं भजेदिति।**
**प्रकाश्ये मुख्य इन्द्रे वा गौणे मुख्येऽस्तु पूर्ववत्॥ ३॥**
**एकस्य गौणताध्रौव्ये मन्त्रस्यैवानुवादतः।**
**गौणताऽतोऽग्न्युपस्थाने मन्त्रः श्रुत्या नियुज्यते॥ ४॥**

**अग्निचयने** (४)"निवेशनस्सङ्गमनः"इत्यादिका काचिदैन्द्री समाम्नाता। तस्या उत्तरार्धे "इन्द्रो न तस्थौ"इति पठ्यमानत्वात्। तन्मन्त्रविषयं ब्राह्मणं चैवमाम्नायते–(५)"निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते"इति। एतेन ब्राह्मणेन गार्हपत्योपस्थाने विनियुज्यमानो मन्त्रोऽर्थं प्रकाशयन्मुख्यमिन्द्रं प्रकाशयति। मुख्यश्चेन्द्रः

---

१. ( मै. सं. १. १. २. ) सीदन्ति अस्मिन्निति सदनम्, देवानां सदनं देवसदनम्। देवोपवेशनयोग्यमित्यर्थः। तद्बर्हिर्दामि लुनामीत्यर्थः।

२. 'कुशाः काशा यवा दूर्वा गोधूमाश्चाऽथ कुन्दुराः।
उशीरा व्रीहयो मुञ्जा दश दर्भाश्च बल्वजाः'॥
इति दशविधा दर्भाः (स्मृ. मु. आह्नि. का. पृ. ४३ )

३. पूर्वाधिकरणे मुख्यार्थ एव मन्त्राणां विनियोग इत्यभिधायेदानीं तदपवादः प्रतिपाद्यत इत्यापवादिकी संगतिः।

४. निवेशनस्सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्"॥ (मै.सं. २.७.११.)
इति समग्रो मन्त्रः।

५. मै. सं. ३. २. ४.

स्वर्गाधिपतिः सहस्राक्षः, तत्रेन्द्रशब्दस्य रूढत्वात् । गौणस्त्विन्द्रो गार्हपत्यः, तस्यैश्वर्य-गुणयोगेन यज्ञसाधनत्वेन वा मुख्येन्द्रसदृशत्वात्। तत्र पूर्वन्यायेन शीघ्रप्रतीत्या मुख्येन्द्रे मन्त्रेण प्रकाशिते सति मन्त्रब्राह्मणयोर्विसंवादं वारयितुं गार्हपत्यशब्देन मुख्येन्द्रो गार्हपत्यसमीपदेशो वा लक्षणीय इति प्राप्ते—

ब्रूमः—इन्द्रगार्हपत्यशब्दयोरन्यतरस्य गौणत्वेऽवश्यंभाविनि सति ब्राह्मणवाक्य-स्य विधायकत्वादप्राप्तार्थत्वेन विधौ लक्षणाया अन्याय्यत्वात्प्राप्तार्थत्वेनाऽनुवादको मन्त्र एवेन्द्रशब्देन वह्निं लक्षयिष्यति । ततो गार्हपत्यप्रकाशने समर्थमेव मन्त्रं 'ऐन्द्र्या' इति तृतीयाश्रुतिर्गार्हपत्योपस्थाने विनियुङ्क्ते ॥

इति द्वितीयमैन्द्र्यधिकरणम् ॥ २ ॥



### अथ तृतीयं हविष्कृदाह्वानाधिकरणम् ॥ ३ ॥

(१)तृतीयाधिकरणमारचयति—

**हविष्कृदेहीत्यामन्त्र्य त्रिरवघ्नन्समाह्वयेत् ।**
**विनियोगोऽवघाते स्यादाह्वाने वाऽवघातके ॥ ५ ॥**
**ऐन्द्रीवन्मान्त्रमाह्वानं गौणं हन्तिर्वृथाऽन्यथा ।**
**पाठेन प्रापितं त्रित्वं ह्वयतेरुपचारगीः ॥ ६ ॥**
**त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः ।**
**हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥ ७ ॥**
**विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता ।**
**नैन्द्रीन्यायः श्रुत्यभावाद्बर्हिर्न्यायेन मुख्यगः ॥ ८ ॥**

दर्शपूर्णमासयोः श्रूयते—"हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति" इति । देवानामर्थे या हविः सम्पादयति सा हविष्कृत् । तामेनां सम्बोध्याऽध्वर्युः 'एहि' इति ब्रूते । तथा चायं मन्त्रो ब्राह्मणेन व्याख्यायते—(२)"हविष्कृदेहीत्याह य एव देवानां हविष्कृत-स्तान् ह्वयति" इति । तमिमं मन्त्रमुच्चार्याऽध्वर्युस्त्रिवारमवघातं कुर्वन्नाह्वयतीत्यर्थः । अनेन वाक्येन मन्त्रोऽवघाते विनियुज्यते । ननु आह्वाने समर्थः, न त्ववघात इति चेत्—न; तस्याऽवघातलक्षकत्वात् । यथा पूर्वोदाहृतायामैन्द्र्यामृचीन्द्रशब्दो गौणः, तद्वत् 'एहि' इति पदं मन्त्रगतत्वेनावघाते गौणं भविष्यति । अन्यथा मन्त्रब्राह्मणयोरा-

१. पूर्वाधिकरणेनाऽस्य आपवादिकी संगतिः ।　२. तै. ब्रा. ३. २. ५. ८.

ह्वानपरत्वाच्छ्रूयमाणं 'अवघ्नन्' इति पदमनर्थकं स्यात् । प्राप्तमवघातमुद्दिश्य मन्त्रस्य त्रित्वस्य च विधौ वाक्यभेद इति चेत्—न; त्रित्वस्य प्राप्तत्वेनाऽनुवादकत्वात् । कस्यांचिच्छाखायामयं मन्त्रो मन्त्रकाण्डे त्रिवारमभ्यस्याऽऽम्नातः । आह्वयतिपदं तु 'एहि' इतिवदवघातपरतयोपचरणीयमिति **प्राप्ते**--

**ब्रूमः**—त्रिरभ्यासस्य नित्यवत्प्राप्तिः पाठमात्रेण न सिध्यति, कस्याञ्चिच्छाखायां द्विःपाठात् । कस्याञ्चित्सकृत्पाठात् । अतोऽसौ नित्यवद्विधीयते । न च 'अवघ्नन्' इत्यस्य वैयर्थ्यम्, तस्य काललक्षकत्वात् । कालस्याऽपि विधौ वाक्यभेद इति चेत्—न ; प्राप्तत्वात् । न ह्यवघाते सहायाह्वानमन्यस्मिन् काले भवति । ततोऽर्थप्राप्तः कालः । आह्वानमपि मन्त्रसामर्थ्यादिव प्राप्तत्वान्न विधेयम् । न हि 'एहि' इति मन्त्राठ आह्वानमन्तरेणोपपद्यते । मन्त्रव्याख्यानं चोदाहृतम् । तत्राऽयं वाक्यार्थः सम्पन्नः–'अवघातकाले यदाह्वानं तस्य तिरभ्यासः कर्तव्यः' इति । अत एव शाखान्तरे विस्पष्टमाह्वानानुवादेनाऽभ्यासो विधीयते–(१)"त्रिर्ह्वयति त्रिषत्या हि देवाः" इति । एवंसति मन्त्रस्याऽपि विनियोगे वाक्यभेदः स्यात् । लिङ्गेन त्वाह्वाने विनियुज्यते, नावघाते । न चैन्द्रीन्यायोऽत्र प्रसरति, तृतीयाश्रुत्यभावात् । "बर्हिर्देवसदनं दामि" इत्यत्रोक्तेन तु न्यायेन मुख्य एवाऽऽह्वाने लिङ्गेन मन्त्रविनियोगः, न त्ववघातरूपे गौणाह्वाने । तस्मात् आह्वानशेषोऽयं मन्त्रः ॥

इति तृतीयं हविष्कृदाह्वानाधिकरणम् ॥ ३ ॥

---

अथ चतुर्थं वाग्विसर्गाधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**उत्तिष्ठन् प्रवदेदग्नीदग्नीनित्यादिकं तथा ।**
**कृणुत व्रतमित्येवं पठन् वाचं विमुञ्चति ॥ ९ ॥**
**मन्त्रौ विधेयौ कालौ वा, मन्त्रावुत्थानमोकयोः ।**
**विनियोज्यौ, न कालस्य लक्षणा युज्यते विधौ ॥ १० ॥**
**मन्त्रार्थानन्वयात्तत्र ताद्विधिर्नैव शक्यते ।**
**अगत्या लक्षणाऽप्यस्तु तेन कालो विधीयते ॥ ११ ॥**

---

१. तै. ब्रा. ३. २. ५. ८.

**ज्योतिष्टोमे** समामनन्ति—(१)"उत्तिष्ठन्नन्वाहाऽग्नीदग्नीन्विहर" इति। तथा (२)"व्रतं कृणुतेति वाचं विसृजति" इति। तत्र आग्नीध्रं सम्बोध्याऽग्निविहरणादिप्रैषरूपो मन्त्रोऽनेन वाक्येनोत्थानशेषतया विनियुज्यते। तथा मुष्टिं कृत्वा नियमितवाचो दीक्षितस्य वाग्विमोके "व्रतं कृणुत" इति मन्त्रो विनियुज्यते। न चाऽत्र पूर्वोक्तावघातशब्दवदुत्थानविमोकशब्दौ काललक्षकौ, तत्कालयोरवघातकालवदर्थप्राप्त्यभावेन विधेयत्वे सति लक्षणाया अन्याय्यत्वादिति **प्राप्ते**—

**ब्रूमः**—अग्निविहरणप्रैषे पयःपानरूपव्रतसम्पादनप्रैषे चान्वितावेतौ मन्त्रौ, न तूत्थाने वाग्विमोके च। अतोऽसमर्थयोर्विनियोगासंभवादगत्या लक्षणामप्यङ्गीकृत्य कालो विधीयते।

इति चतुर्थं वाग्विसर्गाधिकरणम् ॥ ४ ॥

---

## अथ पञ्चमं सूक्तवाकाधिकरणम् ॥ ५ ॥

(३)पञ्चमाधिकरणमारचयति—

**प्रस्तरं सूक्तवाकेन प्रहरेदिति कालधीः।**
**अङ्गाङ्गिता वा स्यात्कालोऽजुषतेत्याद्यनन्वयात् ॥ १२ ॥**
**प्रहृतेरिष्टदेवार्थसंस्कारत्वात्तदन्वयः।**
**सम्पाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ॥ १३ ॥**

**दर्शपूर्णमासयोराम्नायते**--(४)"सूक्तवाकेन प्रस्तरं प्रहरति" इति।

---

१. अग्नीदग्नीन् विहर, बर्हिस्तृणाहि, पुरोडशानलङ्कुरु, प्रतिप्रस्थातः पशुनेही' त्यानुपूर्वीघटित एव मन्त्रश्शतपथब्राह्मणादौ (श.ब्रा. ४.२.४.११.) उपलभ्यते। 'उत्तिष्ठन्नन्वाह--अग्नीदग्नीन् विहरे' त्यानुपूर्वीघटितस्तु नोपलभ्यते। परन्तु आपस्तम्बश्रौतसूत्रे 'अथैकेषाम्—उत्तिष्ठन्नाहाऽग्नीदग्नीनि'ति ( आप.श्रौ. १२.१७.२० ) शाखान्तरीयत्वेनोपलभ्यते। हे अग्नीत्! आहवनीयाद्यग्नीन् प्रज्वालय, हे प्रतिप्रस्थातः अग्नीषोमीयपशुना साकमागच्छेति मन्त्रार्थः। अन्यत् स्पष्टम्।

२. तै.सं. ६.१.४. ३. पूर्वाधिकरणेनास्य प्रत्युदाहरणसङ्गतिः।

४. सूक्तवाकः तन्नामको मन्त्रविशेषः, प्रस्तरो दर्भमुष्टिविशेषः। (यः हविर्धारणार्थं वेद्यामास्तृतः) प्रहरतिना लक्षणया यागोऽत्राऽभिधीयते। एवञ्च सूक्तवाककरणप्रस्तरद्रव्यकयागेन प्रकृतयागीयदेवता अग्न्यादिकाः पूर्वमाज्यभागप्रधानयागादावुपयुक्तास्संस्कुर्यादिति वाक्यार्थः।

(१)"इदं द्यावापृथिवी भद्रमभूत्" इत्यादिको मन्त्रः सूक्तवाकः । तस्मिन्मन्त्रेऽग्निं सम्बोध्य 'त्वं सूक्तवागसि' इत्याम्नानात् । प्रस्तरो दर्भमुष्टिः । तस्य प्रहरणमग्नौ प्रक्षेपः । तत्र 'सूक्तवाकेन' इत्येतत्पदं कालं लक्षयति । होत्रा मन्त्रेऽस्मिन् पठ्यमाने तत्पाठकालेऽध्वर्युः प्रस्तरं प्रहरेत् । न त्वत्र प्रहरणे मन्त्रोऽयं विनियोक्तुं शक्यः, पूर्वोक्तप्रैषमन्त्रवदत्राऽन्वयाभावात् । "अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत" इत्यादिकं मन्त्रे पठ्यते । 'पुरोडाशसेवया वृद्धोऽग्निस्तस्मिन्यजमाने तेजोबाहुल्यं कृतवान्' इति तस्याऽर्थः । न चाऽसौ प्रस्तरप्रहरणेऽन्वेतुं शक्य इति प्राप्ते—

**ब्रूमः**—'सूक्तवाकेन' इति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते । न चाऽत्यन्तमन्वयाभावः । मन्त्रो ह्ययं पूर्वमिष्टानग्न्यादिदेवाननुस्मारयति । प्रस्तरप्रहरणं चेष्टदेवतासंस्कारः । अतो देवताद्वारा मन्त्रप्रहरणयोरन्वयान्मन्त्रो विनियुज्यते । ननु प्रहरणं नाम प्रक्षेपमात्रम् । न तु देवतोद्देशेन प्रक्षेपः, यजिधातोरश्रवणात् । तथासति देवतानामत्राऽभावात्तद्वाराऽपि नाऽन्वय इति चेत्—मैवम्; देवतानां सद्भावात् । अग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या प्रहरणाङ्गत्वं बोध्यते । यदि प्रकरणेऽग्न्यादयो देवता भवेयुः, तदा तत्प्रकाशनेन दृष्टोऽर्थो मन्त्रस्य लभ्येत, ततो देवताकल्पनेन तदुद्देशपूर्वकस्य प्रक्षेपस्य यागत्वं सिध्यति । तस्मात् देवताद्वाराऽस्त्येवाऽन्वयः ।

इति पञ्चमं सूक्तवाकाधिकरणम् ॥ ५ ॥

---

१. "इदं द्यावापृथिवी भद्रमभूत्, आर्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागस्युपश्रुती दिवस्पृथिव्योः, ओमन्वत तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम्, शङ्गयी जीरदानू, अत्रस्नू अप्रवेदे, उरू गव्यूती अभयङ्कृतौ, वृष्टिद्यावारीत्यापा, शम्भुवौ मयोभुवौ ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च, तयोराविदि अग्निरदं हविरजुषतावीवृधत महो ज्यायोऽकृत, सोम इदं हविरजुषतावि-वृधत महो ज्यायोऽकृत, अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत, अग्नीषोमाविदं हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्रातां, इन्द्राग्नी इदं हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्रातां, इन्द्र इदं हविरजुषत अवीवृधत महो ज्यायोऽकृत, महेन्द्र इदं हविरजुषत अवीवृधत महो ज्यायोऽकृत देवा आज्यपा आज्यमजुषन्तामवीवृधन्त महो ज्योयोऽकृत, अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत अस्यामृधेद्धोत्रायां देवङ्गमायां आशास्तेऽयं यजमानोऽसौ आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्ते उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाऽऽशास्ते, विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्, तदस्मै देवा रासन्ताम्, तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषाः, इष्टञ्च वित्तं च उभे च नो द्यावापृथिवी अंहसस्पातामिह गतिर्वामस्येदं च नमो देवेभ्य" इति (आश्व. सू.१.९,९.) समग्रस्सूक्तवाकमन्त्रः ।

## अथ षष्ठं सूक्तवाकस्य विभज्य विनियोगाधिकरणम् ॥ ६ ॥

(१)षष्ठाधिकरणमारचयति—

**प्रहृतेराखिलः सूक्तवाकोऽङ्गं स्याद्विभज्य वा ।**
**समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता न हि ॥ १४ ॥**
**दर्शपूर्णिमयोर्देवाननुसृत्य विभज्यताम् ।**
**आख्यां लिङ्गेन बाधित्वा भागे नाम निरुच्यते ॥ १५ ॥**

पूर्वोदाहृते मन्त्रे सूक्तवाकसमाख्या कृत्स्नमन्त्रविषया, याज्ञिकैः कृत्स्ने तच्छब्दप्रयोगात् । ततः (२)सर्वोऽपि प्रहरणाङ्गमिति चेत्—

न; लिङ्गेन समाख्याया बाधितत्वात् । तस्मिन्मन्त्रे पूर्णमासदेवताम्नानं कस्मिंश्चिद्भागे दृश्यते "अग्नीषोमाविदं हविरजुषेताम्" इति । भागान्तरे तु दर्शदेवताम्नानं "इन्द्राग्नी इदं हविरजुषेताम्" इति, "महेन्द्र इदं हविरजुषत" इति च । इन्द्राग्नीमहेन्द्राः (३)पुरुषभेदेन दर्शे व्यवस्थिताः ।

तथासति मन्त्रलिङ्गेन तत्तद्भागवत्तत्तत्काले व्यवतिष्ठते । सूक्तवाकशब्दश्च भागे यौगिकः 'सुष्ठूक्तं वक्ति' इति तद्व्युत्पत्तेः । यागकाले तत्तन्मन्त्रेण सम्यगुक्तं देवं वक्तीत्यर्थः । अत एव ब्राह्मणेन व्याख्यातम्—(४)"अग्निरिदं हविरजुषतेत्याह, या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह" इति । अरीरधामाऽऽराधितांस्तुष्टानकुर्मेत्यर्थः । तस्मादयं विभज्य विनियुज्यते ।

इति षष्ठं सूक्तवाकस्य विभज्य विनियोगाधिकरणम् ॥ ६ ॥

---

## अथ सप्तमं लिङ्गक्रमसमाख्याधिकरणम् ॥ ७ ॥

(५)सप्तमाधिकरणमारचयति—

**ऐन्द्राग्नादीष्टयः काम्या याज्या अप्युदिताः क्रमात् ।**
**काण्डयोस्ता यथालिङ्गं सञ्चार्या नियमोऽथवा ॥ १६ ॥**

---

१. पूर्वाधिकरणेनाऽस्योपजीव्योपजीवकभावसङ्गतिः ।

२. 'इदं द्यावापृथिवी' इत्यारभ्य 'नमो देवेभ्यः' इत्यन्तः मध्ये पठ्यमानप्रकृतयागानुपयुक्तदेवताबोधकभागयुक्तोऽपीत्यर्थः ।  ३. अनुष्ठातृभेदेनेत्यर्थः ।

४. तै. सं. २. ६. ९.  ५. पूर्वाधिकरणेनास्य प्रासङ्गिकी सङ्गतिः ।

**लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमूः ।**
**अकाम्यास्वपि संचार्या याज्याः सर्वत्र का क्षतिः ॥ १७ ॥**
**समाख्यानात्काण्डयोगः क्रमादिष्टिषु योजनम् ।**
**अपेक्षते देवमात्रं शक्तिः काम्यैकगास्ततः ॥ १८ ॥**

काम्येष्टयस्तत्काण्डे क्रमेणाऽऽम्नाताः—(१)"ऐन्द्राग्नमेकादशकपालं निर्वपेत्, यस्य सजाता वीयुः" इत्यादिना । सजाता ज्ञातयः । वीयुर्विगता विप्रतिपन्ना इत्यर्थः(२) । "इन्द्राग्नी रोचना" इत्यादिके मन्त्रकाण्डे याज्यानुवाक्याः क्रमेणाऽऽम्नाताः । तत्र 'इदं काम्ययाज्यानुवाक्याकाण्डम्' इति याज्ञिकानां समाख्ययाऽवगम्यते । तयोरिष्टिकाण्डमन्त्रकाण्डयोः प्रथमायामिष्टौ प्रथमपठिते याज्यानुवाक्ये इत्यादिव्यवस्था क्रमेण क्रियते । मन्त्रगतं त्वैन्द्राग्नलिङ्गं काम्यायां नित्यायाञ्चैन्द्राग्नेष्टौ ते याज्यानुवाक्ये विनियुङ्क्ते । लिङ्गं च प्रबलमिति सर्वत्र तयोर्विनियोग इति प्राप्ते--

**ब्रूमः**—नाऽत्र लिङ्गेन क्रमसमाख्ये बाधितुं शक्येते, उपजीव्यत्वात् । इन्द्राग्निदेवतास्वरूपमात्रप्रकाशनं लिङ्गम् । न च तावन्मात्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः । ततः समाख्याबलान्मन्त्रकाण्ड(३)कर्मकाण्डयोः सम्बन्धावगतौ सामान्येन मन्त्रकर्मणोः सम्बन्धोऽवगम्यते । विशेषतस्तु 'अस्मिन् प्रथमे कर्मण्ययं मन्त्रः प्रथमः' इति क्रमादवगम्यते । ननु ऐन्द्राग्नेष्टावैन्द्राग्नमन्त्रः, वैश्वानरेष्टौ वैश्वानरमन्त्र इत्येतादृशो विशेषो लिङ्गेनैवाऽवगम्यत इति चेत्—न; लिङ्गसाधारण्ये क्रमापेक्षणात् । (४)"ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवान्" इति द्वितीयेष्टिरपि । तत्रेन्द्राग्नी पठितौ । मन्त्रकाण्डेऽपि (५)"इन्द्राग्नी नवतिम्" इत्यादिकमपरमैन्द्राग्नं याज्यानुवाक्यायुगलमाम्नातम् । न हि तत्र क्रममन्तरेण निर्णेतुं शक्यम् । न च क्रमेणैव तत्सिद्धिर्लिङ्गमप्रयोजकमिति वाच्यम् । क्वचिल्लिङ्गस्यैव व्यवस्थापकत्वात् । ऐन्द्राबार्हस्पत्येष्टिरेकैवाऽऽम्नाता (६)"यं वामयेत राजन्यमनपोढो जायेत वृत्रान्घ्नंश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत्" इति । यं राजपुत्रं जायमानं प्रति राज्ञः पुरोहितस्य च काम एवं भवति 'अयं मातृगर्भे देवकृतविघ्नेन केनाऽप्यप्रतिबद्धो जायताम् । जातश्च शत्रून्मारयन्संचरेत्' इति, तद्राजपुत्रार्थेयमिष्टिः । मन्त्रकाण्डे तदिष्टिक्रमे याज्यापुरोनुवाक्ये इन्द्राबृहस्पतिदेवताके द्विविधे आम्नाते । (७)"इदं वामास्ये हविः" इत्येकं युगलम् । (८)"अस्मे इन्द्राबृहस्पती" इत्यादिकमपरम् । तयोः प्रथमयुगलस्य क्रमेण

---

१. मै.सं. २.१.१.
२. मै.सं. ४.११.१.
३. कर्मविधायककाण्डेति यावत् ।
४. मै. सं. २. १.१.
५. मै.सं. ४.११.१.
६. तै.सं.२.४.१३.
७,८. मै.सं. ४.१२.१, तै. सं ३. ३. ११. १ आनुवाकेऽपि द्रष्टव्यम् ।

विनियोगेऽपि द्वितीययुगलं लिङ्गेनैव विनियोक्तव्यम् । तस्मात् क्रमसमाख्यासहकृतेन काम्येष्टिष्वेवैता याज्या नियम्यन्ते ॥

इति सप्तमं लिङ्गक्रमसमाख्याधिकरणम् ॥ ७ ॥

---

अथाऽष्टममाग्नेय्यधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**आग्नेय्याऽऽग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः ।**
**उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत ॥ १९ ॥**
**साधारण्येन शब्दोक्तेः सर्वाभिस्तदुपस्थितिः ।**
**विशेषे विधिसंक्रान्त्या प्रकृताभिरितीष्यताम् ॥ २० ॥**

ज्योतिष्टोमे श्रूयते—(१)"आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इति । तत्र आग्नीध्र-नामकस्य मण्डपस्य यदुपस्थानं तत्, यया कयाचिद्वा (२)दाशतयीगतयाऽग्निसंब-न्धिन्या कर्तव्यम् । 'अग्निर्देवता यस्या ऋचः साऽऽग्नेयी' इति साधरणोक्तात्त्विशेष-स्याऽप्रतीतेरिति चेत्—

**मैवम्**; क्रतुप्रकरणपठितानामाग्नेयीनामृचां क्रतुप्रयुक्तव्यापारसाधनत्वं प्रकरणा-देवाऽत्रगतम् । 'कोऽसौ व्यापारः' इति विशेषबुभुत्सायां 'आग्नीध्रोपस्थानरूपोऽयम्' इति बोधयन्नयं विधिर्विशेषमात्रे संक्रामतीति लाघवम् । अप्रकृतानां क्रतूपयुक्तव्यापार-साधनत्वं तद्व्यापारविशेषश्चेत्युभयमनेन बोध्यत इति गौरवम् । तस्मात्प्रकृताभिरा-ग्नेयीभिस्तदुपस्थानम् । एवं(३) "ऐन्द्र्या सदो, वैष्णव्या हविर्धानम्" इत्यत्र सदोहविर्धाननामकयोर्मण्डपयोरुपस्थाने प्राकृतानामेवैन्द्रीणां वैष्णवीनां च प्रयोग इति द्रष्टव्यम् ॥

इत्यष्टममाग्नेय्यधिकरणम् ॥ ८ ॥

---

१. आग्नेय्या अग्निप्रकाशिकया ऋचा, आग्नीध्रं तन्नामकं मण्डपविशेषं महावेदेरुत्त-रभागे स्थितं, उपतिष्ठते अभिदध्यादित्यर्थः ।

२. दाशतयी दशमण्डलात्मको ऋग्वेदसंहिताभागः ।

३. उभयत्र उपतिष्ठते इति शेषः । तै. सं. ३. १. ६. १.

## अथ नवमं भक्षाधिकरणम् ॥ ९ ॥

### ( भक्षपेटिका )

नवमाधिकरणमारचयति—

**भक्षेहीत्यनुवाकोऽयं सर्वो भक्षणगाम्युत ।**
**ग्रहणादौ यथायोगं विभज्य व्यवतिष्ठते ॥ २१ ॥**
**अविधेर्ग्रहणादीनां भक्षणे निखिलोऽस्तु सः ।**
**अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते ॥ २२ ॥**

**ज्योतिष्टोमे** हुतस्य सोमस्य शेषभक्षणं विहितम् । अत एवाऽऽम्नातम्—(१)"अभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयन्ति" इति । तस्मिन् भक्षणे (२)ग्रहणावेक्षणनिगरणसम्यग्जरणरूपाश्चत्वारो व्यापाराः सन्ति। मन्त्रश्च (३)"भक्षेहि" इत्याद्यनुवाके समाम्नातः । तत्र भक्षणं यथा साक्षाच्चोदितं, न तथा ग्रह-

---

१. ऋत्विजः अभिषुत्य सोमरसं लतातो निष्पीड्य, आहवनीयाख्येऽग्नौ होमं कृत्वा, ततः प्रत्यङ्मुखा गच्छन्तस्सदोनामकं मण्डपमभिपद्य तत्रोपविश्य समवेताः तं हुतशेषं सोमं भक्षयेयुरित्यर्थः । ( तै. सं. ६. ३. ११. ४. )

२. ग्रहणं ग्रहचमसादेर्हस्तेनाऽऽदनम्, अवेक्षणं सोमस्य निरीक्षणम्, निगरणं कण्ठाधोदेशसम्बन्धनानुकूलो व्यापारः, सम्यग्जरणं उदरगतस्य सोमस्य जीर्णतापादनम् ।

३. ( तै. सं. ३. २. ५ ) "भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सघ्यासं, नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषं, मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे शम्भूर्मयोभूः स्वस्ति मा हरिवर्ण प्रचर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन्वि बीभिषो मा मे हार्दि त्विषा वधीः वृषणे शुष्मायाऽऽयुषे वर्चसे । वसुमद्गणस्य सोम देव ते मतिविदः प्रातस्सवनस्य गायत्रछन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि, रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयाम्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि। आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य सङ्गथे । हिन्व मे गात्रा हरिवो गणान् मे मा वितीतृषः । शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमतिगाः । अपाम सोमममृता अभूमादर्श्म ज्योतिरविदाम देवान् । किमस्मान् कृणवदरा-

णान्वेक्षणनिगरणसम्यग्जरणानि चोदितानि । न चाविहितेषु मन्त्रो विनियोगमर्हति । समाख्या तु 'भक्षानुवाकः' इत्येवंरूपा भक्षणमात्रविषया । तस्मात्कृत्स्नस्याऽप्यनुवाकस्य भक्षण एव विनियोग इति प्राप्ते—

ब्रूमः—अविहितान्यपि ग्रहणादीन्यर्थाक्षिप्तानि, तद्व्यतिरेकेण भक्षणासम्भवात् । अतस्तेष्वनुवाको यथालिङ्गं विभज्य विनियोक्तव्यः । तत्र "भक्षेहि" इत्यारभ्य "अश्विनोस्त्वा बाहुभ्यां सध्यासम्" इत्यन्तो ग्रहणं प्रकाशयति, 'एहि' इत्याह्वानस्य बाहुभ्यां स्वीकरवाणि इत्येतस्य च दर्शनात् । "नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्" इत्ययं भागोऽन्वेक्षणं प्रकाशयति, शोभनचक्षुरहं मनुष्येषु प्रख्यातं त्वामवेक्षिषीय' इत्यभिधानात् । "हिन्व मे गात्रा" इत्यादिः "मा मेऽवाङ्नाभिमतिगाः" इत्यन्तः सम्यग्जरणं प्रकाशयति, गात्रप्रीणनेनाऽधोभागे नाभ्यतिक्रमणनिषेधेन च तदवगमात् । जरणं नार्थाक्षिप्तम्, तेन विनाऽपि भक्षसिद्धेरिति चेत्—न; जरणपर्यन्तस्यैव सार्थकभक्षणत्वात् । न च जरणे पुरुषव्यापाराभावः, सम्यगुपवेशनादेर्जरणार्थत्वात् । "मन्द्राभिभूतिः" इत्यादिः "भक्षयामि" इत्यन्तो भक्षणं प्रकाशयति । तस्मात् लिङ्गेन समाख्यां बाधित्वा विनियोगः कर्तव्यः ॥

इति नवमं भक्षाधिकरणम् ॥ ९ ॥

---

### अथ दशमं मन्द्राभिभूत्यधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**मन्द्रेति वसुमद्वेति द्वयं तर्पणभक्षयोः ।**
**विभक्तव्यमुताशेषं तृप्तिसयुक्तभक्षणे ॥ २३ ॥**
**लिङ्गाद्विभागो मैवं नो तृप्तिर्भक्षणतोऽन्यतः ।**
**लिङ्गस्याऽसम्भवे वाक्यशेषात्सर्वोऽस्तु भक्षणे ॥ २४ ॥**

"मन्द्राभिभूतिः" इत्यादिः "जुषाणा सोमस्य तृप्यतु" इत्यन्तो भागो हृष्टाया

---

तिः किमु धूर्तिरमृत मर्त्यस्य । यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। ............देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्यप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि" इति समग्रो भक्षमन्त्रः ।

अरुचिमभिभवन्त्याः सोमं सेवमानाया जिह्वायास्तृप्तिं प्रकाशयति । "वसुमद्गणस्य" इत्यादिः "भक्षयामि" इत्यन्तो भागो भक्षणप्रकाशकः । तत्र पूर्ववल्लिङ्गेन विभज्य विनियोग इति चेत्—

**मैवम्**; न खलु तृप्तिर्भक्षणादन्येन व्यापारेण जायते। किं तर्हि? भक्षणानुनिष्पादिनी हि सा । तथासति कस्मिन्व्यापारे तृप्तिप्रकाशको भागो विनियुज्येत । ततो लिङ्गेन विनियोगासंभवाद्भक्षणवाक्यस्य शेषस्तृप्तिप्रकाशकभागो भविष्यति । उपयुक्तश्च तत्राऽयं भागः । तृप्तिसहितभक्षणप्रकाशनेन पुरुषोत्साहजननात् । तस्मान्मन्द्रादिः सर्वो भक्षणे विनियुज्यते ॥

इति दशमं मन्द्राभिभूत्यधिकरणम् ॥ १० ॥

---

## अथैकादशमिन्द्रपीताधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके ।**
**केवलेऽन्यत्र वोहाच्च सर्वत्रोत यथाश्रुतम् ॥ २५ ॥**
**ऐन्द्र एव समर्थत्वात्तूष्णीमेवाऽन्यभक्षणम् ।**
**ऊहो वाऽन्येषु कर्मैक्येऽप्यस्त्यूहो भक्षभेदतः ॥२६ ॥**
**इन्द्रेण यस्मिन्सवने सोमः पीत इतीरणात् ।**
**सवनस्थेषु सर्वेषु मन्त्रोऽनूहेन पठ्यताम् ॥ २७ ॥**

भक्षमन्त्रे कश्चिदंशः " इन्द्रपीतस्य" इत्येवंविधः श्रूयते । तत्र 'इन्द्रेण पीतस्य सोमस्य शेषं भक्षयामि' इत्यर्थो भवति । तथा सत्यस्य मन्त्रस्यैन्द्रप्रदानशेषभक्षण एव समर्थत्वात्तत्रैवाऽयं मन्त्रो विनियुज्यते, न तु मैत्रावरुणादिशेषभक्षणे। तस्मादमन्त्रकमेव तद्भक्षणमित्येकः **पूर्वपक्षः** ।

'इन्द्रपीतस्य' इति पदस्याऽसमर्थत्वेऽपि 'मित्रावरुणपीतस्य' इत्येवमूहे सति सामर्थ्यं भविष्यति । ननु आग्नेययागस्य प्रकृतित्वात्तद्गतस्य (१)"अग्नये जुष्टम्" इति मन्त्रस्य विकृतौ सौर्ये चरौ "सूर्याय जुष्टम्" इत्येवमूहः क्रियते । इह तु कर्मैक्यान्नोहः इति चेत्— न ; कर्मभेद इव भक्षभेदेऽप्यूहितुं शक्यत्वात् इति द्वितीयः **पूर्वपक्षः** ।

---

१. तै. सं. १. १. ४.

"इन्द्रपीतस्य" इत्यत्र बहुव्रीहिर्द्रष्टव्यः । तत्पुरुषत्वे (१)"समासस्य" इति सूत्रेणान्तोदात्तत्वप्रसङ्गात् । आद्युदात्तं ह्येतत्पदमाम्नातम् । इन्द्रप्रातिपदिकं तु स्वत आद्युदात्तम् । तथा सति (२)"बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति सूत्रेण पूर्वपदप्रकृतिस्वरविधानात्समस्तपदमप्याद्युदात्तमेव संपद्यते। 'इन्द्रेण पीतः सोमो यस्मिन् सवने' इति विग्रहात्सवनपरत्वे सति 'ऐन्द्रभक्षण एव' इति नियन्तुमसमर्थत्वात्सर्वभक्षणेष्वनूहेनैवाऽयं मन्त्रः प्रयोक्तव्य इति **राद्धान्तः** ॥

इत्येकादशमिन्द्रपीताधिकरणम् ॥ ११ ॥

---

## (३)अथ द्वादशं पुनरभ्युन्नीताधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**ऊहपक्षे यदूह्यं तच्चिन्त्यते न्यायपञ्चके ।**
**इन्द्रे हुतेऽथ तच्छेषे होत्रकैश्चमसस्थिते ॥ २८ ॥**
**सोमोऽभ्युन्नीय देवेभ्यो हुत्वा संभक्ष्यते तदा ।**
**इन्द्रो न लक्ष्यो लक्ष्यो वा, न शेषेऽन्यार्थता यतः ॥ २९ ॥**
**उन्नीत एव सम्बद्धो न पूर्वो देवतान्तरैः ।**
**अत इन्द्रस्य सिद्ध्यर्थं लक्ष्योऽसावितरैस्सह ॥ ३० ॥**

**पूर्वाधिकरणे** योऽयमूहरूपो द्वितीयः पूर्वपक्षः, तत्प्रसङ्गात्क्त्वाचिन्तारूपेण न्यायपञ्चकेनोहविषयश्चिन्त्यते । (४)मैत्रावरुणब्राह्मणाच्छंसिपोत्रादय ऋत्विजो होत्रकाः । तेषां च सन्ति चमसाः । पात्रविशेषस्थिताः सोमरसाश्चमसाः । तैर्वषट्कारानुवषट्कारयोर्होतव्यम् । चमसानामैन्द्रत्वाद्धोतुर्वषट्कारे प्रथममिन्द्रो हुतः, अनन्तरं चमसस्थिते हुतशेषे पुनः सोमान्तरमभ्युन्नीय देवतान्तरेभ्यो होत्रका अनुवषट्कारे जुह्वति । तत्र मैत्रावरुणः (५)"मित्रं वयं हवामहे" इति मन्त्रेण मित्रावरुणौ यजति। ब्राह्मणाच्छंसी(६) "इन्द्र त्वा वृषभं वयम्" इति मन्त्रेणेन्द्रं यजति। पोता (७)"मरुतो यस्य हि क्षये" इति मन्त्रेण मरुतो यजति । एवं हुत्वा पश्चात्सोमो भक्ष्यते । तस्मिन् भक्षणे 'मित्रावरुणपीतस्य' इति मन्त्र ऊहनीयः । तदानीं 'इन्द्रमित्रावरुणपीतस्य' इत्येवं

---

१. पा. सू. ६.१.२२३. २. पा. सू. ६. २. १.

३. अत्राऽन्तरागर्भिणीत्वेन पञ्चाऽधिकरणानि । तत्र प्रथमाधिकरणमिदम् ।

४. अत्राऽऽदिपदेन नेष्टृच्छावाकाग्नीध्रा ग्राह्याः । ५. ऋ. सं. १. २. ८.

६. ऋ. सं. ३.३.१ ७. ऋ. सं. १.६.११.

मित्रावरुणाभ्यां सह नेन्द्र उपलक्षणीयः। कुतः? इन्द्रशेषे (१)पुनरभ्युन्नीतस्य तेन सह मित्रावरुणाद्यर्थत्वे सति तस्य शेषस्येन्द्रसम्बन्धराहित्यात्। पुनरुन्नीतस्यैवाऽन्यार्थत्वम्, न पूर्वस्य इति चेत्--न; उन्नयनकाले 'मित्रावरुणाद्यर्थोऽयम्' इति सङ्कल्पाभावात्। प्रदानकाले तु पूर्वशेषेण सहैव मित्रावरुणादिभ्यः प्रदीयते। तस्मात् इन्द्रसम्बन्धराहित्यान्नेन्द्रो लक्षणीय इति प्राप्ते—

ब्रूमः--मा भूत्सङ्कल्पः, तथाऽप्युन्नयनं करिष्यमाणं मैत्रावरुणादियागार्थमेव। न तु तस्य पूर्वानुष्ठितेन्द्रयागार्थत्वं सम्भवति। तस्मादुन्नीता मित्रावरुणादिसंबद्धशेष इन्द्रसम्बद्ध एवेत्युभयभक्षणे मित्रावरुणादिभिस्सहेन्द्रोऽप्युपलक्षणीयः(२)॥

इति द्वादशं पुनरभ्युन्नीताधिकरणम् ॥ १२ ॥

---

अथ त्रयोदशं पात्नीवताधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

**द्विदेवशेष आदित्यस्थाल्या आग्रयणाभिधाम्।**
**स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति ॥ ३१ ॥**
**तद्भक्षणे द्विदेवाः किं सार्धं पात्नीवतेन ते।**
**उपलक्ष्या न वा, पूर्वन्यायेनाऽस्तूपलक्षणम् ॥ ३२ ॥**
**अन्य आग्रयणात्पात्नीवतो नैतस्य विद्यते।**
**आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते ॥ ३३ ॥**

(३)ऐन्द्रवायवादयो द्विदेवत्याः। तेषां शेष आदित्यस्थालीमागच्छति, पुनरपि तस्याः स्थाल्या आग्रयणस्थालीमागच्छति। तस्या आग्रयणस्थाल्याः (४)पात्नीवतो गृह्यते। तस्य पात्नीवतस्य भक्षण इन्द्रवाय्वादय उपलक्षणीयाः। पूर्वाधिकरणे यथा मित्रावरुणादिभिः सहेन्द्र उपलक्षितः, तद्वदिति प्राप्ते—

ब्रूमः—(५)"यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति" इत्याग्रयणपात्रस्या-

---

१. उन्नयनमत्र ग्रहणम्।

२. एवञ्च मन्त्रे 'इन्द्रपीतस्ये'ति स्थाने इन्द्रमित्रावरुणपीतस्येत्यूहः कर्तव्य इति भावः।

३. ऐन्द्रवायवमैत्रावरुणाश्विना द्विदेवत्याः। ४. पात्नीवतः पत्नीवद्देवताको ग्रहः।

५. यस्मिन् पात्रे उपांशुसंज्ञको ग्रहो गृहीतः, तदुपांशुपात्रम्। तेन पात्रेण आग्रयणस्थालीतः पत्नीवद्देवतायै ग्रहं गृह्णीयादित्यर्थः। तै. सं. ६. ५ ७. १.

पादानत्वश्रवणात्ततो निस्सृतसोमरसस्य तत्सम्बन्धेऽपेते सति पश्चात्पत्नीवद्देवतायै ग्रहणं भवति । तथा सत्यत्यन्तभिन्नस्य पात्नीवतस्य पूर्वदेवेष्वाकाङ्क्षा नाऽस्ति । पुनरभ्युन्नीतस्तु सोम ऐन्द्रशेषेण संसृष्टः । तस्य संसृष्टस्य भक्षणे मित्रावरुणादीनामिवेन्द्रस्याऽपि सम्बन्धो नाऽपैतीति वैषम्यम् । तस्मात्पात्नीवतभक्षण इन्द्रवाय्वादयो नोपलक्षणीयाः ॥

इति त्रयोदशं पात्नीवताधिकरणम् ॥ १३ ॥

---

अथ चतुर्दशं त्वष्ट्रधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**सह पत्नीवता त्वष्टा तद्ग्रहे लक्ष्यते न वा ।**
**सह त्वष्ट्रा पिबेत्युक्तेर्दैवत्वात्सोऽपि लक्ष्यते ॥ ३४ ॥**
**सहत्वमात्रं त्वष्टुः स्यान्न पातृत्वमशब्दनात् ।**
**चोदनाया अभावाच्च न देवोऽतो न लक्ष्यते ॥ ३५ ॥**

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रे पत्नीवता सह त्वष्टाऽप्युपलक्षणीयः । कुतः? त्वष्टुरपि तद्देवत्वात् । तच्च होममन्त्रादवगतम् । (१)"अग्ना३इ पत्नीवा ३ स्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इत्यस्मिन्मन्त्रे पत्नीवन्तमग्निं प्लुतान्तेन सम्बोध्य 'त्वष्ट्रा देवेन सह पिब' इत्यभिधानात्पातृत्वेन पत्नीवत इव त्वष्टुस्तद्देवत्वम् । ततः 'पत्नीवत्त्वष्टृपीतस्य' इत्युपलक्षणमिति **प्राप्ते**—

**ब्रूमः**;—पानकाले सहाऽवस्थानमात्रं त्वष्टुः 'सजूः' इत्यनेन पदेन प्रतीयते । न तु पातृत्वम्, असम्बोधितस्य त्वष्टुः 'पिब' इत्यनेन शब्देन सामानाधिकरण्याभावात् । न च पातृसहभावमात्रेण पातृत्वम्;

। 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'

इत्यत्र पुत्राणां वोढृत्वादर्शनात् । आस्तां मन्त्रः, विधिवलात्त्वष्टुर्दैवत्वमिति चेत्—न; "पात्नीवतमाग्रयणाद्गृह्णाति" इत्यत्र त्वष्टुरप्रतीतेः । तस्मात् अदेवत्वात्त्वष्टा नोपलक्षणीयः ॥

इति चतुर्दशं त्वष्ट्रधिकरणम् ॥१४ ॥

---

१. ( तै. सं. १. ४. २७. ) हे पत्नीवन् अग्ने त्वष्टृसंज्ञकेन देवेन सह सोमं पिबेत्यर्थः ।

अथ पञ्चदशं त्रिंशदधिकरणम् ॥ १५॥

पञ्चदशाधिकरणमारचयति—

**पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयेत्यमी ।**
**लक्ष्या न वा, याज्ययोक्तेर्दैवत्वादुपलक्षणम् ॥ ३६ ॥**
**एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना ।**
**अतोऽग्नेरेव देवत्वान्नाऽन्येषामुपलक्षणम् ॥ ३७ ॥**

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं सम्बोध्य 'पत्नीवन्नामधारिणस्त्रयस्त्रिंशद्देवान्मादाय' इत्यभिधीयते—"पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व" इति । अनुष्वधमनुप्रदानम् । अत्र हूयमानेन सोमरसेन मादनीयत्वात्त्रयस्त्रिंशतां तद्देवत्वम् । अतस्तेऽपि भक्षणे लक्षणीया इति चेत्—

न; यजमानेन मादनीयस्याऽग्नेरेव तद्देवत्वात् । त्रयस्त्रिंशद्देवास्तु वह्निना माद्यन्त इति न तेषामत्र देवत्वम् । तस्मान्नोपलक्षणम् ॥

इति पञ्चदशं त्रिंशदधिकरणम् ॥ १५ ॥



अथ षोडशमनुवषट्काराधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**सोमस्याग्न इति प्रोक्ताऽनुवषट्कारदेवता ।**
**लक्ष्या न वा, देवतात्वाल्लक्ष्या त्रिंशद्विलक्षणा ॥ ३८ ॥**
**प्रकृतौ विद्यमानोऽग्निरनुद्देशादलक्षितः ।**
**उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तथा ॥ ३९ ॥**

(१)"सोमस्याग्ने वीहीत्यनुयजति" इति श्रूयते । तत्र अनुवषट्कारस्य मान्त्रवर्णिकोऽग्निर्देवता । न च त्रयस्त्रिंशतामिव वह्नेरदेवतात्वम्, मन्त्रे वह्निं सम्बोध्य सोमपातृत्वाभिधानात् । तस्मादग्निर्लक्षणीय इति चेत्—

न; प्रकृतावलक्षितत्वात् । ऐन्द्रश्चमसः प्रकृतिः, इतरे विकृतिरूपाः । तथा हि—ऐन्द्रश्च सोमो गृह्यते मीयते च । तेनैन्द्रेष्वेव सोमः, अनैन्द्रेषु सोम एव नाऽस्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव । अनैन्द्रा अधर्मकाः । धर्मसाकाङ्क्षाश्चोदकेन सधर्मका इति विकृ-

१. हे अग्ने सोमस्य सोमं (द्वितीयाऽर्थे षष्ठी) वीहि प्राप्नुहीत्यर्थः ।

तित्वम् । गृह्यमाणस्य मीयमानस्य च सोमस्यैन्द्रत्वम् (१)"इन्द्राय त्वा वसुमते" इत्यादिग्रहणमन्त्रादवगम्यते । तस्य प्रकृतिभूतस्यैन्द्रचमसस्य भक्षणेऽग्निरनुवषट्कार-देवो नोपलक्षितः । कुतः ? ग्रहणे तदुद्देशाभावात् । इन्द्रस्तूद्देश्यत्वादुपलक्षितः । एवं विकृतावप्युद्देश्यदेवानामेवोपलक्षणं न्याय्यम् । तस्मात् अग्निर्नोपलक्ष्यः ॥

इति षोडशमनुवषट्काराधिकरणम् ॥ १६ ॥



### अथ सप्तदशमनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥ १७ ॥

सप्तदशाधिकरणमारचयति—

**अमन्त्रपक्षमाश्रित्य कृत्वाचिन्तान्तरत्रयम् ।**
**ऊहोऽस्ति नो वा, सोऽस्त्यत्र विकृतौ तस्य सम्भवात् ॥ ४० ॥**
**सोमेनेति विधेः सर्वप्रदानेषु समत्वतः ।**
**अविकारेऽप्यनूहोऽतो नैन्द्रे निर्मन्त्रभक्षणम् ॥ ४१ ॥**

उक्ताभ्यः पञ्चभ्यः(२) कृत्वाचिन्ताभ्यः पूर्वस्मिन्नेवाऽधिकरणे योऽयं 'अनैन्द्रे-ष्वमन्त्रकं भक्षणम्' इत्येवंरूपः प्रथमः पूर्वपक्षः, तमेव मनसि निधाय पुनः कृत्वाचिन्तानां त्रयमभिधीयते—अनैन्द्रेषूक्तरीत्या विकृतित्वेनोहसम्भवादस्त्यूह इति चेत्—

न; अनैन्द्राणां विकृतित्वासम्भवात् । "सोमेन यजेत" इत्युत्पत्तिश्रुतः सोमः कर्मणोऽङ्गम् । न तु प्रदानविशेषस्य कस्यचिदङ्गम् । स एव सोमः सर्वप्रदानेष्वभ्यस्यत इति सर्वाणि समप्रधानानि । अत ऐन्द्राणामनैन्द्राणां च प्रकृतिविकृतिभावासम्भवान्नाऽस्त्यत्रोहः । "इन्द्राय त्वा वसुमते" इत्यादिमन्त्रो लिङ्गादैन्द्रविषयोऽस्तु । नैतावता प्रकृतिविकृतिभावः सिध्यति । तस्मादुक्तमन्त्रस्य लिङ्गादैन्द्रविषयत्वादनैन्द्रेष्वमन्त्रकं भक्षणम् ॥

इति सप्तदशमनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥ १७ ॥



---

१. सोमं गृह्णामीति मन्त्रशेषः ।

२. कृत्वा अभ्युपेत्य चिन्ता विचार इत्यर्थः । यत्र विषयस्याऽनेवंविधत्वेऽपि एवं विध इत्यभ्युपेत्य विचारः क्रियते स विचारः कृत्वाचिन्तेत्युच्यते ।

अथाऽष्टादशमैन्द्राग्नभक्षणे मन्त्राभावाधिकरणम् ॥ १८ ॥

अष्टादशाधिकरणमारचयति—

समन्त्रकममन्त्रं वा स्यादैन्द्राग्नादिभक्षणम् ।
ऐन्द्राग्नेऽपीन्द्रपीतत्वसम्भवात्तत्समन्त्रकम् ॥ ४२ ॥
न पानमशरीरस्य युक्तं दानं तु मिश्रगम् ।
मन्त्रोऽयं तु न मिश्रार्हस्तस्मादेतदमन्त्रकम् ॥ ४३ ॥

यदेतत् "ऐन्द्राग्नं गृह्णाति" इति विहितं शेषभक्षणम्, तत्र इन्द्राग्निभ्यां पीतः सोम इन्द्रेणाऽपि पीतो भवति इति लिङ्गेनैव विनियोगात्समन्त्रकं भक्षणम् इति चेत्—

मैवम्; नवमाध्याये (१)वक्ष्यमाणदेवताधिकरणन्यायेनाऽशरीरस्येन्द्रस्य पानासम्भवात् । अथ पीतशब्देन दानं विवक्ष्येत, तदानीं 'इन्द्राय दत्तः सोमः' इति मन्त्रार्थो भवति । न चाऽत्र यजमान इन्द्रमुद्दिश्य ददौ, किंत्विन्द्राग्नी उद्दिश्य । तस्मात् दानं मिश्रविषयम्, मन्त्रस्तु न मिश्रविषयः इत्यमन्त्रकं भक्षणम् ।

इत्यष्टादशमैन्द्राग्नभक्षणे मन्त्राभावाधिकरणम् ॥ १८ ॥



अथैकोनविंशं भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि विनियोगाधिकरणम् १९

एकोनविंशाधिकरणमारचयति—

ऐन्द्रदानेऽपि गायत्रमात्रयुक्तेऽथवेतरैः ।
छन्दोभिरपि युक्ते स्यादाद्यो मन्त्रे तथोक्तितः ॥ ४४ ॥
द्वयोः समो बहुव्रीहिरेकच्छन्दास्तु न क्वचित् ।
नानाच्छन्दस्यैन्द्र एव कृत्वाचिन्तेयमीरिता ॥ ४५ ॥
सवनार्थेन्द्रपीतोक्तिरित्युद्घाटनमीरितम् ।
तेन सर्वप्रदानेषु मन्त्रपाठो यथा स्थितः ॥ ४६ ॥

इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां
तृतीयाध्यायस्य द्वितीयः पादः ॥

१. पू.मी. ९.१.४.

तस्मिन्नेव भक्षमन्त्रे "गायत्रच्छन्दस इन्द्रपीतस्य" इति श्रूयते । 'गायत्रमेव छन्दो यस्य' इति मन्त्रपदे समासाभिधानादेकच्छन्दोयुक्त ऐन्द्रे सोमे भक्षमन्त्रः **इति चेत्—**

**मैवम्**; बहुच्छन्दोयुक्तेऽपि बहुव्रीहेः समानत्वात् । एवकारं परित्यज्य 'गायत्रं छन्दो यस्य' इति विग्रहसंभवात् । एकच्छन्दस्कस्तु सोमो न काऽप्यस्ति । तस्मान्नानाच्छन्दस्के सोम ऐन्द्रप्रदान एव मन्त्रः, नाऽन्यत्र । तदेवं क्त्वाचिन्तात्रयं समाप्तम् । द्विविधक्त्वाचिन्तोद्घाटना तु प्रागेव सिद्धान्तिना दर्शिता ॥

इत्येकोनविंशं भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि
विनियोगाधिकरणम् ॥ १९ ॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे**
**तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥**



## अथ तृतीयाध्यायस्य तृतीयः पादः ॥

### तत्र प्रथममुपक्रमाधिकरणम् ॥१॥

तृतीयपादे प्रथमाधिकरणमारचयति—

**कर्तव्यमुच्चैः सामग्भ्यामुपांशु यजुषेत्यमी ।**
**मन्त्राणां वाऽथ वेदानां धर्माः, मन्त्रगता यतः ॥ १ ॥**
**विध्युद्देशे मन्त्रवाचिशब्दाः प्रोक्ता ऋगादयः ।**
**ऋग्वेदोऽग्नेः समुत्पन्न इत्युपक्रमवेदगीः ॥ २ ॥**
**असंजातविरोधोऽतस्तद्वशादुपसंहृतेः ।**
**नयने सति वाक्येन धर्माणां वेदगामिता ॥ ३ ॥**

**ज्योतिष्टोमे श्रूयते—**(१)"उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना" इति । तत्र विधिवाक्ये मन्त्रवाचिनामृगादिशब्दानां प्रयोगान्मन्त्रधर्मा उच्चैस्त्वादयः । तथासति यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अप्यृच उच्चैरेव पठितव्या **इति चेत्—**

**मैवम्**; असंजातविरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेनोपसंहारस्य नेतव्य-

---

१. ऐ. ब्रा. ५. ५. ६.

त्वात् । उपक्रमे हि वेदशब्दः श्रुतः—"त्रयो वेदा असृज्यन्त । अग्नेर्ऋग्वेदः । वायोर्यजुर्वेदः । आदित्यात्सामवेदः" इति । अत उपक्रमगतवेदानुसारेण विध्युद्देशगतानामप्यृगादिशब्दानां वेदपरत्वे सत्यृचोऽपि यजुर्वेदोत्पन्ना उपांशु पठनीयाः । ननु उपक्रमोऽत्राऽर्थवादत्वाद्दुर्बलः, उपसंहारो विध्युद्देशत्वात्प्रबल इति चेत्—बाढम्; लब्धात्मनो हि विध्युद्देशस्य प्राबल्यम् । इह तु प्रथमतो बुद्ध्युत्पादक उपक्रमः । तदानीमलब्धात्मत्वान्न तस्य बाधकत्वम् । पश्चात्तु वाक्यैकत्वाय तदविरोधेनैवाऽऽत्मानं लप्स्यते । तदेवमुपक्रमोपसंहारैकवाक्यताबलेन निर्णयाद्वाक्यविनियोगोऽयम् ॥

इति प्रथममुपक्रमाधिकरणम् ॥ १ ॥

---

## अथ द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ॥ २ ॥

द्वितीयाधिकरणमारचयति—

**यजुर्वेदस्थमाधानं तदङ्गं साम तत्र किम् ।**
**उच्चैरुपांशु वा गानमुच्चैः शीघ्रप्रतीतितः ॥ ४ ॥**
**उत्पत्तेर्विनियोगोऽत्र प्रबलोऽनुसृतिर्यतः ।**
**मुख्यस्याऽङ्गेन कर्तव्या तस्माद्गान उपांशुता ॥ ५ ॥**
**आधानस्याऽत्र मुख्यत्वं गानस्य गुणताऽथवा ।**
**विनियोगस्य मुख्यत्वमुत्पत्तेर्गुणताऽस्त्विह ॥ ६ ॥**

**आधाने** वामदेव्यादिसामान्यङ्गत्वेन विहितानि । तत्र यद्यप्येतानि यजुर्वेदगतस्याऽऽधानस्याऽङ्गानि, तथाऽपि सामवेदे तेषामुत्पन्नत्वात्, उत्पत्तेश्च शीघ्रबुद्धिहेतुत्वात्सामवेदधर्मेण गेयानि **इति चेत्—**

**न;** विनियोगस्य प्रबलत्वात् । स च यजुर्वेदे श्रुतः-(१)"य एवं विद्वान्वामदेव्यं गायति" इति । गुणेन हि मुख्यस्याऽनुसरणं न्याय्यम् । को गुणः, किं मुख्यम् ? इति चेत्—अत्राऽङ्गित्वादाधानं मुख्यम्, सामगानमङ्गत्वेन गुणः। तथा सति(२)"घर्मः शिर" इत्यादय आधानाङ्गभूता मन्त्रा यथोपांशु पठ्यन्ते, तथा सामान्यप्यधानानुसारेणोपांशु गेयानि । अथवा विनियोगोऽनुष्ठापकविधित्वान्मुख्यः, उत्पत्तिविधिस्तथाविधत्वाद्गुणः । तस्मात् अत्र विनियोगवेदानुसारेणोपांशु गेयानि ॥

इति द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ॥ २ ॥

---

१. मै. सं. १. ६. ७. २. तै. ब्रा. १. १. ७. १.

## अथ तृतीयं ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम् ॥ ३ ॥

तृतीयाधिकरणमारचयति—

ज्योतिष्टोमो यजुस्सामवेदयोरस्ति तत्र किम् ।
उच्चैस्त्वमुत नीचैस्त्वं हेत्वभावादनिर्णयः ॥ ७ ॥
यजुष्यधिगते द्रव्यदेवते तत्र तद्विधिः ।
तद्वशात्स्वरनिर्णीतेरुपांशु स्यादनुष्ठितिः ॥ ८ ॥

"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येतद्वाक्यं वेदद्वये समाम्नातम् । तत्र को विधिः ? कश्च गुणविधानायाऽनुवादः ? इति जिज्ञासायां नियामकहेतोरप्रतिभानात् 'एतस्य वेदस्य धर्मोऽनुष्ठेयः' इत्यनिर्णय इति चेत्—

न; सोमद्रव्यस्य, इन्द्रवाय्वादिदेवतायाश्च यजुर्वेदाधिगतत्वादङ्गबाहुल्यश्रवणाच्च तत्रैव विधिरिति उपांशुप्रयोगः ॥

इति तृतीयं ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम् ॥ ३ ॥

---

## अथ चतुर्थं प्रकरणाधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

न क्रत्वङ्गं प्रयाजादि क्रत्वङ्गं वा, न चाऽङ्गता ।
प्रक्रियाया अमानत्वान्नैराकाङ्क्ष्येण वाक्ययोः ॥ ९ ॥
प्रयाजादेः फलेऽपेक्षा कथंभावेऽपि च क्रतोः ।
तेन प्रकरणाम्नानं तस्मादङ्गाङ्गिता तयोः ॥ १० ॥

सार्धपादद्वये विनियोजकत्वेनोक्तानि यानि श्रुतिलिङ्गवाक्यानि, तेभ्योऽतिरिक्तं प्रकरणनामकं किंचित्प्रमाणं न वेदे पश्यामः । न हि पदतत्सामर्थ्यान्वयैरसंसृष्टः कश्चिद्वेद-भागः केनचिदाम्नायते । एकवाक्यतामापन्नो वाक्यसमूहः प्रकरणमिति चेत्—न ; वाक्ययोः सतोः पश्चादेकवाक्यताया अभावात् । न हि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "समिधो यजति" इत्यनयोर्वाक्ययोः परस्पराकाङ्क्षाऽस्ति, येन वाक्यैकवाक्यता कल्प्येत । तस्मात् न प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् **इति प्राप्ते—**

**ब्रूमः—**प्रयाजादयः फलहेतवः, पुरुषप्रवृत्तिरूपत्वात्, सेवादिवत् । दर्शपूर्णमासावुपकरणैरुपकार्यौ, करणत्वात्, प्रदीपोपकृतचक्षुर्वत् । तथासति किं प्रयाजादेः फलम् ?

किं वा दर्शपूर्णमासयोरुपकरणम् ? इत्याकाङ्क्षायां सम्पन्नं वाक्यैकवाक्यतारूपं प्रकरणम्। तेन च प्रयाजादीनामङ्गत्वं प्रतीयते।

इति चतुर्थं प्रकरणाधिकरणम् ॥ ४ ॥

## अथ पञ्चमं क्रमाधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

दब्धिर्नामेति मन्त्रोऽङ्गमुपांशुयजतेर्न वा।
साधारणत्वाल्लिङ्गादेर्मानाभावादनङ्गता ॥ ११ ॥
मन्त्राणां कर्मणां चाऽत्र क्रमेणाऽऽम्नानमीक्ष्यते।
प्रक्रियावत्क्रमो मानं यथासंख्यं ततोऽङ्गता ॥ १२ ॥
क्रमः समानदेशत्वं पाठादर्थाच्च पाठतः।
यथासंख्यं संनिधिश्च यथासंख्यमुदाहृतम् ॥ १३ ॥
शुन्धध्वमिति सान्नाय्यपात्राङ्गं संनिधेर्मतम्।
पशुधर्मोऽर्थसादेश्यादग्नीषोमीयतो भवेत् ॥ १४ ॥

दर्शपूर्णमासयो (१)याजमाने मन्त्रकाण्डे कश्चिन्मन्त्र आम्नायते-(२)"दब्धिरस्यदब्धो भूयासम्, अमुं दभेयमिति। अस्य मन्त्रस्योपांशुयाजाङ्गतायां श्रुतिवाक्ये न विद्येते। ब्राह्मणे विनियोगमनाम्नायाऽर्थविवरणस्यैवाऽऽम्नानात्। (३)"एतया वै दब्ध्या देवा असुरानदभ्नुवन्। तयैव भ्रातृव्यं दभ्नोति" इति ब्राह्मणम्। दब्धिर्घातुकमायुधम्। आग्नेयाग्नीषोमीययोरप्यनिष्टनिवारकत्वाल्लिङ्गं साधारणम्। प्रकरणं च त्रयाणामेकमेव। ततो मानाभावादयं मन्त्रो नोपांशुयाजाङ्गमिति प्राप्ते—

ब्रूमः—आध्वर्यवे काण्डे आग्नेयोपांशुयाजाग्नीषोमीयकर्माणि क्रमेणाऽऽम्नातानि। याजमाने च काण्डे तद्विषया मन्त्राः क्रमेणाऽऽम्नाताः—(४)"अग्नेरहं देवयज्ययाऽन्नादो भूयासम्" "दब्धिरस्यदब्धो भूयासममुं दभेयम्"(५)"अग्नीषोम

---

१. यजमानेन पठितव्यानां मन्त्राणामनुष्ठेयानां च कर्मणां यत्र पाठः तद्याजमानं काण्डमित्युच्यते। यत्राऽध्वर्युणा कर्तव्यानि कर्माणि, पठनीयाश्च मन्त्राः पठिताः तदाध्वर्यवं काण्डमित्युच्यते। २. तै.सं. १. ६. २. ४. अदब्धः अहिंसितः, अमुं शत्रुम्।
३. तै., सं. १. ६. ११. ६. ४. तै. सं. १. ६. २. ३.
५. तै. सं. १. ६. २. ४.

योरहं देवयज्यया वृत्रहा भूयासम्" इति । तत्र यथा वाक्यद्वयानुसन्धानसम्पन्नं प्रकरणं पृथक्प्रमाणम्, तथा प्रकरणद्वयानुसन्धानसंपन्नः क्रमः कुतो न मानं स्यात्? न चाऽस्य प्रकरणेऽन्तर्भावः, द्वयोर्वाक्ययोरिव प्रकरणयोरेकवाक्यत्वाभावात् । तस्मात्क्रमप्रमाणेन मध्यवर्तिन उपांशुयाजस्य मध्यवर्ती मन्त्रोऽङ्गम् । 'समानदेशत्वं क्रमः' इति क्रमस्य स्वरूपम् । तच्च द्विविधम्—पाठकृतमर्थकृतं च । तत्र पाठकृतमपि द्विविधम्—यथासंख्यं सन्निधिश्चेति । तयोराद्यस्य दब्धिमन्त्र उदाहरणम् । (१)"शुन्धध्वं दैव्याय कर्मणे" इत्ययं मन्त्रः शोधनीयेषु वस्तुषु साधारणो भासते । तत्र सान्नाय्यपात्राणि कुम्भीशाखापवित्रादीन्यनन्तरेषु (२)"मातरिश्वनः" इत्यादिमन्त्रेष्ववभासन्त इति सन्निधिना तत्पात्रप्रोक्षणे "शुन्धध्वम्" इति मन्त्रो विनियुज्यते । अनुष्ठानसादेश्यात्(३) पशुधर्माणामग्नीषोमीयाङ्गत्वम् । तदेवं क्रमस्य त्रैविध्यं द्रष्टव्यम् ॥

इति पञ्चमं क्रमाधिकरणम् ॥ ५ ॥

---

अथ षष्ठं समाख्याधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**वेदत्रयोक्तधर्माणामृत्विग्भिः सङ्गतिस्त्रिभिः ।**
**अनियत्या नियत्या वा, नियतिर्नाऽनिरूपणात् ॥ १५ ॥**
**हौत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः ।**
**निर्बाधं चाऽन्यवत्तच्च तेनाऽत्र विनियोजकम् ॥ १६ ॥**

याज्यापुरोनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः । दोहाननिर्वापादयो यजुर्वेदे । आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे । तत्र 'अस्यैवैते धर्माः' इति नियामकस्य दुर्निरूपत्वाद्येन केनाऽप्यृत्विजा यः कोऽपि धर्म इच्छया संगच्छते इति चेत्—

**मैवम्**; 'हौत्रम्, आध्वर्यवम्, औद्गात्रम्' इति समाख्यानेन नियतिर्बोध्यते । न च समाख्यानस्य बाधकं किंचित्पश्यामः । तस्मादबोधकत्वबाधितत्वयोरप्रामाण्यकारणयोरभावाच्छ्रुतिलिङ्गादिपञ्चकवत्प्रमाणेन समाख्यानेन धर्मा व्यवस्थाप्यन्ते ॥

इति षष्ठं समाख्याधिकरणम् ॥ ६ ॥

---

१. तै.सं. १. १. ३. १.　　　　२. तै. सं. १.१.३.

३. पशुधर्माः पशुयागाङ्गानि उपाकरणनियोजनपर्यग्निकरणादीनि ।

## अथ सप्तमं बलाबलाधिकरणम् ॥ ७ ॥

### ( श्रुतिप्राबल्याधिकरणम् )

सप्तमाधिकरणमारचयति—

**ऐन्द्र्योपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनम् ।**
**समुच्चयो वोत शक्र एवाऽग्निः केवलोऽथवा ॥ १७ ॥**
**विकल्पः श्रुतिलिङ्गाभ्यां गुणावृत्त्या समुच्चयः ।**
**श्रुतिः शक्त्यनुसारेति शक्र एकोऽत्र लिङ्गतः ॥ १८ ॥**
**शक्तिरुक्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम् ।**
**नैराकाङ्क्ष्यात्मके बोधे श्रुत्याऽग्नौ केवले स्थितिः ॥ १९॥**

"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रूयते । (१)"कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यसावृगैन्द्री । तत्रेन्द्रस्य प्रकाशनात् । 'भो इन्द्र, कदाचिदपि घातको न भवसि । किं त्वाहुतिं दत्तवते यजमानाय प्रीयसे' इत्यर्थः । तत्र इन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गान्मन्त्रस्येन्द्रविषयक्रियासाधनत्वं गम्यते । यद्यसौ मन्त्र इन्द्रप्रधानकक्रियायाः साधको न भवेत्, तदानीमनेन मन्त्रेणेन्द्रप्रकाशनं व्यर्थं स्यात् । 'एतन्मन्त्रकरणकक्रियां प्रतीन्द्रः प्रधानम्' इत्येतादृशबुद्ध्युत्पादनं लिङ्गविनियोगः । 'काऽसौ क्रिया' इति विशेषजिज्ञासायाम् 'ऐन्द्र्योपतिष्ठते' इत्यनेनाऽविरुद्धपदद्वयरूपेण वाक्येनोपस्थानक्रियायां पर्यवसानं क्रियते । तथासति 'ऐन्द्रमन्त्रेणेन्द्रमुपतिष्ठेत' इत्ययमर्थः पर्यवस्यति । तथा 'गार्हपत्यम्' इति द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते । तच्च गुणभूतां यत्किंचित्करणकक्रियामन्तरेण न संभवति । ततः 'तादृशीं कांचित्क्रियां प्रति गार्हपत्यः प्रधानम्' इत्येतादृशबुद्ध्युत्पादनं श्रुतिविनियोगः । 'ऐन्द्र्या उपतिष्ठते' इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति । तथासति 'ऐन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठते' इत्यर्थो भवति । तदेवं श्रुतिलिङ्गयोर्विरोधे सति प्रमाणत्वाविशेषा(२)द्व्रीहियववद्विकल्प इत्येकः **पूर्वपक्षः** ।

इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषादुपस्थानस्य च गुणत्वात् 'प्रतिप्रधानं गुण आवर्तनीयः' इति न्यायेनोपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चय इति **द्वितीयः पूर्वपक्षः** ।

श्रुतिर्विनियुञ्जाना वस्तुसामर्थ्यमनुसृत्यैव विनियुङ्क्ते । अन्यथा 'वह्निना सिञ्चेत्' 'वारिणा दहेत्' इत्यपि विनियुज्येत । तत उपजीव्यत्वेन लिङ्गस्य प्रबलत्वादिन्द्र एव मन्त्रेणोपस्थेय इति **तृतीयः पूर्वपक्षः** ।

ऐन्द्रमन्त्रस्य गार्हपत्ये मुख्यवृत्त्या शक्त्यभावेऽपि गौणवृत्त्या शक्तिरस्तीति "निवे

---

१. मै. सं. १. ५. ४.

२. 'व्रीहिभिर्यजेत यवैर्यजेत' इत्यत्र यागसाधनत्वे द्वयोर्यथा विकल्पः तद्वदित्यर्थः ।

नः" इत्यस्मिन्नुदाहरणे पूर्वमेव दर्शितम् । तथासति सामर्थ्याभावकृतप्रतिबन्धाभावान्निर्विघ्ना श्रुतिः शीघ्रं विनियुङ्क्ते । लिङ्गं तु विलम्बते । मन्त्रपदान्यादौ स्वाभिधेयमर्थं प्रतिपादयन्ति । तत ऊर्ध्वं मन्त्रस्य सामर्थ्यं निरूप्यते । पश्चात्सामर्थ्यवशात्साधनत्ववाचिनी प्राधान्यवाचिनी च श्रुतिः कल्प्यते । सा च श्रुतिः 'मन्त्रेणेन्द्रमुपतिष्ठेत' इति विनियुङ्क्ते । तथासति प्रत्यक्षश्रुतौ स्वाभिधेयप्रतिपादनविनियोगयोर्मध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ न स्त इति प्राबल्यात्तया लिङ्गं बाध्यते । न च प्रत्यक्षश्रुतिविनियोगवेलायामलब्धात्मकत्वेनाऽप्राप्तं लिङ्गं कथं बाध्येत इति शङ्कनीयम् ? भविष्यत्प्राप्तिप्रतिबन्धस्यैवाऽत्र बाधत्वात् । श्रुत्या विनियुक्तस्य मन्त्रस्य पुनर्विनियोगाकाङ्क्षाया अनुदयात्कथं विनियोजकं लिङ्गं प्राप्स्यति । तस्मात् गार्हपत्योपस्थाने मन्त्रः प्रत्यक्षश्रुत्या विनियुज्यते ॥

इति सप्तमं श्रुतिप्राबल्याधिकरणम् ॥ ७ ॥

## अथाऽष्टमं लिङ्गप्राबल्याधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**स्योनं त इति पूर्वार्धं तस्मिन्सीदेति चोत्तरम् ।**
**सदने सादने चाऽयं सर्वो वाऽर्धे व्यवस्थिते ॥ २० ॥**
**तच्छब्दादेकवाक्यत्वे भवेदाद्यः श्रुतिं प्रति ।**
**लिङ्गस्य सन्निकृष्टत्वाद्वाक्यबाधे व्यवस्थितिः ॥ २१ ॥**
**उदाहृतिरियं वाक्यबाधे न त्वैन्द्रियेत्यसौ ।**
**बाधादूर्ध्वं निरर्थत्वादप्रामाण्यप्रसङ्गतः ॥ २२ ॥**

**दर्शपूर्णमासयोः** श्रूयते—(१)"स्योनं ते सदनं कृणोमि घृतस्य धारया सुसेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इति । 'भोः पुरोडाश, तव समीचीनं स्थानं करोमि । तच्च स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि । भो व्रीहिसारभूत, त्वं समाहितमनस्कस्तस्मिन्समीचीने स्थान उपविश । तत्र स्थिरो भव' इत्यर्थः । तत्र 'तस्मिन्' इत्यनेन तच्छब्देन प्रकृतवाचिना पूर्वोत्तरार्धयोरेकवाक्यत्वे सति मन्त्रद्वयाभावात्सर्वोऽप्ययं मन्त्रः स्थानकरणेऽङ्गं स्यात् । मन्त्रविनियोजिका श्रुतिरेवं कल्पनीया—सर्वेणाऽनेन मन्त्रेण स्थानं कर्तव्यम् इति । तथा—सर्वेण मन्त्रेण पुरोडाशः स्थापनीयः इत्यपि कल्पनीया । सदनाङ्गत्ववत्प्रतिष्ठा-

१. (तै. ब्रा. ३. ७. ५.) अत्र 'कृणोमि' इति स्थाने करोमीति पाठः ।

पनाङ्गत्वस्याऽपि तद्वाक्यबोधितत्वात् । तथा सति सदनस्थापनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा निजेच्छया भविष्यति इति **प्राप्ते**—

**ब्रूमः**—यदेतत्पूर्वोत्तरार्धयोः परस्परान्वयेन संपन्नमेकं वाक्यम्, तदेतदुत्तरार्धस्य सदनकरणे शक्तिमकल्पयित्वा कृत्स्नं मन्त्रं सदने विनियोक्तुं नाऽर्हति । तथा पूर्वार्धस्य स्थापने शक्तिमकल्पयित्वा न तत्र प्रभवति । अतो लिङ्गकल्पनव्यवधानेन वाक्यं श्रुतिं प्रति विप्रकृष्यते । प्रत्यक्षं तु लिङ्गद्वयं संनिकृष्यते । तथासति लिङ्गेन वाक्यबाधादर्थ-द्वयमुभयोर्व्यवस्थितम् । ननु "ऐन्द्या गार्हपत्यम्" इत्यत्राऽपि पदद्वयान्वयरूपस्य वाक्यस्य विनियोजकत्वप्रतीतेर्लिङ्गवाक्यविरोधाय तदेवोदाह्रियताम् इति चेत्—न ; तत्र लिङ्गेन वाक्ये बाधिते सत्येकैकपदस्याऽर्थप्रत्यायकत्वाभावेन श्रुतिकृतविनियोगस्या-प्यसिद्धेरप्रामाण्यमेवोदाहृतस्य प्रसज्येत । इह तु महावाक्ये बाधितेऽप्यवान्तरवाक्य-योरर्थप्रतीतौ लिङ्गविनियोगः सिध्यतीत्येतदेवोदाहरणम् ॥

इत्यष्टमं लिङ्गप्राबल्याधिकरणम् ॥ ८ ॥

---

## अथ नवमं वाक्यप्राबल्याधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**अग्नीषोमाविदं हव्यमजुषेतामितीरितात् ।**
**अपाच्छिद्येदमित्यादिः सर्वशेषो भवेन्न वा ॥ २३ ॥**
**प्रक्रियातो भवेन्मैवं प्रक्रियाऽन्तरिता त्रिभिः ।**
**वाक्यं द्व्यन्तरितं तेन भवेत्प्रकरणाद्बलि ॥ २४ ॥**

**सूक्तवाके** श्रूयते—(१)"अग्नीषोमाविदं हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्राताम्, इन्द्राग्नी इदं हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्राताम्" इति । तत्र देवतावाचकमग्नीषोमादिपदं पौर्णमास्यादिकाले यथादेवतं विभज्य प्रयोक्तव्यम् इति पूर्वपादे निर्णीतम् । यत्तु 'इदं हविः' इत्यादिकमवशिष्टं पदजातं, तदग्नीषोममन्त्रगतमप्यमावास्यायामग्नीषोमपदपरित्यागेन पठनीयम् । एवम् इन्द्राग्निमन्त्रगतमपि पौर्णमास्यामिन्द्राग्निपदपरित्यागेन पठनीयम् । तथासत्येषां मन्त्रभागानां सर्वशेषत्वबोधको दर्शपूर्णमासप्रकरणपाठोऽनुगृह्यत इति **प्राप्ते**—

**ब्रूमः**—अग्नीषोममन्त्रशेषस्येन्द्राग्निपदान्वयाश्रवणात् । प्रकरणेन प्रथमं तदन्वय-रूपं वाक्यं कल्पनीयम् । तेन च वाक्येनेन्द्रादिप्रकाशनसामर्थ्यरूपं लिङ्गं कल्प्यते ।

१. तै. ब्रा. ३. ५. १०

तच्च लिङ्गं 'अनेन मन्त्रभागेणेन्द्राग्निविषयक्रियाऽनुष्ठेया' इति विनियोजिकां तृतीयाश्रुतिं कल्पयति । ततः प्रकरणविनियोगयोर्मध्ये त्रिभिर्व्यवधानं भवति । अग्नीषोमपदान्वयरूपं तु वाक्यं श्रूयमाणत्वाल्लिङ्गश्रुतिभ्यामेव व्यवधीयते । तस्माद्वाक्येन प्रकरणस्य बाधितत्वात्तच्छेषस्तत्रैव व्यवतिष्ठते ॥

इति नवमं वाक्यप्राबल्याधिकरणम् ॥ ९ ॥

---

### अथ दशमं प्रकरणप्राबल्याधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**राजसूयेऽभिषेच्याख्ययागे ये देवनादयः ।**
**तच्छेषास्तेऽखिलार्था वा, तच्छेषास्तस्य संनिधेः ॥ २५ ॥**
**राजसूयकथंभावानुवृत्तेः सर्वशेषता ।**
**कल्प्याकाङ्क्षाऽभिषेच्यस्य प्राक्रिया प्रबला ततः ॥ २६ ॥**

**राजसूये** (१)पश्विष्टिसोमयागा बहवः प्रधानभूताः । तत्राभिषेचनीयाख्यः कश्चित्सोमयागः । तस्य संनिधौ देवनादयः श्रूयन्ते—(२)"अक्षैर्दीव्यति । राजन्यं जिनाति (३)शौनश्शेपमाख्यापयति" इति । जिनाति जयति । बह्वृचब्राह्मणे समाम्नातं शुनःशेपविषयमुपाख्यानं शौनश्शेपम् । तत्र संनिधिबलाद्देवानादयोऽभिषेचनीयाङ्गमिति **चेत्**—

**मैवम्**; राजसूयस्य कथंभावाकाङ्क्षायामनुवृत्तायां विहिता देवनादयः प्रकरणेन राजसूयशेषाः । राजसूयश्च बहुयागात्मक इति तत्रत्यसर्वयागशेषत्वम् । न चाऽभिषेचनीयस्य काचिदाकाङ्क्षा देवनादिष्वस्ति, ज्योतिष्टोमविकृतित्वेनाऽतिदिष्टैः प्राकृताङ्गैरेव तदाकाङ्क्षानिवृत्तेः । संनिहितविधिबलादाकाङ्क्षोत्थाप्यत इति चेत्—अत एवाऽऽकाङ्क्षारूपमवान्तरप्रकरणमादौ परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनया संनिधिर्विप्रकृष्यते । राजसूयाकाङ्क्षारूपं तु महाप्रकरणं क्लृप्तत्वादेकया कक्ष्या निकृष्यते । तस्मात् प्रकरणेन संनिधिबाधात्सर्वशेषा देवनादयः ॥

इति दशमं प्रकरणप्राबल्याधिकरणम् ॥ १० ॥

---

१. 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' त्यादिवाक्यैर्विहिता इष्टयः, पवित्राभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रक्षत्रधृतिरूपास्सप्त सोमयागाः । इमे सर्वे मिलित्वा राजसूयपदवाच्याः । तै. सं. १. ९. १.  २. मै. सं. ४. ४. ६.

३. ऐतरेयब्राह्मणे पञ्चमपञ्चिकायां हरिश्चन्द्रोपाख्यनरूपोऽयमितिहासः । स एव शौनश्शेप इत्याख्यायते ।

## अथैकादशं स्थानप्राबल्याधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**शुन्धध्वमिति मन्त्रोऽङ्गं पौरोडाशिकशोधने ।**
**सांनाय्यपात्रशुद्धौ वा प्रथमोऽस्तु समाख्यया ॥ २७ ॥**
**पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा ।**
**संनिध्यनुक्तितः कल्प्यः क्लृप्तत्वाच्चरमः क्रमात् ॥ २८ ॥**

(१)"शुन्धध्वं दैव्याय कर्मणे" इत्ययं मन्त्रः 'पौरोडाशिकम्' इति याज्ञिकैः समाख्याते काण्डे पठितत्वात्समाख्यया पुरोडाशकाण्डोक्तानामुलूखलजुह्वादीनामपि शोधनेऽङ्गम् इति चेत्--

मैवम् ; 'पौरोडाशिकम्' इति समाख्यायां प्रकृतिः पुरोडाशमात्रमभिधत्ते, तद्धितप्रत्ययश्च काण्डम् । न चैतावता कृत्स्नपुरोडाशपात्राणां मन्त्रसंनिधिः प्रत्यक्षो भवति । किं त्वर्थापत्त्या कल्प्यते । यद्युक्तसंनिधिर्न स्यात्, तदा मन्त्रप्रतिपादकग्रन्थस्य पौरोडाशिकसमाख्या न स्यात् । न ह्यग्न्यसंनिहितानाम् "इषे त्वा" इत्यादिमन्त्राणामाग्नेयकाण्डसमाख्या भवति । संनिहितानां तु (२)"युञ्जानः प्रथमं मनः" इत्यादिमन्त्राणां भवत्येषा समाख्या । तस्मात् काण्डसमाख्यया संनिधिं परिकल्प्य तत्संनिध्यन्यथाऽनुपपत्त्या परस्पराकाङ्क्षारूपं कृत्स्नं पात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतीः कल्पयित्वा तया श्रुत्या विनियोग इति समाख्याया विप्रकर्षः । सांनाय्यपात्राणां शोधने मन्त्रसंनिधिस्तु प्रत्यक्षः । इध्माबर्हिस्सम्पादनस्य मुष्टिनिर्वापस्य चान्तराले सान्नाय्यपात्राणां(३) देश उक्तः । मन्त्रश्चेध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते । तेन च प्रत्यक्षसंनिधिना प्रकरणादीनां चतुर्णामेव कल्पनात्संनिधिः संनिकृष्यते । तस्मात् क्रमेण समाख्यां बाधित्वा 'सांनाय्यपात्रशोधनशेषो मन्त्रः' इत्ययं चरमः पक्षोऽभ्युपेयः ॥

इत्येकादशं स्थानप्राबल्याधिकरणम् ॥११॥

( इति बलाबलाधिकरणसमाप्तिः )

---

१. तै. सं. १. १. ३. २. तै. सं. ४. १. १.

३. तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके द्वितीयानुवाके इध्माबर्हिस्सन्नहनमुक्तम् । तत्रैव चतुर्थेऽनुवाके मुष्टिनिर्वाप उक्तः । तयोर्मध्ये यस्तृतीयोऽनुवाकः 'शुन्धध्वं दैव्याय' इति स सान्नाय्यपात्राणां स्थानम् ।

## अथ द्वादशं प्राप्ताप्राप्तबाधभेदाधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

बाधो न युक्तो युक्तो वा प्राप्त्यप्राप्त्योर्न युज्यते ।
अप्रवृत्तं प्रसक्तं यद्धिया तस्याऽस्तु बाध्यता ॥ २९ ॥
प्रमाणतः प्रसक्तस्य बाधो दाशमिकोऽत्र तु ।
विभ्रमेण प्रसक्तस्य तस्मादप्राप्तबाधनम् ॥ ३० ॥

प्राप्तस्य प्रवृत्तिरस्तीति न तन्निवारणं शक्यम् । अप्राप्तस्य बाधाविषयत्वेनाऽवस्थानमेव नाऽस्ति । तस्मात् न युक्तो बाध इति चेत्——

**मैवम्**; बुद्ध्या विषयीकृतस्य वारयितुं शक्यत्वात् । न चैतदत्यन्तं प्रवृत्तम्, अनुष्ठानरूपफलपर्यवसानाभावात् । नाऽप्यत्यन्तमप्रवृत्तम्, तद्बुद्धेरुत्पन्नत्वात् । अतो नोक्तदोषद्वयम् । दशमे (१)चोदकप्रमाणेनाऽवबुद्धोऽर्थो बाध्यत इति प्राप्तबाधः । इह तु पूर्वपूर्वप्रमाणविरुद्धैरुत्तरोत्तरैः प्रमाणाभासैरवबुद्धस्येत्यप्राप्तबाधः ॥

इति द्वादशं प्राप्ताप्राप्तबाधभेदाधिकरणम् ॥ १२ ॥

---

## अथ त्रयोदशमहीनाधिकरणम् ॥ १३ ॥

(२)त्रयोदशाधिकरणमारचयति—

तिस्र एव हि साह्ने स्युरहीने द्वादशेत्यतः ।
ज्योतिष्टोमे द्वादशत्वमथवाऽहर्गणे भवेत् ॥ ३१ ॥
अस्तु प्रकरणादाद्यो नाऽहीनत्वं विरुध्यते ।
प्रकृतित्वान्न केनाऽपि हीनोऽतोऽत्र विकल्प्यताम् ॥ ३२ ॥
साह्नाद्भिन्नाऽहीनसंज्ञा रूढैषाऽहर्गणे भवेत् ।
षष्ठीश्रुत्या द्वादशत्वं प्रक्रियातोऽपकृष्यताम् ॥ ३३ ॥

ज्योतिष्टोमप्रकरणे श्रूयते—(३)"तिस्र एव साह्नस्योपसदो द्वादशाऽहीनस्य"

---

१. चोदकः अतिदेशः प्रकृतिवद्विकृतिः कर्तव्येत्यादिरूपः ।

२. एवं तावदङ्गत्वबोधकप्रामाणानां विरोधे बलाबलं निरूप्याऽधुना विरोध एव काऽस्ति क च नाऽस्तीति चिन्तार्थमुत्तरः प्रपञ्चो यावदध्यायसमाप्ति ।

३. (तै.सं. ६.२.५.१.) अह्ना सह वर्तत इति साह्नः ज्योतिष्टोमः । तस्य उपसदः

इति । एकेनाऽह्ना निष्पाद्यत्वात्साह्नो ज्योतिष्टोमः । दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कर्तव्या होमा उपसदः । तासां द्वादशत्वं प्रकरणबलाज्ज्योतिष्टोमे निविशते । अहीनशब्दश्च तस्मिन्नेव कल्पते । ज्योतिष्टोमस्य निखिलसोमयागप्रकृतित्वेन सर्वेषामङ्गानां तत्रोपदेशे सति तदुपदेशविकलविकृतीनामिव हीनत्वाभावात् । अतो द्वादशत्वत्रित्वयोर्विकल्प इति **प्राप्ते—**

**ब्रूमः—**आवृत्तसोमयागरूपो द्विरात्रत्रिरात्रादिरहर्गणः । तस्मिन्नहीनशब्दो रूढः । यौगिकत्वे तु 'न हीनः' इति विगृह्य समासे कृते सत्ययज्ञादिशब्दवदाद्युदात्तः(१)स्यात् । मध्योदात्तस्त्वाम्नायते । रूढिश्च विग्रहनिरपेक्षत्वाच्छीघ्रबुद्धिहेतुः । अतो ज्योतिष्टोमवाचिनः साह्नशब्दाद्भिन्नेयं (२)अहीनसंज्ञा ज्योतिष्टोमाद्भिन्नमहर्गणमभिधत्ते । तस्मिन्नहर्गणे षष्ठीश्रुत्या तदुक्तं द्वादशत्वं निवेश्यते । तत्सिद्धये प्रकरणादिदमपनेतव्यम् ॥

इति त्रयोदशमहीनाधिकरणम् ॥ १३ ॥

---

## अथ चतुर्दशं प्रतिपदधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**युवं हीति द्वयोः कर्त्रोर्बहूनां चैत इत्यमूम् ।**
**कुर्यात्प्रतिपदं ज्योतिष्टोमे साऽहर्गणेऽथवा ॥ ३४ ॥**
**एकस्य शक्तिराहित्ये द्वाभ्यां बहुभिरेव वा ।**
**ज्योतिष्टोमस्य कार्यत्वात्प्रकृतेऽत्रैव सा भवेत् ॥ ३५ ॥**

---

तिस्र एव । अहीनस्याऽनेकसुत्याकस्य क्रतोस्तु द्वादश उपसद इत्यर्थः । अत्र पूर्वपक्षे अहीनशब्दो 'न हीनः' अहीनः इति व्युत्पत्त्या ज्योतिष्टोमवाच्येव । सिद्धान्ते तु 'अह्नः खः क्रता' विति सूत्रविहितखप्रत्ययान्तत्वादहीनशब्दोऽहस्समूहवाचीति ध्येयम् ।

१. अयं भावः—न हीनः अहीन इति विग्रहे तस्य नञ् समासत्वात् 'नञ् सुभ्यामि'त्यनेन सूत्रेणाऽऽद्युदात्तस्स्यात् । अहन् शब्दात् 'तस्य समूह' (पा.सू.४.२.३७) इत्यनुवृत्तिसहितेन 'अह्नः खः क्रता' विति वार्तिकेण खप्रत्यये कृते, तस्य च 'आयनेयीनीयियः फढखछघां प्रत्ययादीनामि' (पा.सू. ७.१.२.) त्यनेन ईनादेशे च कृते तस्य 'प्रत्ययस्ये' त्यनेन आद्युदात्तस्वरविधानात् ईकारस्योदात्तस्वरे प्राप्ते 'अनुदात्तं पदमेकवर्जं' (६.१.१५८.) मित्यनेन आद्यन्तयोरनुदात्तस्वरविधानादहीनशब्दस्य मध्योदात्तत्वमिति ।

२. द्विरात्रप्रभृतिष्वेकादशरात्रान्तेष्वहर्गणेषु अहीनशब्दो रूढ इति दशमे वक्ष्यते ।

**यजमानस्य नानात्वं साक्षाद्विकृतिषु श्रुतम् ।**
**उत्कृष्य प्रतिपत्तेन कुलायादिषु नीयताम् ॥ ३६ ॥**

ज्योतिष्टोमे श्रूयते—(१) "युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् । एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः" इति । स्तोत्रस्योपक्रमे पठनीयामृचं प्रतिपच्छब्दोऽभिधत्ते । सा चोदाहृता प्रतिपत्प्रकरणाज्ज्योतिष्टोमे निविशते । न च तत्र यजमानद्वित्वयोरसम्भवः, एकस्य यजमानस्य द्रव्यालाभादिना तदशक्तौ नित्यकर्मणः परित्यागासम्भवेन द्वाभ्यां बहुभिर्वा तस्याऽवश्यकर्तव्यत्वात् इति प्राप्ते—

ब्रूमः—यजमानद्वित्वं कुलायनामके यज्ञे साक्षादाम्नातम्—(२)"एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" इति । यजमानबहुत्वं सत्रेष्वाम्नातम्—(३)"चतुर्विंशतिपरमाः सत्रमासीरन्" इति । ततो द्विशब्दबहुशब्दरूपाभ्यां श्रुतिभ्यां प्रकरणं बाधित्वा कुलायादिषु यथोक्तप्रतिपदोरुत्कर्षः कर्तव्यः । न चाऽशक्तावपि यजमानद्वित्वबहुत्वे सम्भवतः, अशक्तेन स्वीकृतस्य पुरुषान्तरस्य प्रतिनिधित्वे यजमानत्वाभावात् । 'यजमानस्य प्रतिनिधिर्नाऽस्ति' इति (४)वक्ष्यते । यद्यन्यः पुरुषः स्वयमेव प्रवर्तते तदानीं स्वकीयमेव प्रयोगं कुर्यात् , न त्वशक्तस्य साहाय्यमाचरेत् । तस्मात् श्रूयमाणस्य यजमानैकत्वस्य कालादिवदनुपादेयाङ्गत्वेन त्यक्तुमशक्यत्वान्न ज्योतिष्टोमे यजमानस्य द्वित्वबहुत्वे सम्भवतः ॥

इति चतुर्दशं प्रतिपदधिकरणम् ॥ १४ ॥

---

अथ पञ्चदशं जाघन्यधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**संयाजयन्ति जाघन्या पत्नीरेतत्पशावुत ।**
**दर्शादौ, तत्पशौ युक्तं जाघन्याः समवायतः ॥ ३७ ॥**

---

१. ( तां. ब्रा. ६. ९. १३. ) द्वौ यजमानौ मिलित्वा यं क्रतुमनुतिष्ठतः तत्र क्रतौ बहिष्पवमानाख्ये प्रथमस्तोत्रे 'युवं स्थ' इति ऋचं प्रथमं प्रगायाऽनन्तरमन्या गातव्याः । यस्मिन् क्रतौ बहवो यजमानाः, तत्र क्रतौ तस्मिन् स्तोत्रे 'एते असृग्रमिन्दव' इति ऋक् प्रथमं पठनीयेति विषयवाक्यार्थः ।

२. राजा च पुरोहितश्च राजपुरोहिताविति विग्रहष्षाष्ठसिद्धान्तानुसारेण बोध्यः ।

३. 'सप्तदशावराः चतुर्विंशतिपरमा' इति समग्रं वाक्यम् । अत्र सप्तदश संख्या न्यूनावधिर्यजमानेषु, चतुर्विंशतिसंख्या परमावधिः ।　　४. पू. मी. ६. ३. ७.

**जाघनी नाम भागोऽसौ दर्शादौ समवैति हि ।**
**नोत्क्रष्टव्यं न संस्कार्या साधनत्वात्तृतीयया ॥ ३८ ॥**

दर्शपूर्णमासप्रकरणे श्रूयते—(१)"जाघन्या पत्नीः संयाजयन्ति" इति । जाघनी पशोः पुच्छम् । पत्नीशब्दोऽत्राऽऽहुतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः । अत एव श्रूयते—"पञ्च प्रयाजा इज्यन्ते, चत्वारः पत्नीसंयाजाः" इति । तत्र तृतीयाहुतौ(२) देवपत्नीनां देवतात्वात्तद्द्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिः । तत्र जाघनीमुद्दिश्य पत्नीसंयाजसंस्कारो विधीयते । जाघनी च(३) पशौ समवेता न तु दर्शपूर्णमासयोः । अतः प्रकरणादुत्कृष्य पशौ निवेशनं इति प्राप्ते—

**ब्रूमः**—जाघनीशब्देन पशोर्भागोऽभिधीयते । स च दर्शपूर्णमासयोः पशुयागत्वाभावेऽपि क्रयादिना सम्पादयितुं शक्यते । न चाऽत्र पशौ विद्यमानाया जाघन्या पत्नीसंयाजैः संस्कार्यत्वम् , तृतीयया साधनत्वावगमात् । तस्मात् न प्रकरणादुत्कर्षः ॥

इति पञ्चदशं जाघन्यधिकरणम् ॥ १५ ॥

---

### अथ षोडशं सन्तर्दनाधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**सन्तृद्येदीर्घसोमे तत्प्रकृतौ विकृतावुत ।**
**दीर्घस्य सोम इत्युक्ते प्रकृतावस्तु तर्दनम् ॥ ३९ ॥**
**सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वतः ।**
**दैर्घ्ययुक्तोक्थ्यसंस्थादावुत्कर्षोऽन्यत्र बाधनात् ॥ ४० ॥**

ज्योतिष्टोमे श्रूयते—(४)"दीर्घसोमे सन्तृद्ये धृत्यै" इति । सोमयागविशेषो दीर्घसोमः । तस्मिन्सोमाभिषवाधारयोः (५)अधिषवणफलकयोः संतर्दनं कार्यम् । अन्योन्यवियोगेन शैथिल्यं मा भूदिति दृढसंश्लेषः सन्तर्दनम् । तदेतत्प्रकरणबलात्प्रकृतौ निविशते । न च दीर्घसोमत्वानुपपत्तिः । 'दीर्घस्य सोमः' इत्येवं दीर्घशब्दस्य

---

१. पत्नीसंयाजाख्यं कर्म जाघनीद्रव्येण कुर्यादित्यर्थः ।

२. तृतीयाहुतौ 'इन्द्राण्यग्नाय्यश्विनीराट् आरोदसी वरुणानी शृणोतु' इतीन्द्राण्यादीनां देवपत्नीनां श्रुतत्वात्ता एवाऽत्र देवताः । एवञ्च पत्नीदेवताकत्वात्कर्मणोऽस्य पत्नीसंयाजसंज्ञा ।  ३. पशौ पशुयागे ।  ४. तै. सं. ६. २. ११.

५. सोमो ययोः फलकयोर्निधायाऽभिषूयते ते अधिषवणफलके ।

यजमानविशेषणत्वेनाऽप्युपपत्तेरिति प्राप्ते—

ब्रूमः—'षष्ठीसमासात्कर्मधारयो बलीयान्' इति (१)निषादस्थपत्यधिकरणे वक्ष्यते । तथा सति दीर्घत्वं सोमस्य धर्मः, न तु यजमानस्य । नन्वेवमपि प्रकृतिभूतस्य सोमस्येष्टिपश्वपेक्षया दीर्घत्वमस्त्येव इति चेत्—नः सोमशब्देनैव तदवगतौ दीर्घशब्दस्य वैयर्थ्यात् । न हीष्टिपश्वपेक्षया ह्रस्वः कश्चित्सोमोऽस्ति, यस्य व्यावृत्तये दीर्घशब्दः प्रयुज्येत । तस्मात्प्रकृतिरूपं ह्रस्वं सोमं व्यावर्तयितुमयं दीर्घशब्दः । विकृतिपूक्थ्यादिषु ग्रहाधिक्याद्दीर्घत्वम् । द्विरात्रादिषु चाऽऽवृत्त्या दीर्घत्वम् । तस्माद्वाक्येन प्रकरणं बाधित्वा विकृतिषु तन्निवेशः । प्रकृतौ तु दीर्घशब्दस्य बाधः पूर्वमुक्तः । सन्तर्दनबाधश्च साक्षाच्छ्रूयते—(२)"हनू वा एते यस्य यदधिषवणे न सन्तृणत्ति, असन्तृण्णे हि हनू" इति । तस्मात् न प्रकृतौ निवेशः ॥

इति षोडशं सन्तर्दनाधिकरणम् ॥ १६ ॥

---

अथ सप्तदशं प्रवर्ग्याधिकरणम् ॥१७॥

सप्तदशाधिकरणमारचयति—

**न प्रवृञ्ज्यादाद्ययज्ञे क्रतौ सोऽनुष्ठितावुत ।**
**प्रतिषेधः क्रतौ युक्त उक्ता ह्यस्याऽऽद्ययज्ञता ॥ ४१ ॥**
**प्रवृणक्त्युपसद्भ्यः प्रागिति वाक्यात्क्रतौ विधेः ।**
**आद्यप्रयोगे प्राथम्यान्निषेधः क्वचिदेव सः ॥ ४२ ॥**

ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म प्रकृत्य श्रूयते—(३) "न प्रथमयज्ञे प्रवृञ्ज्यात्" इति । सोऽयं प्रतिषेधो ज्योतिष्टोमक्रतौ द्रष्टव्यः, न तु तदीयप्रथमप्रयोगे । कुतः ? (४)"एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः" इति तस्य प्रथमयज्ञत्वाभिधानात् इति चेत्—

मैवम्; "पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति" इति वाक्येन क्रतौ प्रवर्ग्यस्य विहितत्वात् । न च विधिनिषेधवाक्ययोः समानबलत्वादनिर्णयः, निषेधवाक्ये प्रथमशब्देन निषेधस्य प्रयोगपरत्वनिर्णयात् । प्रथमद्वितीयादिशब्दाः क्रियाया आवृत्तौ मुख्याः, तत्सम्बन्धाद्वस्तुषूपचर्यन्ते । प्रथममध्येतव्यत्वात्प्रथमं काण्डम्, तदनन्तरमध्येतव्यत्वाद्द्वितीयं काण्डम् । एवं आदावुत्पन्नत्वात्प्रथमः पुत्रः, तदनन्तरमुत्पन्नत्वा-

---

१. पू. मी. ६.१.१२.　　　　२. तै. सं. ६. २. ११.
३. प्रथमकर्तव्ये ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म न कुर्यादित्यर्थः ।
४. तां. ब्रां. १६. १. २.

द्वितीयः । तथा सति प्रयोगक्रियाया आवृत्तिविशेषे प्रथमशब्दो मुख्यः । तदावृत्तिविषयतया यज्ञे लाक्षणिकः । त्वत्पक्षेऽपि क्रतौ मुख्यो यज्ञशब्दः, प्रयोगे लाक्षणिकः स्यादिति चेत्—बाढम् ; तथाऽप्यसञ्जातविरोधिनि लाक्षणिकत्वकल्पनाद्वरमुत्तरपदे तत्कल्पनम् । तस्माज्ज्योतिष्टोमस्य प्रथमप्रयोगे प्रवर्ग्यनिषेधः । ननु सप्तसंस्थायुक्तस्य ज्योतिष्टोमस्य प्रथमसंस्थारूपोऽग्निष्टोमः, तत्राऽयं निषेधः पर्यवस्यति । विधिश्च तत्र श्रूयते–"अग्निष्टोमे प्रवृणक्ति" इति । एवं तर्ह्यधिकारिभेदेन विधिनिषेधयोर्व्यवस्थाऽस्तु । तथा हि श्रूयते-(१)"कामं तु योऽनूचानः स्यात्, तस्य प्रवृञ्ज्यात्" इति । तस्मात् अनूचानव्यतिरिक्तकर्तृकेऽग्निष्टोमप्रथमप्रयोग एवाऽयं निषेधः ॥

इति सप्तदशं प्रवर्ग्याधिकरणम् ॥१७॥

---

## अथाऽष्टादशं पौष्णपेषणस्य विकृतौ विनियोगाधिकरणम् ॥ १८ ॥

अष्टादशाधिकरणमारचयति—

**प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत ।**
**इष्टिप्रकरणादेव प्रकृताविति युज्यते ॥ ४३ ॥**
**सन्तर्दनादिवद्वाक्याद्विकृतौ पूषसम्भवात् ।**
**सिद्धस्य पुनरप्युक्तिरधिकस्य विवक्षया ॥ ४४ ॥**

दर्शपूर्णमासप्रकरणे श्रूयते-(२)"तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" इति । तत्र दन्तरहितस्य पूष्णः पिष्टभाक्त्वं सन्तर्दनप्रतिपदादिवत्सिद्धम् । तथाऽप्युत्तराधिकरणे तस्मिन्नेव विषये विशेषं वक्तुमिह प्रस्तूयते ॥

इत्यष्टादशं पौष्णपेषणस्य विकृतौ विनियोगाधिकरणम् ॥१८॥

---

१. यः अनूचानः वेदतदर्थज्ञः, तेन कामं प्रवर्ग्यः क्रियतामित्यर्थः ।

२. प्राशित्रभक्षणार्थवादोऽयम् । तत्र हि पूर्वमेवमाम्नायते—'तत् पूष्णे पर्यहरन्, तत्पूषा प्राश्य दतोऽरुणत्' (तै. सं २.६.८.) इति । तत् प्राशित्राख्यं हविश्शेषभागं पूष्णेऽदुः । स च पूषा तं भागं दन्तैः खादन्नभक्षयत् । तेन पूष्णो दन्ता अपतन् । तस्मात्कारणात् पूषा प्रपिष्टभागस्सम्पन्नः । प्रपिष्टं भागो यस्य सः प्रपिष्टभाग इति वाक्यार्थः ।

## अथैकोनविंशं पेषणस्य चरावेव निवेशाधिकरणम् ॥१९॥

एकोनविंशाधिकरणमारचयति—

**चरौ पशौ पुरोडाशे चरावेवोत पेषणम् ।**
**विशेषादर्शनादेतत्सर्वेष्वपि विधीयते ॥ ४५ ॥**
**प्राप्तत्वान्न पुरोडाशे हृदाद्याकारनाशनात् ॥**
**न पशौ, पारिशेष्येण चरावेव हि पेषणम् ॥ ४६ ॥**

"(१)पौष्णं चरुमनुनिर्वपेत्" इति चरुर्विहितः । (२)"पौष्णं श्याममालभेतान्नकामः" इति पशुविधिः । (३)'पशुमालभ्य पुरोडाशं निर्वपति' इत्येतच्चोदकेन पौष्णपशौ प्राप्तम् । तत्र—'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' इति न्यायेन पुरोडाशस्य पूषा देवता । तत्र पूर्वोक्तं पेषणं विषयीकृत्योच्यमानाः संशयपूर्वोत्तरपक्षा विस्पष्टाः ॥

इत्येकोनविंशं पेषणस्य चरावेव विनियोगाधिकरणम् ॥१९॥



## अथ विंशं पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ॥२०॥

विंशाधिकरणमारचयति—

**द्विदेवकेऽपि किं पिंष्यादुत पूषैकदैवके ।**
**द्विदेवकेऽपि तत्पूष्णः सत्त्वात्पेषणभागिनः ॥४७ ॥**
**देवता विफलत्वेन पेषणं न प्रयोजयेत् ।**
**यागस्य तत्त्वे भागोक्तेर्न यागान्तरगामि तत् ॥ ४८ ॥**

## इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

राजसूये श्रूयते—"सौमापौष्णं चरुं निर्वपति, ऐन्द्रापौष्णं चरुम्" इति । तत्र द्वि देवकेऽपि चरौ पिष्टभाजः पूष्णे सत्त्वात्पेषणं पूषार्थं कर्तव्यम् इति चेत्—तत्र वक्तव्यम्—किं पेषणस्य देवता प्रयोजिका ? किं वा यागः ? नाऽऽद्यः, या-

१. तै. सं. २. २. १.

२. (तै. सं. २. १. ६. १.) अन्नकामः अन्नरूपं फलमिच्छन्पूषदेवताकेन श्यामरूपपशुद्रव्याकेण यागेनाऽन्नरूपं फलं भावयेदित्यर्थः । ३. तै. सं. ६. ३. १०

गामन्तरेण केवलदेवता फलजनकत्वाभावेन पेषणं प्रयोक्तुं न प्रभवति। पौष्णस्य यागस्य पेषणप्रयोजकत्वे तु तत्पेषणं द्विदेवके यागान्तरे गन्तुं नाऽर्हति । (१)"पूषा प्रपिष्टभागः" इत्यत्र यागो न श्रुत इति चेत्--मैवम् ; भागशब्दान्यथानुपपत्त्या यागस्य कल्प्यत्वात् । न हि देवतात्वमन्तरेण पिष्टद्रव्यभाक्त्वं सिध्यति । सति च देवतात्वे द्रव्यदेवतयोर्लाभाद्यागः कल्प्यते । तस्मात् एकदेवकयागस्य पेषणप्रयोजकत्वात्, न द्विदेवकयागे पेषणमस्ति ॥

इति विंशं पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ॥२०॥

इतिश्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे
तृतीयाध्ययस्य तृतीयः पादः ॥३॥

## अथ तृतीयाध्यायस्य चतुर्थः पादः ॥

### तत्र प्रथमं निवीताधिकरणम् ॥ १ ॥

चतुर्थपादस्य प्रथमाधिकरणामारचयति—

**निवीतं तु मनुष्याणां विधिर्वैषोऽर्थवादकः ।**
**अपूर्वत्वात्प्रकरणान्नु क्रतोर्वा विधीयते ॥ १ ॥**
**प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात् ।**
**उपवीतविधावेकवाक्यत्वादर्थवादता ॥ २ ॥**

दर्शपूर्णमासप्रकरणे श्रूयते—(२)"निवीतं मनुष्याणाम् । प्राचीनावीतं पितॄणाम् । उपवीतं देवानाम् । उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । तत्र निवीतस्य पूर्वं मानान्तरेणाऽप्राप्तत्वाद्विधेयत्वमभ्युपेतव्यम् । तच्च निवीतं 'मनुष्याणाम्' इति षष्ठ्या पुरुषार्थत्वेन विधीयते इत्येकः **पूर्वपक्षः** । अस्मिन् पक्षे मनुष्यसम्बन्धो द्विविधः—सुवर्णधारणवत्सर्वपुरुषसम्बन्ध इत्येकः प्रकारः । उपवीतप्राचीनावीतयोः क्रतुप्रवेश-

---

१. तै. सं. २. ६. ८.

१. (तै. सं. २. ५. ११.) 'यत्रोभावपि बाहू न्यग्भूतौ सन्तौ ब्रह्मसूत्रेण वीयेते संवृतावाच्छादितौ क्रियेते तन्निवीतम् । तच्च मनुष्याणां कार्येषु प्रशस्तम् । प्राचीनो दक्षिणो बाहुराधीयतेऽधस्तात्क्रियते यत्र तत्प्राचीनावीतम् । तच्च पितृकर्मणि प्रशस्तम् । दक्षिणं बाहुमूर्ध्वं धृत्वा सव्ये बाहौ लम्बमाने सति यद्वेष्टनं तद्यज्ञोपवीतम्' इति सायणाचार्याः ।

रहितयोः स्वतन्त्रदैविकपैतृककर्मणोरपि दर्शनात्तत्साहचर्येण स्वतन्त्रे आचार्यातिथ्यादिमनुष्यविषये कर्मणि निवीतमित्यपरः प्रकारः ।

प्रकरणबलात्प्रयाजादिवद्यागधर्म इति **द्वितीयः पूर्वपक्षः** । अस्मिन् पक्षे मनुष्यग्रहणं कर्तृसम्बन्धानुवादः । षष्ठीश्रुतिप्रकरणयोरविरोधादुभयावलम्बनेन क्रतुसम्बन्धिमनुष्यधर्मः इति पक्षान्तरमुदेति । तच्च द्विविधम्—लोहितोष्णीषादिवदृत्विग्धर्म इत्येकः प्रकारः । क्रतावेव यन्मनुष्यप्रधानं (१)कर्माऽन्वाहार्यदानादि, तद्धर्मत्वे सत्युपवीतसाहचर्यमप्यनुगृह्यत इत्यपरः प्रकारः । सर्वथाऽपि निवीतं नाऽर्थवाद इति **प्राप्ते—**

**ब्रूमः—**अत्र प्रतीयमानं निवीतादिकं वासोविषयम् । न तु त्रिवृत्सूत्रविषयम्, (२)"अजिनं वासो वा दक्षिणत उपवीय" इत्यनेन सदृशत्वात् । वस्त्रस्य च निवीतं सौकर्याय प्राप्तम् । प्राचीनावीतोपवीतयोरवश्यमेकस्मिन् पार्श्वे वस्त्रमधः पतेत् । अतः प्राप्तेऽर्थे 'मनुष्याणाम्' इति षष्ठीश्रुतिर्न विधायिका । न च प्रकरणात्क्रत्वङ्गत्वेन विधिः, वाक्यभेदप्रसङ्गात् । उपवीतं तावद्विधीयते । अन्यथा "देवलक्ष्ममेव तत्कुरुते" इति प्रशंसावैयर्थ्यापत्तेः । तस्मिंश्चोपवीतविधावर्थवादत्वेन निवीतप्राचीनावीतयोरेकवाक्यत्वसम्भवे पृथग्विधानमयुक्तम् । निवीतप्राचीनावीते मनुष्यपितृविषयत्वाद्दैविके कर्मण्ययोग्ये, उपवीतं तु योग्यमिति व्यतिरेकमुखेन स्तावकं निवीतम् । तस्मात् अर्थवादः ॥

इति प्रथमं निवीताधिकरणम् ॥ १ ॥

---

## अथ द्वितीयमुपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥ २ ॥

द्वितीयाधिकरणमारचयति—

**सर्वार्थमुत दर्शार्थमुपव्ययत इत्यदः ।**
**सर्वार्थमग्निहोत्रे स्यादुपवीतीति लिङ्गतः ॥ ३ ॥**
**दर्शाद्यर्थं प्रकरणाल्लिङ्गे स्यात्सिद्धिरन्यथा ।**
**दोहं मृताग्निहोत्रस्य स्तोतुमेतदनूदितम् ॥ ४ ॥**

(३)"यज्ञोपवीती हि देवेभ्यो दोहयति" इत्येवमग्निहोत्रे यज्ञोपवीतस्य सिद्धवद-

---

१. दर्शपूर्णमासयोर्दक्षिणात्वेन ऋत्विग्भ्यो देय ओदनोऽन्वाहार्यमित्युच्यते ।

२. तै. आ. २. १. २.

३. देवेभ्य इत्यनेन जीवदवस्था लक्ष्यते । जीवदवस्थायां यदग्निहोत्रं क्रियते तत्र तदीयहविरर्थं यज्ञोपवीती सन् गां दुह्यादिति विषयवाक्यार्थः ।

नुवादेन लिङ्गेन सर्वकर्मार्थमुपवीतमिति **चेत्**—

**न**; लिङ्गस्याऽन्यथोपपत्तेः। (१)मृताग्निहोत्रं तस्मिन्दिनेऽन्येन हूयते। तत्र "प्राचीनावीती दोहयेत्" इति विधाय तस्य स्तुतये "यज्ञोपवीती" इत्याद्यनूदितम्। अतो लिङ्गाभासेन बाधासम्भवात् करणाद्दर्शपूर्णमासाङ्गमुपवीतम् ॥

इति द्वितीयमुपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥ २ ॥



## अथ तृतीयं उपवीतवाक्यस्य विधित्वाधिकरणम् ॥ ३ ॥

तृतीयाधिकरणमारचयति—

**उपव्यानेऽनुवादो वा विधिर्वाऽऽद्यो यतः स्मृतौ।**
**प्राप्तं, मैवमपूर्वत्वात्क्रतौ लेटा विधीयते ॥ ५ ॥**

(२)"नित्योदकी नित्ययज्ञोपवीती" इति स्मृत्या प्राप्तस्य "उपव्ययते" इत्ययमनुवाद इति **चेत्**—

**मैवम्**; पुरुषार्थस्य प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात्पञ्चमलकारेण दर्शपूर्णमासाङ्गतया विधीयते ॥

इति तृतीयं उपवीतवाक्यस्य विधित्वाधिकरणम् ॥ ३ ॥



## अथ चतुर्थं उदक्त्वाधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**उपवीती हि देवेभ्यः पुरोदञ्चो द्वयं विधिः।**
**वादो वाऽस्याऽन्यतोऽप्राप्तेरपूर्वार्थो विधीयते ॥ ६ ॥**
**हियच्छब्दद्वयाद्वादः स्मृत्युपव्यानतो द्वयम्।**
**सम्प्राप्तं दक्षिणाग्रत्वप्राचीनावीतयोः स्तुतिः ॥ ७ ॥**

---

१. यजमाने मृते सति तद्दाहात् पूर्वं मध्यपातिषु सायंप्रातःकालेषु तत्पुत्रादिनाऽनुष्ठेयत्वेन विहितमग्निहोत्रं मृताग्निहोत्रं प्रेताग्निहोत्रं वोच्यते। "तस्याऽभिवान्यवत्सायै पयसाऽग्निहोत्रं जुहुयात् आशरीरस्याऽग्निभिरसंस्पर्शात्" इत्यापस्तम्बः। (आप. श्रौ. ९. ११.) अभिवान्यवत्सा मृतवत्सा षष्ठ्यर्थे चतुर्थी।

२. 'नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी वृषलान्नवर्जी। ऋतौ च गच्छन्

प्रेताग्निहोत्रे श्रूयते—(१)"प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति" इति, (२)"ये पुरोदञ्चो दर्भाः तान् दक्षिणाग्रान्स्तृणीयात्" इति । तत्र मृतस्याऽग्निहोत्रे दोहने प्राचीनावीतम्, दर्भास्तरणे दक्षिणाग्रत्वं च यथा विधीयते, तथा मरणात्पूर्वं जीवतोऽग्निहोत्रे दोहनाङ्गमुपवीतम्, दर्भास्तरणाङ्गमुत्तराग्रत्वं च विधातव्यम् । 'देवेभ्यो यज्ञोपवीती दोहयेत्' 'मरणात्पुरा ये दर्भास्त उदञ्चः कार्याः' इति वचनव्यक्तिः । न ह्येतदुभयमन्यतः प्राप्तम् । तस्मात् अपूर्वार्थौ विधीयतामिति चेत्—

मैवम्; हिशब्देन यच्छब्देन चोभयत्राऽनुवादत्वप्रतीतेः । अस्ति च तयोः प्राप्तिः । "अग्रवन्त्युदगग्राणि" इति स्मृत्या सर्वस्मिन्दैविके कर्मणि प्राप्तमुत्तराग्रत्वमनूद्य विधेयं दक्षिणाग्रत्वं स्तूयते । तथा दर्शपूर्णमासयोः "उपव्ययते" इत्यनेन विधिना प्राप्तं दैविकमुपवीतमनूद्य विधेयं प्राचीनावीतं स्तूयते । तस्मादनुवादः ॥

इति चतुर्थं उदक्त्वाधिकरणम् ॥ ४ ॥

---

अथ पञ्चमं उपरिधारणविध्यधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

**धारयत्युपरिष्टाद्धि देवेभ्य इति संस्तवः ।**
**विधिर्वाऽऽद्यो धृतेः पित्र्ये प्रोक्तायाः पूर्ववत्स्तुतिः ॥ ८ ॥**
**ऊर्ध्वं विधारणं प्राप्तं समिधो नाऽन्यमानतः ।**
**अतो हिशब्दसंत्यागादपूर्वार्थो विधीयते ॥ ९ ॥**

प्रेताग्निहोत्र एव श्रूयते—(३)"अधस्तात्समिधं धारयन्ननुद्रवेत्, उपरि हि

---

विधिवच्च जुहुत् न ब्राह्मणश्च्यवते ब्रह्मलोकात्' । बौ. ध. २. ३. १. स्पष्टार्थमिदम् ।

१. श. ब्रा. १२. २. ७. ६. अस्यार्थो द्वितीयाधिकरणे उक्तः ।

२. आप. श्रौ. ८. ११. ८. पुरा जीवदवस्थाकाग्निहोत्रे यत्रोदगग्रतया दर्भास्स्तृताः, तत्रेदानीं मृताग्निहोत्रे दक्षिणाग्रतया ते स्तरितव्या इति वाक्यार्थः ।

३. "पालाशीं समिधं प्रादेशमात्रीमुपरि धारयन् गार्हपत्यस्य समयार्चिर्हरति" । (आप. श्रौ. ६.८. ५.) अग्निहोत्रहवणीं हविषा पूरयित्वा तां हस्ते धारयामाणः होमार्थं गार्हपत्यं गच्छेत् । तदानीं अग्निहोत्रहवण्या उपरि काञ्चन समिधं पलाशवृक्षीयां निधाय गन्तव्यम् । सा च समित् होमार्था । तस्याश्चोपरिधारणं जीवदग्निहोत्रे कर्तव्यम् । मृताग्निहोत्रे तु अग्निहोत्रहवण्या अधस्तात् धारयन् गच्छेत् इति प्रकृतविषयशुद्धिः ।

देवेभ्यो धारयति" इति । अत्र 'पित्र्यं हविर्होतुं हस्ते धारयन्यदा मन्त्रं पठति, तदानीं स्रुग्दण्डस्याऽधस्तात्समिधं धारयेत्' इति यद्विधीयते, तदेतद्दैविकेनोपरिधारणेन स्तूयते । हिशब्देन पूर्वाधिकरण इवाऽनुवादत्वप्रतीतेरिति **चेत्—**

**मैवम्**; दैविके हविषि स्रुग्दण्डस्योपरि समिद्धारणस्याऽपूर्वार्थत्वेन विधातव्यत्वात् । अनुवादत्वगमको हिशब्दोऽसंभवादुपेक्षणीयः ॥

इति पञ्चमं उपरिधारणविध्यधिकरणम् ॥ ५ ॥

---

### अथ षष्ठं दिग्विभागाधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**दिशं प्रतीचीं मनुजा व्यभजन्तेत्यसौ विधिः ।**
**वादो वाऽत्र पुराकल्पस्तुत्यर्थो विधिमर्हति ॥ १० ॥**
**प्राचीनवंशवाक्योक्तेर्विधावस्यैकवाक्यतः ।**
**दिग्विभागोऽर्थवादोऽयमुपवीते निवीतवत् ॥ ११ ॥**

**ज्योतिष्टोमे** श्रूयते—(१)"प्राचीनवंशं करोति, देवमनुष्या दिशो व्यभजन्त प्राचीं देवाः, दक्षिणा पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः, यत्प्राचीनवंशं करोति देवलोकमेव तद्यजमान उपावर्तते" इति । तत्र देवादीनां कर्मानधिकारान्न तत्र विधिशङ्का । मनुष्याः प्रतीचीं विभजेयुरित्येवं विधिः स्यात् । कुतः ? पुराकल्परूपेणाऽर्थवादेन स्तूयमानत्वात् । पूर्वपुरुषाचरितत्वाभिधानं पुराकल्पः । 'व्यभजन्त' इत्यनेन भूतार्थवाचिना तदभिधीयते । तस्मात् विधिरिति **पूर्वपक्षः ।**

---

१. (तै. सं. ६.१.१) ज्योतिष्टोमाख्ये प्रकृतिभूतसोमयागे दीक्षोपसत्प्रवर्ग्याद्यनुष्ठानार्थं निर्मीयमाणः मण्डपविशेषः प्राचीनवंशः, प्राग्वंश इति वोच्यते । प्राचीनः प्रागग्रः पृष्ठवंशः ( मध्यवंशः ) यस्मिन् मण्डपे स प्राचीनवंशः । तत्रत्यास्सर्वे वंशाः प्रागग्रा भवेयुरित्यपि केचित् । तै. सं. भाष्ये १ भागे २२२ पृष्ठे (पुना सं.) द्रष्टव्यम् । देवमनुष्या इत्यादेरयमर्थः—देवाः, पितरो, मनुष्याः, रुद्राश्च प्राच्यादीर्दिशः आत्मार्थं विभागमकुर्वन् । तत्र देवाः प्राचीं दिशमगृह्णन्—अस्मत्कार्येषु इयमेव दिगस्त्विति । एवं पितरो दक्षिणां दिशं, मनुष्याः प्रतिचीम्, रुद्रा उदीचीम् । अतो मण्डपस्याऽस्य देवसम्बन्धित्वात् प्राचीनवंशत्वं युक्तम् । तेन च यजमानो देवलोकं प्राप्नोतीति । तत्र 'प्राचीनवंशं करोति' इति विधिः । 'देवमनुष्या' इत्यादिरर्थवादः ।

**सिद्धान्तस्तु**--यस्य मण्डपविशेषस्योपरिवंशाः प्रागग्रा भवन्ति स प्राचीनवंशः । तद्विध्येकवाक्यत्वावगमादर्थवादः । सायंकालीनाघ्योंदौ प्रतीची प्राप्त ॥

इति षष्ठं दिग्विभागाधिकरणम् ॥ ६ ॥

---

**अथ सप्तमं परुषिदिताद्यधिकरणम् ॥ ७ ॥**

सप्तमाधिकरणमारचयति—

**परुषि छिन्नमित्युक्त्या बर्हिषस्तु समूलताम् ।**
**घृतं दैवं मस्तु पित्र्यमित्युक्त्या नवनीतकम् ॥ १२ ॥**
**यो विदग्धः स इत्युक्त्या पुरोडाशस्य पक्वताम् ।**
**स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत् ॥ १३ ॥**

(१)**दर्शपूर्णमासयोः** पिण्डपितृयज्ञे श्रूयते—(२)"यत्परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्यणाम्, यत्समूलं तत्पितृणाम्, समूलं बर्हिर्भवति व्यावृत्त्यै" इति । परुः पर्व । दितं खण्डितम् । तथा ज्योतिष्टोमे दीक्षार्थाभ्यङ्गे श्रूयते—(३)"घृतं देवानां, मस्तु पितृणाम, निष्पक्वं मनुष्याणाम्, तद्वा एतत्सर्वदेवत्यं यन्नवनीतम्, यन्नवनीतेनाऽभ्यङ्क्ते सर्वा एव देवताः प्रीणाति" इति । (४)मस्तु दधिभवं मण्डम् । निष्पक्वं शिरसि प्रक्षेप्तुमीषद्विलीनं नवनीतं तक्रं वा । **दर्शपूर्णमासयोः** पुरोडाशश्रपणे श्रूयते-(५)"यो विदग्धः स नैर्ऋतः, योऽश्रृतः स रौद्रः, यः श्रृतः स सदेवः, तस्माद-

---

१. इदं तु चिन्त्यम् । साकमेधपर्वान्तर्गतमहापितृयज्ञ एवाऽस्य वाक्यस्य श्रवणात् ।

२. तै. ब्रा. १.६.८. यद्बर्हिः पर्वणि सन्धौ दितं लूनम्, तद्देवानामर्थे भवति । दैविकेषु कर्मसूपयोजयेदिति यावत् । यत् बर्हिः पर्वणः अग्रभागस्य च मध्ये खण्डितं, तत् मनुष्याणामर्थे । यत्तु मूलविशिष्टं, तत् पितॄणां प्रियम् । अतोऽस्मिन् पैतृके कार्ये बर्हिः समूलमेव भवेत् । किमर्थम् ? व्यावृत्त्यै दैविककर्मतो भेदज्ञापनाय ।

३. घृतमित्यादि । तै. सं. ६.१.१.

४. नवनीतस्य पाकजन्यास्तिस्रोऽवस्थाः—पक्वं, किञ्चित्पक्वं, निश्शेषपक्वं चेति । द्रव्यान्तरप्रक्षेपेण सुरभि निश्शेषपक्वमिति तैत्तिरीयभाष्ये सायणाचार्याः । अत्रत्योऽर्थस्तु तेन सह विरुन्धे ।

५. तै. सं. २.६.३. यः पुरोडाशो विशेषेण दग्धः कृष्णतामापद्यते स निर्ऋतिभागो भवेत् । यः अपक्वः ( अर्धपक्वः ) स रुद्रभागो भवेत् । यस्समुचितं पक्वः स देवार्हः । अतो यथा विदग्धो न भवेत् तथा पुरोडाशः पक्तव्यः ।

विदहता श्रपयितव्यः सदेवत्वाय" इति । विदग्धोऽत्यन्तपक्वः । अशृतोऽपक्वः । तत्र बर्हिषि समूलच्छेदस्य, अभ्यङ्गे नवनीतस्य, पुरोडाशे यथोचितपाकस्य च विधेयतया सर्वमवशिष्टं स्तावकम् । निवीतविचारस्यैवाऽयं प्रपञ्चः । एवं "यत्पूर्णं तन्मनुष्याणाम्" इत्यत्राऽपि द्रष्टव्यम् । तच्च चातुर्मास्येषु महापितृयज्ञे(१)"पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्या गोर्दुग्धे मन्थम्" इत्यत्र वत्सरहिताया अभिवानीशब्दाभिधेयाया धेन्वा दुग्धे पिष्टं प्रक्षिप्य क्रियमाणे मन्थने श्रूयते—(२) "यत्पूर्णं तन्मनुष्याणाम्, उपर्यर्धो देवानाम्, अर्धः पितृणाम्, अर्ध उपमन्थति, अर्धो हि पितृणाम्" इति । तत्र पात्रस्याऽधोभागरूपेणाऽर्धेन परिमिते दुग्धे मन्थनस्य कर्तव्यत्वात्सोऽर्धो विधीयते । स च पूर्णादिवाक्येन स्तूयते ॥

इति सप्तमं परुषिदितद्याधिकरणम् ॥७॥

## अथाऽष्टमं कर्त्रधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

> अनृतं न वदेद्वैधः पुंधर्मो वाऽनुवादगीः ।
> सक्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ ॥ १४ ॥
> अनृतोक्तेः पुमर्थत्वात्तन्निषेधस्तथाविधः ।
> स्मार्तानुवादः पुंस्क्रत्वोः श्रुतिप्रक्रिययोर्वशात् ॥ १५ ॥
> नाऽऽख्याते पुरुषानुक्तिः क्रतावेव प्रयाजवत् ।
> सत्योक्तिनियमादन्यः संयोगोऽतः क्रतौ विधिः ॥ १६ ॥

दर्शपूर्णमासप्रकरणे श्रूयते-(३)"नाऽनृतं वदेत्" इति । तत्र पुरुषधर्मत्वेनाऽयं प्रतिषेधो विधीयते । कुतः ? प्रतियोगिनोऽनृतवदनस्य पुरुषधर्मतया तन्निषेधस्याऽपि पुरुषधर्मत्वेनैव विधातव्यत्वात् । 'वदेत्' इत्याख्यातं तावत्कर्तृवाचकम् । तेनाऽऽख्यातेन कर्तुः प्रतीयमानत्वात् । पुरुषस्याऽऽख्यातप्रत्ययवाच्यत्वे सति प्रकृत्यर्थस्य वदनस्य पुरुषधर्मत्वं युक्तम् । "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन" इति शाब्दिकैरुद्घोषणात् । वदनस्य पुरुषधर्मत्वे तन्निषेधस्याऽपि पुरुषधर्मत्वं युक्तम् । अन्यथा भिन्नविषयत्वे बाधकत्वं न स्यात् । तस्मात्पुरुषवाचकाख्यातश्रुत्या प्रकरणं

---

१. २. तै. ब्रा. १.६.८.४. पात्रपूर्णमेव यत्किञ्चिद्वस्तु मनुष्याणां प्रियं भवति । पात्रे अर्धादुपर्यवस्थितं देवानां प्रियम् । अर्धभागावस्थितं पितृणामित्यर्थः ॥

३. तै. सं. २.५.५.६.

बाधित्वा पुरुषार्थोऽयं प्रतिषेधो विधीयते। अस्त्येव स्मार्तः प्रतिषेध इति चेत्—तर्हि तस्यैतच्छ्रुतिवाक्यं मूलमस्तु। तस्मात् पुरुषार्थ इत्येकः **पूर्वपक्षः**।

आख्यातश्रुतेः प्रकरणस्य चाऽविरोधाय क्रतुयुक्तपुरुषधर्मोऽस्तु। न ह्येतद्वाक्यं स्मृतेर्मूलम्, भिन्नविषयत्वात्। स्मृतिश्चोपनयनमारभ्याऽऽमरणं पुरुषस्याऽनृतं प्रतिषेधति। तन्मध्यपतितत्वात्क्रतावपि स्मार्तो निषेधः प्राप्त एव। तत उभयार्थोऽप्ययं प्रतिषेधो न विधीयते, किं त्वनूद्यत इति **द्वितीयः पूर्वपक्षः**।

आख्यातेन भावनाऽभिधीयते। कर्ता तु तदविनाभूतोऽर्थात्प्रतीयते। अतः श्रुत्यभावात्केवलेन प्रकरणेन प्रयाजादिवदारादुपकारकः क्रतावेव निविशते। न च तत्राऽपि विधीयते, किन्तु सार्वत्रिकस्य निषेधस्य क्रतावपि प्राप्तत्वादनूद्यत इति **तृतीयः पूर्वपक्षः**।

'सत्यमेव वदेत्, न त्वनृतम्' इति योऽयं स्मार्तनियमरूपः पुरुषार्थः संयोगः, तस्मादयमन्यः क्रत्वर्थः संयोगः। अतोऽप्राप्तत्वाद्विधीयते। एतद्व्यतिक्रमे क्रतोरेव वैगुण्यम्; न तु पुरुषस्य प्रत्यवायः। अतोऽत्र क्रतुगामि प्रायश्चित्तम्। पुरुषार्थनियमातिक्रमे तु पुरुषस्यैव प्रत्यवायो न क्रतोर्वैगुण्यम्। तत्र स्मार्तं प्रायश्चित्तं इति **विशेषः**॥

इत्यष्टमं कर्त्रधिकरणम् ॥ ८ ॥

## अथ नवमं जञ्जभ्यमानाधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**जञ्जभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत।**
**वाक्यादाद्यः प्रक्रियया द्वितीयोऽस्त्वविरुद्धया॥ १७॥**

**दर्शपूर्णमासप्रकरणे** श्रूयते—(१) "प्राणो वै दक्षः, अपानः क्रतुः, तस्माज्जञ्जभ्यमानो ब्रूयात् मयि दक्षक्रतू इति, प्राणापानावेवाऽऽत्मन् धत्ते" इति। गात्रविनामेन विदारितमुखः पुरुषो जञ्जभ्यमानः। तस्य वाक्यान्मन्त्रोक्तिः प्रतीयते। वाक्यं च प्रकरणाद्बलीयः। तस्मात् केवलं पुंधर्म **इति चेत्**—

**मैवम्**; क्रतावपि जञ्जभ्यमानपुरुषसंभवेन वाक्यप्रकरणयोर्विरोधाभावे सत्युभाभ्यां क्रतुयुक्तपुरुषसंस्कारत्वावगमात्॥

इति नवमं जञ्जभ्यमानाधिकरणम् ॥ ९ ॥

---

१. प्राण इत्यादि. तै.सं.२. ५. २. ४. जभ 'गात्रविनामे' इति धातोर्निष्पन्नो जञ्जभ्यमानशब्दः। जृम्भां कुर्वन्नित्यर्थः। दर्शपूर्णमासकर्ममध्ये जृम्भां कुर्वन् यजमानो 'मयि दक्षक्रतू' इति मन्त्रं पठेत्। तेन प्राणमपानं चाऽऽत्मानि स्थापयतीति विषयवाक्यार्थः।

## अथ दशममवगोरणाधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**विप्रायाऽवगुरेन्नेति क्रत्वर्थो वा पुमर्थता ।**
**फलवत्क्रतुसान्निध्यात्क्रत्वर्थः पूर्वमन्त्रवत् ॥ १८ ॥**
**यातनापरिहारस्य निषेधफलतोचिता ।**
**निषेधोऽयं पुमर्थत्वात्प्रक्रियातोऽपकृष्यताम् ॥ १९ ॥**

**दर्शपूर्णमासप्रकरणे** श्रूयते—(१) "यो ब्राह्मणायाऽवगुरेत्तं शतेन यातयात् । तस्माद्ब्राह्मणाय नाऽवगुरेत्" इति । तत्र यथा पूर्वाधिकरणे मन्त्रपाठस्य फलरहितस्य फलवति क्रतावङ्गत्वं प्रकरणेनाऽवगम्यते, एवमत्राऽपि ब्राह्मणावज्ञानिषेधस्य क्रत्वङ्गत्वमिति **चेत्**—

**न**; वैषम्यात् । पूर्वत्र हि आत्मनि प्राणापानधारणं मन्त्रोच्चारणफलं न सम्भवति, तस्य प्रागेव सिद्धत्वात् । इह तु अवगोरणे शतसंवत्सरयातनामुपन्यस्याऽवगोरणनिषेधाद्यातनापरिहारस्य निषेधफलत्वमुचितम् । तस्मात् निषेधस्य केवलपुरुषार्थतया प्रकरणादुत्कर्षो युक्तः ॥

इति दशममवगोरणाधिकरणम् ॥ १० ॥

---

## अथैकादशं मलवद्वासोधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**न संवदेत मलद्वाससेत्यपि पूर्ववत् ।**
**पुमर्थः स्यात्क्रतौ क्वापि संवादस्याऽप्रसक्तितः ॥ २० ॥**

**दर्शपूर्णमासप्रकरणे** श्रूयते—(२) "मलवद्वाससा न संवदेत" इति । अस्य निषेधस्य प्रकरणात्क्रत्वङ्गत्वमिति **चेत्**—

**मैवम्**; अप्रसक्तप्रतिषेधप्रसङ्गात् । (३) "यस्य व्रत्येऽहन् पत्न्यनालम्भुका भवति,

---

१. यः ब्राह्मणं प्रति अवगुरेत् हन्तुमुद्युञ्जीत तं शतेन यातयात्, शतसंवत्सरनिस्तार्यां नरकयातनामनुभावयेत् । अतः कारणात् ब्राह्मणं प्रति न कदाऽपि वधोद्यमं कुर्यात् । वधोऽत्र ताडनमात्रम् । ताडनार्थं दण्डोद्यमोऽवगोरणमिति खण्डदेवाशयः । अवज्ञामात्रमिति माधवाशयः । २. तै. सं. २. ५. १. मलवद्वासाः रजस्वला । ३. तै. ब्रा. ३. ७. १. ९. यस्य यजमानस्य पत्नी व्रत्येऽहनि यागानुष्ठानदिने

तामपरुध्य यजेत" इति रजस्वलाया निस्सारणेन क्रतौ तत्संवादस्याऽप्रसक्तिः । तस्मात् केवलपुरुषार्थस्याऽस्य प्रकरणादुत्कर्षः ॥

इत्येकादशं मलवद्वासोधिकरणम् ॥ ११ ॥

---

## अथ द्वादशं हिरण्यधारणाधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**हिरण्यं वर्णवद्धार्यं क्रत्वङ्गं भरणं भवेत् ।**
**हिरण्यसंस्कृतिर्वाऽत्र वर्णो वोत पुमर्थता ॥ २१ ॥**
**वैदिकत्वात्क्रतुस्मृत्या तदङ्गं कर्मकारके ।**
**प्राधान्यात्संस्कृतिर्वर्णो गुणोऽस्तु विधिलाघवात् ॥ २२ ॥**
**अनारभ्य श्रुतत्वेन नियता न क्रतुस्मृतिः ।**
**अतः पुमर्थता स्वर्गः कल्प्योऽन्यद्वाऽस्तु रात्रिवत् ॥ २३ ॥**

**अनारभ्य श्रूयते**—(१)"तस्मात्सुवर्णं हिरण्यं भार्यम् । सुवर्ण एव भवति । दुर्वर्णोऽस्य भ्रातृव्यो भवति" इति । तत्र यदेतच्छोभनवर्णोपेतहिरण्यधारणं तस्य वैदिकक्रियारूपत्वेन क्रतुस्मारकत्वात्क्रत्वङ्गं धारणमित्येकः **पक्षः** ।

क्रत्वङ्गत्वेऽपि नाऽऽरादुपकारकम् । किन्तु क्रतुगतं हिरण्यं धारणेन संस्क्रियते । 'भार्यम्' इत्यत्र ण्यत्प्रत्ययस्य कर्मणि विहितत्वेन कर्मकारकस्य हिरण्यस्य प्राधान्याव-गमादिति **द्वितीयः पक्षः** ।

वर्णविशिष्टधारणविधाने गौरवाद्धारणसहितं हिरण्यमनूद्य शोभनवर्णमात्रं विधेय-मिति **तृतीयः पक्षः** । त्रेधाऽपि क्रत्वर्थो विधिः, न तु पुरुषार्थ **इति प्राप्ते**—

**ब्रूमः**—यद्धि क्रतुप्रकरणे श्रुतम्, तस्याऽस्ति नियमेन क्रतुस्मारकत्वम् । इदं त्वनारभ्याऽधीतम् । न चाऽत्र हिरण्यं जुह्वादिवत्क्रतावव्यभिचरितम्, येन क्रतुस्मृति-र्नियम्येत । ननु संस्कार्यत्वान्यथानुपपत्त्या क्रतुप्रवेशः स्यात् । न हि धारणेन संस्कृ-

---

अनालम्भुका अस्पृश्या रजस्वलेति यावत्, तां अपरुध्य यज्ञशालातो बहिरेव निरुध्य यागं कुर्यात् इत्यर्थः ।

१. तै. ब्रा. २. २. ४. ५. ( यस्मादेवं प्रजापतेः प्रियं शरीरमेव सुवर्णमभवत् ) तस्मात् पुरुषेण हस्तकर्णादौ कटककुण्डलादिरूपेण सुवर्णधारणं कर्तव्यम् । तेन च लोकद्वयेऽपि रमणीयो भवति । अस्य शत्रुः दुर्वर्णो भवति इत्यर्थः ।

तस्य हिरण्यस्य लौकिकः कश्चिदुपयोगोऽस्ति इति चेत्—न; क्रतावप्युपयोगाभावात्। क्रतूपयोगोऽपि कल्प्यत इति चेत्—न; क्रतूपयोगित्वेन संस्कार्यत्वम्, तेन च क्रतूपयोगः इत्यन्योन्याश्रयात्। न च कर्मकारकत्वात्संस्कार्यत्वम्, परसमवेतक्रियाफलशालित्वमात्रस्य कर्मलक्षणत्वात्। अतः क्रतौ नियन्तुमशक्यत्वात्पुरुषार्थमिदं धारणम्। न चाऽत्र फलाभावः, विश्वजिन्न्यायेन स्वर्गस्य कल्प्यत्वात्। अथवा रात्रिसत्रे यथा वाक्यशेषेणाऽर्थवादेन श्रुता प्रतिष्ठा फलत्वेन कल्पिता, तथाऽत्रापि "सुवर्ण एव भवति, दुर्वर्णोऽस्य भ्रातृव्यः" इत्यर्थवादगतं फलमस्तु। तस्मात् पुरुषार्थो धारणविधिः॥

इति द्वादशं हिरण्यधारणाधिकरणम्॥ १२॥

अथ त्रयोदशं जयादीनां वैदिककर्माङ्गत्वाधिकरणम्॥ १३॥

त्रयोदशाधिकरणमारचयति—

**येनेर्त्सेत्कर्मणा तत्र जयहोमेऽखिलार्थता।**
**वैदिकेष्वेव वा सर्वशेषोऽसंकोचकृत्त्वतः॥ २४॥**
**होम आहवनीये स्यात्कृष्यादिषु न सोऽस्ति हि।**
**तेनाऽनारभ्यपाठेऽपि वैदिकेष्वेव ते जयाः॥ २५॥**

अनारभ्य श्रूयते—(१)"येन कर्मणेर्त्सेत्, तत्र जयान् जुहुयात्" "राष्ट्रभृतो जुहोति" "अभ्यातानाञ्जुहोति" इति। ईर्त्सेदृद्धिमिच्छेत्। "चित्तं च स्वाहा" इत्यादयो जयाः। "ऋताषाड्" इत्यादयो राष्ट्रभृतः। "अग्निर्भूतानाम्' इत्यादयोऽभ्यातानाः। तत्र वैदिकर्मणेव लौकिककृष्यादिकर्मणाऽप्यृद्धेरिष्यमाणत्वात्, संकोचे कारणाभावाज्जयादिहोमः सर्वशेष इति चेत्—

मैवम्; (२)"यदाहवनीये जुह्वति, तेन सोऽस्याभीष्टः प्रीतः" इति वाक्येन होममुद्दिश्याऽऽहवनीयविधानात्। कृष्यादौ तदभावाद्वैदिकेष्वेव जयादिहोमः॥

इति त्रयोदशं जयादीनां वैदिककर्माङ्गत्वाधिकरणम्॥ १३॥

---

१. येन कर्मणाऽनुष्ठितेन तदुक्तफलापेक्षयाऽधिकफलप्राप्तिरूपां ऋद्धिं प्राप्तुमभिलषेत् तस्मिन् कर्मणि जयाख्यान् 'चित्तं च' इत्यादिमन्त्रकरणकान् त्रयोदश होमान् जुहुयात्। एवं "अग्निर्भूतानामधिपतिः" इत्यादिमन्त्रकरणका अष्टादशाऽऽहुतीः, ऋताषाडृतधामा' इत्यादिमन्त्रसाध्याः द्वाविंशतिमाहुतीश्च जुहुयादित्यर्थः। तै.सं. ३.४.६.१. एतेषां जयाभ्यातानराष्ट्रभृच्छब्दवाच्यत्वं देवानां जयप्राप्तिहेतुत्वात् असुरपराभवहेतुत्वात् राष्ट्रप्रापकत्वाच क्रमशो बोध्यम्। विस्तरस्तु तैत्तिरियसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके चतुर्थपञ्चमषष्ठेष्वनुवाकेष्ववगन्तव्यः।

२. तै.ब्रा. १. १. १०. ५. अत्राऽऽहवनीये इति सप्तम्या आहवनीयस्याऽधिकर-

अथ चतुर्दशमश्वप्रतिग्रहेष्ट्यधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते ।
दानद्वये लौकिके वा वैदिके वा भवेदियम् ॥ २६ ॥
अविशेषाद्द्वयोर्यद्वा 'न देयः केसरी'त्यतः ।
निषेधाल्लौकिकात्तत्र प्रायश्चित्तिरियं भवेत् ॥ २७ ॥
न जलोदरहेतुत्वं प्रमितं लौकिकं क्वचित् ।
वैदिके तु श्रुतं तस्मात्तत्प्रायश्चित्तयेऽत्र सा ॥ २८ ॥

इदमाम्नायते—"(१)यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति । तत्र 'प्रतिग्रहशब्दो दानपरः' इत्यनन्तरमेव वक्ष्यते । तत्र विशेषाश्रवणाल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टिः इत्येकः पक्षः ।

(२) "न केसरिणो ददाति" इति स्मृत्या मित्रदायादादिभ्यः प्रीत्या क्रियमाणं लौकिकमश्वदानं निषिद्धम् । तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिरिति द्वितीयः पक्षः ।

"वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति" इत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते । न च लौकिकस्याऽश्वदानस्य तद्धेतुत्वं प्रमितम् । वैदिकस्य तु जन्मान्तरविषयं दोषश्रवणम् । अतो वैदिकदाने सेष्टिः प्रायश्चित्तम् । अस्ति हि वैदिकमश्वदानम् (३) "वडवा दक्षिणा" इत्यादिश्रवणात् ॥

इति चतुर्दशमश्वप्रतिग्रहेष्ट्यधिकरणम् ॥ १४ ॥

---

णत्वं धात्वर्थस्य च होमस्योद्देश्यत्वम् । आहवनीये होमं करोतीति यत् तेन सः आहवनीयरूपोऽग्निः अस्मै यजमानाय प्रीतस्सन्नभीष्टप्रदो भवतीत्यर्थः ।

१. तै. सं. २. ३. १२. १. "प्रजापतिर्वरुणायाऽश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपत् ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत् वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान् मुञ्चति" इति समग्रो भागः । अस्याऽर्थः—कदाचित् प्रजापतिः वरुणायाऽश्वमदात्, ततः स प्रजापतिः स्वां वरुणरूपां देवतां जलोदररूपेण प्राप्तवान् । दानानन्तरमेव तस्य जलोदराख्यो रोगस्समजनि इत्यर्थः । तेन परिदीर्णस्सः एतं चतुष्कपालपुरोडाशद्रव्यकं वरुणदेवताकं यागं दृष्ट्वा तेन वरुणमयजत्, ततस्स रोगमुक्तोऽभवत् । अतश्चेदानीमपि योऽश्वं ददाति स जलोदररोगग्रस्तो भवेत् । तत्परिहाराय यावत्संख्याकानश्वान् दद्यात् तावत्संख्याका इष्टीः कुर्यात् । तेन तृप्तो वरुण एनं तस्मान्मोचयेत् इति ।
२. केसराः कण्ठलम्बीनि रोमाणि तद्वन्तः केसरिणः अश्वगर्दभसिंहादयः । ३. तै. सं. १. ८. २१

अथ पञ्चदशं दातुरश्वप्रतिग्रहेष्ट्यधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**यावतः प्रातगृह्णीयादश्वांस्तावत्य इष्टयः ।**
**प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि ॥ २९ ॥**
**असञ्जातविरोध्यर्थवादाद्दातुः प्रजापतेः ।**
**इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत् ॥ ३० ॥**

पूर्वोदाहृते वाक्ये 'प्रतिगृह्णीयात्'इति विधिपदश्रवणात्प्रतिग्रहीतुरिष्टिरिति चेत्— न; उपक्रमरूपेणाऽर्थवादेन दातुस्तदिष्टिप्रतीतेः । उपक्रमश्चैवं श्रूयते—"प्रजापतिर्वरुणायाऽश्वमनयत्, स स्वां देवतामार्च्छत्। स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तं निरवपत्, ततो वै स वरुणपाशादमुच्यत" इति । अनयद्दत्तवान् । स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान् । तेन च रोगेण ग्रस्तः स प्रजापतिर्विदीर्णो भूत्वा रोगपरिहारायेष्टिं कृत्वा रोगादमुच्यत इत्यत्र दातुरिष्टिरित्यवगम्यते । असञ्जातविरोध्युपक्रमानुसारेण विधायकपदमपि 'प्रतिग्राहयेत्' इत्येवमन्तर्भावितणिजर्थपरतया व्याख्येयम् ॥

इति पञ्चदशं दातुरश्वप्रतिग्रहेष्ट्यधिकरणम् ॥ १५ ॥

---

अथ षोडशं पानव्यापदधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**सोमवामिचरुर्लोके वेदे वेन्द्रियसंक्षयः ।**
**दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः ॥ ३१ ॥**
**अदोषो वमनायैव लोके पानं श्रुतौ पुनः ।**
**जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः ॥ ३२ ॥**

**इदमाम्नायते**—(१)"सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः" इति । तत्र लौकिके सोमवमने विहितोऽयं चरुः । कुतः? (२)"इन्द्रियेण वा एष वीर्येण व्यृध्यते यः सोमं वमिति" इति दृष्टदोषमुपन्यस्य तच्छान्तये चरुविधानादिति **चेत्**— **मैवम्**; लोके धातुसाम्यार्थिनो वमनायैव सोमस्य पाने सति वमनस्य दोषहेतु-

---

१. मै. सं. २.२.१३.　　२. मै. सं. २.२.१३.

त्वाभावात् । वेदे तु (१)"हिन्व मे गात्रा हरिवः" इत्यनेन मन्त्रेण जरयितुं सोमः पीयते । तत्र वमनप्रायश्चित्तार्थोऽयं चरुः ॥

इति षोडशं पानव्यापदधिकरणम् ॥ १६ ॥

### अथ सप्तदशं यजमानवमने इष्टिविधानाधिकरणम् ॥ १७ ॥

सप्तदशाधिकरणमारचयति—

**ऋत्विजां वमनेऽप्येष कर्तुरेवोत वर्जनात् ।**
**विशेषस्याऽग्रिमो मैवं कर्तुरेव निरुप्तितः ॥ ३३ ॥**

'ईदृशस्य सोमस्य वमने चरुः' इति विशेषस्याऽभावादृत्विजां यजमानस्य च वमने सर्वत्राऽसौ चरुरिति चेत्—

मैवम्; 'यो वमति स निर्वपति' इति निर्वप्तुर्वमनं चरुनिमित्तम् । निर्वप्ता च यजमानः । ऋत्विजो निर्वप्तृत्वेऽधिकार्यन्तरत्वप्रसङ्गात् । तस्मात् यजमानस्यैव वमने चरुविधिः ॥

इति सप्तदशं यजमानवमने इष्टिविधानाधिकरणम् ॥ १७ ॥

### अथाऽष्टादशं सर्वप्रदानाधिकरणम् ॥ १८ ॥

अष्टादशाधिकरणमारचयति—

**यागे हविस्त्यजेत्कृत्स्नं कोऽप्यंशः शिष्यतेऽपि वा ।**
**देवार्थत्वाद्यजेत्सर्वं शिष्यते द्विरवत्ततः ॥ ३४ ॥**

(२)"आग्नेयोऽष्टाकपालः" इत्यत्र कृत्स्नोऽपि पुरोडाशोऽग्नये त्यक्तव्यः । तद्धितेन कृत्स्नस्याऽग्निदेवतासम्बन्धावगतेः त्यागमन्तरेणैतदनुपपत्तेः इति चेत्—

मैवम्; "द्विर्हविषोऽवद्यति" इत्यवदानद्वयं श्रूयते । अवदेयं चाऽङ्गुष्ठपर्वमात्रम् । तथा च कल्पसूत्रकारः—(३)"आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं

---

१. अस्याऽर्थः ३.२.१४. अधिकरणे विवृतः ।  २. तै. सं. २.६.३.३.

३. आप. श्रौ. सू. २.१८.९. अङ्गुष्ठपर्व अङ्गुष्ठस्योत्तमं काण्डम् । तिरिश्चीनं तिर्यग्भिरङ्गुल्यङ्गुष्ठैर्यथाऽवदानं सम्पद्येत तथा ।

तिरश्चीनमवद्यति" इति । ततो हविषः सकाशादङ्गुष्ठपर्वद्वयमात्रं खण्डयित्वा त्यक्तव्यम् । इतरच्छेषणीयम् । देवतासम्बन्धश्चांऽशद्वारेणाऽप्युपयुज्यते ॥

इत्यष्टादशं सर्वप्रदानाधिकरणम् ॥ १८ ॥

---

**अथैकोनविंशं सर्वेभ्यस्स्विष्टकृदनुष्ठानाधिकरणम् ॥ १९ ॥**

एकोनविंशाधिकरणमारचयति—

**शेषात्स्विष्टकृदेकस्मात्सर्वेभ्यो वैकृतः कृते ।**
**शास्त्रार्थसिद्धिः, सर्वेभ्यः कार्यः संस्कारसाम्यतः ॥ ३५ ॥**

**दर्शपूर्णमासयोः** श्रूयते—"शेषात्स्विष्टकृते समवद्यति" इति । तत्र आग्नेयादीनां त्रयाणां हविषां मध्ये यस्य कस्यचिदेकस्य हविषः शेषादवदातव्यम् । तावतैव शास्त्रार्थानुष्ठानसिद्धेरिति **चेत्**—

**मैवम्**; उपयुक्तं हविः संस्कर्तुमिदमवदीयते । संस्कारश्च सर्वेष्वपि हविष्षु समानः । तस्मात् सर्वेभ्यो हविश्शेषेभ्यः स्विष्टकृदनुष्ठेयः ॥

इत्येकोनविंशं सर्वेभ्यस्स्विष्टकृदनुष्ठानाधिकरणम् ॥ १९ ॥

---

**अथ विंशं प्राथमिकशेषात्स्विष्टकृदनुष्ठानाधिकरणम् ॥ २० ॥**

विंशाधिकरणमारचयति—

**यदैकस्मात्तदा मुख्यनियतिर्नोत विद्यते ।**
**नाऽश्रुतेरस्ति मुख्यातिक्रमणे हेत्वभावतः ॥ ३६ ॥**

'एकस्मादेव हविश्शेषात्स्विष्टकृत्' इति यः पूर्वाधिकरणे पूर्वपक्षः, तस्मिन् पक्षे नियामकस्याऽश्रुतत्वात् यस्मात्कस्माच्चिद्धविश्शेषात् इति प्राप्ते—

**ब्रूमः**—प्रथमातिक्रमे मानाभावात्प्रथमहविश्शेषेणैव संस्कारसिद्धावितरत्र प्राप्त्यभावादस्ति नियतिः ॥

इति विंशं प्राथमिकशेषात्स्विष्टकृदनुष्ठानाधिकरणम् ॥ २० ॥

---

अथैकविंशं चतुर्धाकरणभक्षणाधिकरणम् ॥ २१ ॥

एकविंशाधिकरणमारचयति—

इदं ब्रह्मण इत्युक्तिः क्रयार्था भक्षणाय वा ।
भक्षाश्रुतेः क्रयार्थाऽतो यथेष्टं तैर्नियुज्यताम् ॥ ३७ ॥
देवतायै समस्तस्य क्लृप्तत्वात्स्वामिता न हि ।
शेषस्य प्रतिपत्त्यर्थं भक्षणं तत्र युज्यते ॥ ३८ ॥

इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य चतुर्थः पादः ॥

---

चतुर्धाकृतपुरोडाशस्य भागान् यजमान एवं निर्दिशेत्—इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः, इति । सोऽयं निर्देशो न भक्षणार्थः, भक्षणस्याऽश्रुतत्वात् । ततो भृतिदानेन तानृत्विजः परिक्रेतुमयं निर्देशः कृतः । क्रयश्च तदङ्गीकारानुसारेण स्वल्पेनाऽप्युपपद्यते । तस्मात्स्वकीया भागास्तैरिच्छयोपयोक्तुं शक्या इति प्राप्ते—

ब्रूमः—"अग्नये जुष्टं निर्वपामि" इति कृत्स्नस्य हविषो देवतार्थं सङ्कल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावान्न युक्तः परिक्रयः । भक्षणं तु प्रतिपत्त्यर्थत्वाद्युक्तम् । अवशिष्टस्य यः कोऽप्युपयोगः प्रतिपत्तिः । पुरोडाशस्य भक्षणार्हत्वाद्भक्षणेन कर्मकराणामुत्साहजननाच्च भक्षणार्थोऽयं निर्देशो युज्यते ॥

इत्येकविंशं चतुर्धाकरणभक्षणाधिकरणम् ॥ २१ ॥

इति श्रीमाधवाचार्यविरचिते जैमिनीन्ययायमालाविस्तरे
तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

अथ तृतीयाध्यायस्य पञ्चमः पादः ॥ ५ ॥

तत्र प्रथमं उपांशुयाजहविषा शेषकार्याननुष्ठानाधिकरणम् ॥ १ ॥

पञ्चमपादस्य प्रथमाधिकरणमारचयति—

उपांशुयाजद्रव्येण शेषकार्यं भवेन्न वा ।
भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः ॥ १ ॥

**उक्ताज्यद्रव्यशेषस्तु भाव्युपस्तरणादिकृत् ।**
**अतो न प्रतिपत्त्यर्हः शेषकार्यं ततः कथम् ॥ २ ॥**

ध्रौवादाज्यादुपांशुयाजार्थमवदाने कृते तच्छेषेण ध्रौवेण द्रव्येण स्विष्टकृदादिकं शेषकार्यं कर्तव्यम् । कुतः ? "तद्यत्सर्वेभ्यो हविर्भ्यः समवद्यति" इति वाक्येन प्रापितत्वादिति चेत्—

**मैवम्** ; कृतार्थद्रव्यशेषो ह्युपयोगापेक्षः प्रतिपत्तिमर्हति । ध्रौवं त्वाज्यं न कृतार्थम् । तेन कर्तव्यानामुपस्तरणादीनां सद्भावात् । तस्मात् न तेन शेषकार्यं भवति ॥

इति प्रथमं उपांशुयाजहविषा शेषकार्याननुष्ठानाधिकरणम् ॥ १ ॥



**अथ द्वितीयं साकंप्रस्थायीये शेषकार्याननुष्ठानाधिकरणम् ॥ २ ॥**

द्वितीयाधिकरणमारचयति—

**आक्रामन्सह कुम्भीभिरस्ति शेषक्रिया न वा ।**
**जुह्वाऽवदानात्प्रकृताविव शेषक्रियोचिता ॥ ३ ॥**
**कुम्भीषु शेषासंसिद्धेः साकम्प्रस्थाय्यकर्मणि ।**
**न स्विष्टकृदिदं कार्यमग्नीधः स्रुक्प्रदानतः ॥ ४ ॥**

(१)"साकम्प्रस्थायीयेन यजेत पशुकामः" इति विहिते कर्मणि श्रूयते—"सह कुम्भीभिरभिक्रामन्नाह" इति । तत्र चतसृभिर्दधिपयःकुम्भीभिः सहाऽऽहवनीयोद्देशेऽभिक्रमणमात्रं श्रुतम् । न तु तत्र कुम्भीभिर्होमः श्रुतः । तथासत्यस्य कर्मणः सांनाय्यविकृतित्वाज्जुह्वा कुम्भीभ्योऽवदाय होतव्यम् । हुतशेषेण च स्विष्टकृदादिकं सांनाय्यशेषेणेव कर्तव्यमिति **प्राप्ते**—

**ब्रूमः**—नाऽत्र कुम्भीषु हुतशेषः सिध्यति, सांनाय्यवज्जुह्वा तदवदानाभावात् । (२)"अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्" इत्युक्त्या जुहूपभृतोः प्रत्तत्वादभिक्रमणस्य होमार्थत्वाच्च कुम्भीभिरेव दधिपयसोर्होमे सति कुम्भीमात्रमवशिष्यते । न तु हविश्शेषः । तत्र कुतः शेषकार्यम् ? ॥

इति द्वितीयं साकम्प्रस्थायीये शेषकार्याननुष्ठानाधिकरणम् ॥ २ ॥

---

१. तै. सं. २. ५ ४. ३. अत्रत्यो विषयसन्दर्भः २. ३. ४ (पृ. १०८) अधिकरणटिप्पणीतोऽवगन्तव्यः ।

२. आप. श्रौ. ३. १६. १७. ( अध्वर्युः ) अग्नीधे अग्नीध्रसंज्ञकायर्त्विजे स्वह-

## अथ तृतीयं सौत्रामण्यधिकरणम् ॥ ३ ॥

तृतीयाधिकरणमारचयति—

**सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वाऽस्ति तत् ।**
**शेषाणां न सुराक्षीरयोरन्यत्रोपयोगतः ॥ ५ ॥**

**सौत्रामणीनामके** यागे श्रूयते—"पयोग्रहाः सुराग्रहाश्च गृह्यन्ते" इति तत्र प्रकृतिगतसोमग्रहेष्विव शेषकार्यं स्विष्टकृदादिकमस्ति । न चाऽत्र पूर्ववच्छेषाभावः, "उच्छिनष्टि, न सर्वं जुहोति" इत्यवशेषयितव्यत्वश्रवणात् **इति चेत्—**

**मैवम्;** अवशिष्टस्याऽन्यत्रोपयोगश्रवणात्। (१)"ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्" इति श्रूयते । "यदि ब्राह्मणं न विन्देत्, वल्मीकवपायामवनयेत्"इति च । (२)"शतातृण्णायामवनयेत्"इति च। शतच्छिद्रा कुम्भी शतातृण्णा । तस्मात् नाऽस्ति स्विष्टकृदादिकम् ॥

इति तृतीयं सौत्रामण्यधिकरणम् ॥ ३ ॥

---

## अथ चतुर्थं सर्वपृष्ठेष्ट्यधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**रथन्तरादिभिर्भिन्ना इन्द्रास्तेषां न भिद्यते ।**
**पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा ॥ ६ ॥**
**भिद्यते कर्मणां भेदाच्चोदकैः पृथगुक्तितः ।**
**शेषस्य सर्वतुल्यत्वात्तत्कार्यं सकृदिष्यताम् ॥ ७ ॥**

(३)"य इन्द्रियकामो वीर्यकामः स्यात्, तमेतया सर्वपृष्ठया याजयेत्" इति विहितायामिष्टौ षडिन्द्रा एवं श्रूयन्ते—"इन्द्राय राथन्तराय, इन्द्राय बार्हताय, इन्द्राय वैरूपाय

---

स्तस्थिते जुहूपभृतौ दत्वा द्वे पयःकुंभ्यौ द्वे दधिकुंभ्यौ आहृत्य चतस्रः कुम्भीर्गृहीत्वा होमार्थं आहवनीयदेशं गच्छन् इत्यर्थः ।

१. तै. ब्रा. १. ८. ६. २. हुतहविश्शेषभक्षणस्याऽवश्यकत्वात् तत्स्वयमकृत्वा तत्करणार्थं ब्राह्मणं कञ्चन द्रव्यदानेनाऽऽनमयेत् । स एव सुराया हुतायाश्शेषं पिबेत् । यदि तादृशो ब्राह्मणो नोपलभ्येत तर्हि वल्मीकच्छिद्रे समवनयेत् ।

२. तै. ब्रा. १. ८. ६. ४. शतातृण्णा शतच्छिद्रा कुम्भी । तां दक्षिणाग्नेरुपरि धारयन् तत्र हुतशेषां सुरां निक्षिपेत् यथा सा दक्षिणाग्नौ निपतेत् ।

३. तै. सं. २.३. ७. १. सर्वपृष्ठा इतीष्टेर्नामधेयम् । रथन्तर, बृहत्, वैरूप,

इन्द्राय वैराजाय, इन्द्राय शाक्कराय, इन्द्राय रैवताय" इति । तत्र स्वरूपेणैकोऽपीन्द्रः पृष्ठस्तोत्रेषु षट्सु विहितानां षण्णां रथन्तरादिसाम्नां संबन्धेन विशेष्यमाणः षोढा भिद्यते। तासां सर्वासामिन्द्रदेवतानामेक एव पुरोडाशो विधीयते-(१)"द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय" इति । तस्मिंश्च पुरोडाशे प्रोक्तदेवताभ्यः पृथक्पृथक्प्रदानाय बहुभ्यः प्रदेशेभ्योऽवदानं श्रूयते—(२)"समन्तं पर्यवद्यति" इति । तत्र देवताभेदेन प्रदानभेदेन च कर्मणां भेदे सति पृथगतिदेशात्स्विष्टकृदिडादिशेषकार्याय षट्कृत्वः पृथक्कर्तव्यम् **इति चेत्—**

**मैवम्**; शेषस्यैकत्वेन तत्प्रतिपत्तेः पृथक्त्वासंभवात्। तस्मात् सकृदेव कार्यम् ॥

इति चतुर्थं सर्वपृष्ठेष्ट्यधिकरणम् ॥ ४ ॥

---

**अथ पञ्चममैन्द्रवायवे द्विर्भक्षणाधिकरणम् ॥ ५ ॥**

पञ्चमाधिकरणमारचयति—

**ऐन्द्रवायवशेषस्य सकृद्भक्ष उताऽसकृत् ।**
**पूर्वन्यायात्सकृत्प्राप्तौ द्विर्भक्षो वचनाद्भवेत् ॥ ८ ॥**

**ज्योतिष्टमे** योऽयमैन्द्रवायवग्रहः तत्र संस्कार्यस्य सोमस्यैकत्वात्सकृदेव शेषकार्यम् **इति चेत्—**

**मैवम्**; (३)"द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोति" इति वचनाद्विर्भक्षणम् ॥

इति पञ्चममैन्द्रवायवे द्विर्भक्षणाधिकरणम् ॥ ५ ॥

---

वैराज, शाक्वर, रैवताख्यानि षट् सामानि, सोमयागे पृष्ठस्तोत्रसाधनानि । तत्सम्बन्धादिन्द्रो राथन्तरो बार्हतश्च इत्यादिना व्यपदिश्यते । तद्देवताकत्वादिष्टिरियं सर्वपृष्ठेष्टिरित्यभिधीयते ।

१. २. तै. सं. २. ३. ७. २. प्रधानहोमार्थं परितः अवदानं कुर्यादित्यर्थः ।

३ ऐन्द्रवायवस्येति द्वितीयार्थे षष्ठी । ग्रहान्तरेषु सकृदेव भक्षणम । ऐन्द्रवायवस्य तु द्विः । तस्य वायवे, इन्द्रवायुभ्यां चेति वारद्वयं वषट्कारपाठात् इत्यर्थः ।

अथ षष्ठं सोमे शेषभक्षाधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**सोमेऽभक्षो भक्षो वा न भक्षो ग्रहहोमतः ।**
**अल्पोक्तेरस्ति शेषोऽस्य भक्षोऽपूर्ववचोबलात् ॥ ६ ॥**

सोमयागेषु शेषभक्षो नाऽस्ति, "यद्ग्रहं जुहोति" इति कृत्स्नग्रहेणाऽऽहुतिश्रवणात्कुम्भीष्विव शेषाभावात् इति चेत्—

**मैवम्**; "अल्पं जुहोति" इति विशेषवचनाच्छेषः सिध्यति । तद्भक्षणं त्वपूर्वार्थप्रतिपादकवचनेभ्योऽवगम्यते । "आश्विनं भक्षयन्ति" "द्विरैन्द्रवायवस्य भक्षयन्ति" "सदसि भक्षयन्ति" इत्यादीनि वचनान्यपूर्वार्थं प्रतिपादयन्ति । ततो भक्षविधानादस्ति सोमेषु भक्षः ।

इति षष्ठं सोमे शेषभक्षणाधिकरणम् ॥ ६ ॥

---

अथ सप्तमं चमसिनां शेषभक्षाधिकरणम् ॥ ७ ॥

सप्तमाधिकरणमारचयति—

**किं प्रैतु होतुश्चमस इत्यभक्षोऽथ भक्षणम् ।**
**अभक्षोऽनुक्तितो होतुश्चमसेत्याख्ययाऽस्तु तत् ॥ १० ॥**

ज्योतिष्टोमे श्रूयते—(१)"प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम्, प्रयजमानस्य, प्र यन्तु सदस्यानाम्" इति । तत्र वचनाभावादभक्षः इति चेत्—

**मैवम्**; समाख्यागते चमसशब्दे भक्षणस्य प्रतीयमानत्वात् । 'चम्यते भक्ष्यते सोमोऽस्मिन् पात्रविशेषे' इति हि तद्व्युत्पत्तिः । तस्मात् अस्ति तद्भक्षणम् ॥

इति सप्तमं चमसिनां शेषभक्षाधिकरणम् ॥ ७ ॥

---

अथाऽष्टमं ससुब्रह्मण्योद्गातृभक्षाधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**प्रोद्गातॄणामिति ह्येक उद्गाता भक्षयेदुत ।**
**सर्वेऽपि किं वा सुब्रह्मण्येनोक्ताः सामगायिनः ॥ ११ ॥**

---

१.श.ब्रा.४.१.६.२९. होतुश्चमसः प्रकर्षेणाऽऽगच्छतु भक्षणार्थमित्यर्थः । एवमग्रेऽपि ।

**सहितास्तेन ते वाऽऽद्य उद्गातृश्रुतितोऽखिलाः ।**
**बहुत्वाद्गानयोगेन तृतीयो रूढिबाधिते ॥ १२ ॥**
**योगे समाख्यया दण्डिन्यायादन्त्योऽत्र भाष्यगः ।**
**सदसि स्थित्यभावेन तृतीयो वार्तिकोदितः ॥ १३ ॥**

पूर्वोदाहृतवाक्ये "प्रोद्गातॄणाम्" इत्यत्रैकस्यैव भक्षः । उद्गीथशब्दाभिधेयायाः साम भक्तेरुद्गातर्युद्गातृप्रातिपदिकस्य रूढत्वात् इत्येकः **पूर्वपक्षः** ।

'उद्गातॄणाम्' इत्यस्य बहुत्वस्यैकस्मिन्नसंभवादुद्गात्रोपलक्षिताः षोडशर्त्विजः सर्वेऽपि भक्षयेयुः इति **द्वितीयः** ।

उद्गीथप्रस्तावप्रतिहारान्सामभागानुद्गातृप्रस्तोतृप्रतिहर्तारः प्रयोगकाले गायन्ति । 'उदुत्कर्षेण गायन्ति' इति योगेनोद्गातारस्त्रयो भक्षयेयुरिति **तृतीयः पक्षः** ।

"रूढिर्योगमपहरति" इति न्यायादेक एवोद्गाता । तेन च बहुवचनोपपत्तये प्रत्यासन्ना उपलक्ष्यन्ते । प्रत्यासत्तिश्च प्रस्तोतृप्रतिहर्त्रोरिव सुब्रह्मण्यस्याप्यऽस्ति । सामवेदाध्यायित्वेन सुब्रह्मण्याह्वानरूपे तदीयकर्मण्यप्यौद्गात्रसमाख्यायाः सत्त्वात् । तस्मात् 'सुब्रह्मण्येन सहिताश्चत्वारः सामगा भक्षयेयु' रित्ययमन्त्यः पक्षो **भाष्यकारस्याभिमतः**।

**वार्तिककारस्तु**—सदसो भक्षणस्थानत्वात्सुब्रह्मण्यस्य सदस्यप्रवेशात्तेन विरहिता अवशिष्टाः सामगा भक्षयन्तीति तृतीयं पक्षमङ्गीचकार ॥

इत्यष्टमं ससुब्रह्मण्योद्गातृभक्षणाधिकरणम् ॥ ८ ॥



अथ नवमं ग्रावस्तुतस्सोमभक्षणाधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**किं स्याच्चमसिनामेव हारियोजनभक्षणम् ।**
**सर्वेषां वाऽग्रिमस्तेषां पूर्ववाक्येण संनिधेः ॥ १४ ॥**
**लिप्सन्ते सर्व एवेति हारियोजनवाक्यतः ।**
**ग्रावस्तुतोऽप्यस्ति भक्षश्चमसित्वमकारणम् ॥ १५ ॥**

(१)"हरिरसि हारियोजनः" इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः । होतृब्रह्मादयश्चमसिनः । यस्तु चतुर्णां मध्ये चतुर्थो ग्रावस्तुन्नामकोऽस्ति, नाऽसौ च-

---

१. तै. सं. १. ४. २९. हे सोम ! त्वं हरितवर्णोऽसि हरितमश्वं रथे युनक्तीति हरियोजनः इन्द्रः, तत्सम्बन्धी हारियोजनः । इन्द्रदेवताक इत्यर्थः ।

मसी । तत्र चमसिनामेव हारियोजनभक्षणम् । कुतः ? (१)"यथाचमसमन्यांश्चमसां-श्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते" इत्यत्र पूर्ववाक्ये चमसिनां सन्निहितत्वेनोत्तरवाक्ये सर्वशब्देन तेषामेवाऽभिधातव्यत्वात् । अतो नाऽस्ति ग्रावस्तुतस्तत्र भक्ष इति प्राप्ते—

**ब्रूमः**—अथशब्देनैवकारेण च चमसिमात्रशङ्कामपोह्य वाक्येन विहितस्य सर्वभक्षणस्य सन्निधिमात्रेण संकोचायोगादस्ति ग्रावस्तुतोऽपि भक्षः । तस्मात् चमसित्वं न भक्षणे कारणम् ॥

इति नवमं ग्रावस्तुतस्सोमभक्षाधिकरणम् ॥९॥

---

अथ दशमं वषट्कर्तुः प्रथमभक्षाधिकरणम् ॥१०॥

दशमाधिकरणमारचयति—

**आद्यभक्षो वषट्कर्तुर्विधिः प्राथम्य एव किम् ।**
**किं वा तद्युक्तभक्षे स्याद्वषट्कारनिमित्तके ॥ १६ ॥**
**अप्राप्तेरग्रिमो, मैवं समासस्थित्यसंभवात् ।**
**विशिष्टस्य विधिस्तस्माद्वषट्कारोऽपि कारणम् ॥ १७ ॥**

(२)"वषट्कर्तुः प्रथमभक्षः" इत्येवं श्रूयते । वषट्कर्ता होता । तस्य भक्षणं समाख्यया प्राप्तम् । प्राथम्यं त्वप्राप्तमिति तदेवाऽत्र विधीयते इति चेत्—

**मैवम्**; 'प्रथमभक्षः' इत्यस्य समस्तपदत्वेन 'यो भक्षः, स प्रथमः' इत्येवं विच्छिद्याऽन्वेतुमयोग्यत्वात्प्राथम्यविशिष्टभक्षणमत्र विधीयते । तस्मिन् भक्षणे वषट्कारः कारणम् ॥

इति दशमं वषट्कर्तुः प्रथमभक्षाधिकरणम् ॥ १० ॥

---

अथैकादशं होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम् ॥११॥

एकादशाधिकरणमारचयति—

**आख्यावचोवषट्कारा एव किं भक्षहेतवः ।**
**किं वाऽभिषवहोमौ च तत्राऽऽद्योऽस्तूक्तया दिशा ॥ १८ ॥**

---

१. मा. श. ब्रा. ४. ४. ३. १०. चमसिनः होतृमैत्रावरुणादयः स्वं स्वं चमसं यथाधिकारं भक्षयन्ति । हारियोजनग्रहे तु सर्वेषां भागोऽस्ति इत्यर्थः ।

२. यो यस्मिन् ग्रहे चमसे वा याज्याया अधि वषट्करोति स तस्य ग्रहस्य प्रथमं भक्षयिता इत्यर्थः ।

**हविर्धानेऽभिषुत्याऽथ हुत्वा सदसि भक्षयेत् ।**
**इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरे ॥ १९ ॥**

"प्रैतु होतुश्चमसः" इत्यत्र समाख्या भक्षहेतुः, हारियोजने वाक्यम्, "वषट्कर्तुः प्रथमभक्षः" इत्यत्र वषट्कारः, इत्येवमुक्तत्वात्त्रय एव भक्षहेतव इति **चेत्—**

**मैवम्**; (१)"हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि (भक्षान्) भक्षयन्ति"इति श्रूयते । उत्तरवेद्याः प्रतीचीने सदसः प्राचीने मण्डपेऽभिषवः । उत्तरवेद्यां होमः । सदसि भक्षणम् । तत्र अभिषवहोमयोर्वचनान्तरप्राप्तयोरविधेयतया तौ निमित्तत्वेनाऽनूद्य भक्षणं विधीयते । तस्मात् समाख्यादिवदेतयोरपि भक्षणहेतुत्वमस्ति ॥

इत्येकादशं होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम् ॥ ११ ॥



अथ द्वादशं भक्षणनिमित्तसमुच्चयाधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**हेतुसङ्गे विकल्पः किं बाधो वाऽथ समुच्चयः ।**
**साम्याद्विकल्पो बाध्यन्तां सावकाशाः समाख्यया ॥ २० ॥**
**नैव वाचनिकं बाध्यं भक्षणेऽत्र विभागशः ।**
**सिद्धे विकल्पो नो युक्तः स्वीकार्योऽतः समुच्चयः ॥ २१ ॥**

"प्रैतु होतुश्चमसः, प्र ब्रह्मणः" इत्यत्र चमसिषु समाख्या भक्षणे हेतुः । "वषट्कर्तुः प्रथमभक्षः" इत्यत्र वषट्कारो होतुर्भक्षहेतुः । "हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा सदसि भक्षयन्ति" इत्यत्राऽभिषवसहितो होमोऽध्वर्योर्भक्षहेतुः । तत्र चमसवषट्कारयोः संघो होतरि प्राप्तः । चमसाभिषवसंघोऽध्वर्यौ प्राप्तः । तत्र हेतुद्वयस्य समानबलत्वाद्विकल्पे सत्यन्यतरनिमित्तकृतमेव भक्षणम् **इत्याद्यः पक्षः** ।

वषट्कारादिहेतोश्चमसेतरग्रहेषु सावकाशत्वान्निरवकाशया चमसिसमाख्यया तद्बाधे सति चमसिषु पाक्षिकमपि वषट्कारादिहेतुकं भक्षणं नाऽस्ति इति **द्वितीयः पक्षः** ।

"वषट्कर्तुः" इत्यादिवाक्यस्य प्रबलत्वात्समाख्यया बाधो न युक्तः । निरवकाशतया साऽपि प्रबला इति चेत्—तर्हि प्रमाणद्वयेन पृथग्भक्षणे विहिते समुच्चयोऽभ्युपेयः । न च व्रीहियववद्विकल्पः, तत्र पुरोडाशनिष्पादनस्य दृष्टप्रयोजनस्यैकत्वात् । इह तु नियमादृष्टार्थं भक्षणम् । तच्चाऽदृष्टं यथावचनं द्विविधम् । तस्मात्**समुच्चयः** ॥

इति द्वादशं भक्षणनिमित्तसमुच्चयाधिकरणम् ॥ १२ ॥

---

१. हविर्धान इत्यादेरर्थः पृष्ठे १४२ द्रष्टव्यः ।

### अथ त्रयोदशं एकपात्रे होतुः प्रथमभक्षाधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

**एकपात्रे किमध्वर्युराद्यात्पूर्वमुतेतरः ।**
**तद्धस्ते पात्रसंस्थानात्तस्य प्रथमभक्षणम् ॥ २२ ॥**
**पाहि होतेव नः पूर्वमिति मन्त्रेण पूर्वता ।**
**वषट्कर्तुस्तदुक्तेश्च न्यायबाध्यं वचो न हि ॥ २३ ॥**

एकस्मिन् पात्रे बहूनां क्वचिद्विहितं भक्षणम् । तत्र अध्वर्युः प्रथमं भक्षयेत्पात्रसंनिधानात् इति चेत्—

मैवम्; लिङ्गवाक्याभ्यां होतुःप्रथमभक्षावगमात् । (१)"होतेव नः प्रथमःपाहि" इति ऋत्विजोऽध्वर्युं संबोध्यैवं प्रार्थयन्ते 'यथा होताऽस्मत्तः पूर्वं भक्षयित्वा शेषप्रदानेनाऽस्मान् पालितवान्, तथा त्वमपि पाहि' इति । तदेतद्धोतुः प्रथमभक्षे लिङ्गम् । वाक्यं चैवमाम्नातम् "वषट्कर्तुः प्रथमभक्षः" इति । तत्र विशिष्टविधानात्प्राथम्यमपि सिध्यति । न चैतद्वचनं पात्रसंनिधिरूपेण न्यायमात्रेण बाधितुं शक्यम् । तस्माद्धोता प्रथमं भक्षयेत् ॥

इति त्रयोदशं होतुः प्रथमभक्षाधिकरणम् ॥ १३ ॥

---

### अथ चतुर्दशं भक्षस्याऽनुज्ञापूर्वकत्वाधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**नाऽनुज्ञापूर्वको भक्षस्तत्पूर्वो वाऽत्र लाघवात् ।**
**आद्यो नाऽनुपहूतेन पेय इत्युक्तितोऽन्तिमः ॥ २४ ॥**

अनुज्ञाभक्षयोर्द्वयोरनुष्ठितौ गौरवाद्भक्षमात्रमिति चेत्—

मैवम्; (१)"तस्मात्सोमो नाऽनुपहूतेन पेयः"इति वचनेनाऽनुज्ञाया आवश्यकत्वम् ।

इति चतुर्दशं भक्षस्याऽनुज्ञापूर्वकत्वाधिकरणम् ॥ १४ ॥

---

१. का. सं. १. २९. यस्मिन् ग्रहे चमसे वा यस्याऽधिकारो भक्षणेऽस्ति, तेनाऽननुज्ञातो न पातव्यः भक्षणीयः सोमः ।

अथ पञ्चदशं वैदिकवचनेनाऽनुज्ञापनाधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**किमनुज्ञा लौकिकोक्त्या वेदोक्त्या वा यथा तथा ।**
**अविशेषादुपह्वानमन्त्रलिङ्गात्तु वैदिकी ॥ २५ ॥**

"उपहूत उपह्वयस्व" इत्ययं मन्त्रो लिङ्गेन अनुज्ञायां विनियुज्यते । तस्मात् वैदिकोक्त्या तदनुज्ञानम् ॥

इति पञ्चदशं वैदिकवचनेनाऽनुज्ञापनाधिकरणम् ॥ १५ ॥

---

अथ षोडशं वैदिकवाक्येन प्रतिवचनाधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**उपह्वयस्वोपहूत इत्यशेषो द्वयोर्भवेत् ।**
**अनुज्ञानुज्ञापनयोरथवाऽसौ विभज्यते ॥ २६ ॥**
**विभागकारणाभावादशेषश्चेन्न लिङ्गतः ।**
**उपह्वयेत्यनुज्ञप्तावनुज्ञाने तथेतरः ॥ २७ ॥**

"उपहूत उपह्वयस्व" इत्यस्मिन्मन्त्रे मध्यमपुरुषैकवचनान्तो भागः पश्चात्पठितोऽपि प्रश्नसमत्वात्प्रथमभाविन्यनुज्ञापने समर्थः । प्रथमैकवचनान्तस्तु प्रथमपठितोऽप्युत्तरसमानत्वात्पश्चाद्भाविन्यामनुज्ञायां समर्थः । तस्मात् लिङ्गेन विभज्य विनियुज्यते ॥

इति षोडशं वैदिकवाक्येन प्रतिवचनाधिकरणम् ॥ १६ ॥

---

अथ सप्तदशं एकपात्राणामनुज्ञापनाधिकरणम् ॥ १७ ॥

सप्तदशाधिकरणमारचयति—

**उपह्वानमशेषाणामुत स्यादेकपात्रिणाम् ।**
**अदृष्टहेतोराद्यः स्याद्दृष्टाधिक्यादितोऽन्तिमः ॥ २८ ॥**

अनुज्ञापनस्याऽदृष्टं प्रयोजनम् । तच्च विभिन्नपात्रेष्वपि समानमिति चेत्— न; दृष्टप्रयोजनस्य सद्भावात् । साधारणे वस्तुनि कथंचिद्भागाधिक्येऽपराधो भवति । अतो न्यूनाधिकत्वपरिहारनिमित्तमनुज्ञापनमेकपात्रिणामेव ॥

इति सप्तदशं एकपात्राणामनुज्ञापनाधिकरणम् ॥ १७ ॥

---

अथाऽष्टादशं स्वयं यष्टुर्भक्षाधिकरणम् ॥ १८ ॥

अष्टादशाधिकरणमारचयति—

**होतुर्याज्यापनीतौ किं न वषट्कारभक्षयोः ।**
**अपनीतिरुताऽपायो नाऽपनीतिर्विभेदतः ॥ २९ ॥**
**यजमानेन यष्टव्यं न विनेष्टिर्वषट्कृतिम् ।**
**वषट्कारो याज्ययाऽतः सहापैत्यदनं तथा ॥ ३० ॥**

**ज्योतिष्टोम** ऋतुयाजनामकेषु यागेष्वाम्नायते–(१)"यजमानस्य याज्या, सोऽभिप्रेष्यति होतरेतद्यज इति, स्वयं वा निषद्य यजति" इति । हौत्रे काण्डे समाम्नाता याज्याः समाख्यया होतुः प्राप्ताः । तासु काचिद्याज्या होतुरपनीय यजमानस्य विधीयते । ततो यजमानः स्वेच्छया होतारं वा प्रेष्यति, स्वयं वा याज्यां पठति । तत्र स्वपाठपक्षे याज्या होतुरपनीयते । न तु वषट्कारभक्षावपनीयेते । तयोर्याज्यायामनन्तर्भावात् । अतो होता वषट्करोति भक्षयति च **इति प्राप्ते—**

**ब्रूमः**—"स्वयं वा निषद्य यजति" इति पक्षस्वीकाराद्यजमानेन स्वयं यागः कर्तव्यः । स च यागो वषट्कारमन्तरेण न संभवति, (२)"याज्याया अधि वषट्करोति" इति तद्विधानात् । ननु यजमानो याज्यां पठतु, होता वषट्करोतु, इति चेत्—मैवम्; (३)"अनवानन् यजति" इति याज्यावषट्कारयोर्मध्ये श्वासनिषेधेनैककर्तृकत्वावगमात् । अतो याज्यया सह वषट्कारो होतुरपैति । तदपाये वषट्कारनिमित्तो भक्षश्च होतुरपेत्य यजमाने निविशते ॥

इत्यष्टादशं स्वयं यष्टुर्भक्षाधिकरणम् ॥ १८ ॥

---

१. इयं याज्या यजमानकर्तृकैव । तत्र होतारं प्रेरयेत्–भवान् पठत्विमां याज्यामिति । अथवा स्वयमेवोपविश्य पठेदित्यर्थः ।

२. याज्यां पठित्वा तदन्ते वषट्कारं वौषट् वषट् इत्यादिकं पठेदित्यर्थः ।

३. अनवानन् अनुच्छ्वसन् ।

## अथैकोनविंशं फलचमसाधिकरणम् ॥ १९ ॥

एकोनविंशाधिकरणमारचयति—

**न्यग्रोधपिष्टं सोमस्य स्थाने क्षत्रियवैश्ययोः ।**
**भक्षमात्रे विकुर्यात्तत् सोमयागेऽपि वा तथा ॥ ३१ ॥**
**बिभक्षयिषया वाक्यमुपक्रम्योपसंहृतम् ।**
**भक्षं यच्छेदिति ततो विकारो भक्षमात्रगः ॥ ३२ ॥**
**फलाख्यचमसेनाऽसौ यजेतेति श्रुतत्वतः ।**
**इज्यायां च विकारोऽस्ति यागार्था भक्षसंस्कृतिः ॥ ३३ ॥**

ज्योतिष्टोमे श्रूयते—(१)"यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्, न सोमम्" इति । स्तिभिन्यो मुकुलानि । तत्र उपक्रमोपसंहारयोर्भक्षविषयत्वाद्भक्षमात्रे सोमः पिष्टेन विक्रियत इति चेत्—

**मैवम्** ; "यदाऽन्यांश्चमसाञ्जुह्वति, अथैतस्य दर्भतरुणकेनोपहत्य जुहोति" इति श्रुतम् । तत्र फलचमसरूपेण यथोक्तपिष्टेन यागमङ्गीकृत्य तरुणकगुणो विधीयते । किञ्च इष्टद्रव्यसंस्कारो हि भक्षः । स च यागमन्तरेणाऽनुपपन्नः । तस्मात् यागेऽपि विकारः ॥

इत्येकोनविंशं फलचमसाधिकरणम् ॥ १९ ॥

## अथ विंशमनुप्रसर्प्यधिकरणम् ॥ २० ॥

विंशाधिकरणमारचयति—

**राजसूये कश्चित्कर्तुश्चमसो दशभिर्जनैः ।**
**भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा उत ॥ ३४ ॥**

---

१. यदि क्षत्रियो वैश्यो वा सोमयागं कर्तुं अभिलषेत् तदा तौ सोमस्थाने न्यग्रोधमुकुलान्यानीय तत्रैव सोमसंस्कारान् कृत्वा तानि पिष्ट्वा—दध्ना सम्मेल्य तमेवाऽग्नौ हुत्वा तमेव च भक्षयतः, न सोमभक्षणेऽधिकुरुतस्तावित्यर्थः ।

आद्यो मानात्संख्ययैकजातेर्विप्राः शतं दश ।
चमसानग्नुरित्युक्त्या राजपात्रं च विप्रगम् ॥ ३५ ॥

इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां
तृतीयाध्यायस्य पञ्चमः पादः ॥

---

राजसूये दशपेयनामके यागे श्रूयते-(१)"दश दशैकैकं चमसमनुप्रसर्पन्ति" इति । तत्र यजमानस्य राजन्यस्य यश्चमसः, सोऽयं राजन्यैरेव दशभिर्भक्षणीयः । कुतः ? 'दश' इति संख्यया जात्येकत्वप्रतिभानात् । तथा हि—दशपेयस्य ज्योतिष्टोमविकृतित्वात्प्राकृतं धर्मजातं चोदकेन प्राप्तम् । प्रकृतौ च यजमानचमसस्य भिन्नजातिभिर्भक्षणं नाऽस्ति, इत्यत्राऽपि तथैव प्राप्तम् । यदि अत्र 'दश' इति विशेषो विधीयेत, तर्हि प्राकृतं भक्षसंख्यामात्रं निवर्तताम् । न त्वेकजातित्वम् । तस्मात् राजन्यो यजमानोऽन्यै राजन्यैर्नवभिस्सह भक्षयेत् इति प्राप्ते—

ब्रूमः—प्रकृतितः प्राप्तेषु दशसु चमसेषु भक्षणायानुप्रसर्पतां पुरुषाणां दश, दश, इति वीप्सया प्रतिचमसं दशसंख्यां विधायार्थसिद्धां शतसंख्यामनूद्य संख्येयानां सर्वेषां ब्राह्मण्यं विधीयते—(२) "शतं ब्राह्मणाः पिबन्ति" इति । तथा सति यजमानस्याऽपि राजन्यस्य यत्र चमसभक्षो नाऽस्ति, तत्र कुतोऽन्ये राजन्या भक्षयेयुः । तस्मात् ब्राह्मणा एव भक्षकाः ॥

इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

## अथ तृतीयाध्यायस्य षष्ठः पादः ॥

### तत्र प्रथमं पर्णमय्यधिकरणम् ॥ १ ॥

षष्ठपादस्य प्रथमाधिकरणमारचयति—

प्रकृतौ विकृतौ वा स्याद्यस्य पर्णेत्यसौ विधिः ।
प्रकृतावेव वा तुल्याद्वचनादुभयोरसौ ॥ १ ॥

---

१. श. ब्रा. ५. ४. ५. ३. होमार्थं आहवनीयदेशं प्रति नीयमानमेकैकं चमसं दशपुरुषाः अनुगच्छेयुः इत्यर्थः ।  २. श. ब्रा. ५. ४. ५. ४.

जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः ।
चोदकेनोभयप्राप्तेर्विकृतौ विधिनाऽत्र किम् ॥ २ ॥

**अनारभ्य श्रूयते**–(१)"यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति" इति । तत्र अव्यभिचरितक्रतुसम्बन्धवर्तीं जुहूमाश्रित्य तद्धेतुः पर्णवृक्षो वाक्येन विधीयते—'या जुहूः सा पर्णमयी' इति । वाक्यं च प्रकृतिविकृत्योस्तुल्यमेव प्रवर्तते, उभयत्राऽऽश्रयभूताया जुह्वाः सत्त्वात् । तस्मात् प्रकृतिविकृत्योरुभयोरप्ययं विधिः **इति प्राप्ते**—

**ब्रूमः**—किमयं विधिर्विकृतौ (२)चोदकात्पूर्वं निविशते, पश्चाद्वा ? नाऽऽद्यः, आश्रयभूताया जुह्वाश्चोदकमन्तरेणाऽसम्भवात् । द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनाऽतिदिश्यते । तत्र पुनर्विधिवैयर्थ्यादयं विधिः प्रकृतिमात्रगः । एवं (३)"यस्य खादिरः स्रुवो भवति" इत्युदाहरणीयम् ॥

इति प्रथमं पर्णमय्यधिकरणम् ॥ १ ॥

---

अथ द्वितीयं सामिधेन्यधिकरणम् ॥२॥

द्वितीयाधिकरणमारचयति—

सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।
पूर्ववत्प्रकृतौ पाञ्चदश्येनैतद्विकल्प्यते ॥ ३ ॥
विकृतौ साप्तदश्यं स्यात्प्रकृतौ प्रक्रियाबलात् ।
पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः ॥ ४ ॥

**अनारभ्य श्रूयते**–"सप्तदश सामिधेनीरनुब्रूयात्" इति । (४)"प्रवो वाजा अभिद्यव" इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यः । तासां साप्तदश्यं (५)पूर्वन्यायेन प्रकृतिगतम् । यदि प्रकृतौ 'पञ्चदश सामिधेनीरन्वाह' इति विधिः स्यात्, तर्हि पाञ्चदश्यसाप्तदश्ये विकल्पेयातामिति **प्राप्ते**—

**ब्रूमः**—विकृतावेव साप्तदश्यं निविशते, प्रकृतौ पाञ्चदश्येनाऽवरुद्धानां सामिधेनीनां

---

१. तै. सं. ३.५.७.२. यस्य यजमानस्य (यागे) जुहूः तत्संज्ञकः होमसाधनीभूतः पात्रविशेषः पर्णमयी, ( पर्णशब्दोऽत्र पलाशवृक्षवाची ) पलाशवृक्षनिर्मिता भवेत् सः यजमानः पापं श्लोकं अपयशः न शृणुयादित्यर्थः । २. चोदकात् अतिदेशात् ।

३. तै. सं. ३. ५. ७. १. खादिरः खदिरवृक्षनिर्मितः ।

४. तै. ब्रा. ३. ५. २. ५. 'अनारभ्याधीतानां प्रकृतिगामित्वं' इति न्यायेन ।

संख्याकाङ्क्षाया अभावात्। न च प्राचदश्यसाप्तदश्यवाक्ययोः समानबलत्वादवरोधाभाव इति शङ्कनीयम्; पाञ्चदश्ये प्रकरणानुग्रहस्याऽधिकत्वात्। तस्मात्(१)मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते। न चात्र पूर्वन्यायोऽस्ति, साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधाने दोषाभावात्॥

इति द्वितीयं सामिधेन्यधिकरणम्॥ २॥

---

## अथ तृतीयं नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणम्॥३॥

तृतीयाधिकरणमारचयति—

**साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत।**
**पूर्ववच्चेन्न संकोचान्नित्ये नैमित्तिकोक्तितः॥ ५॥**
**गोदोहनेन प्रणयेत्कामीत्येतदुदाहरत्।**
**भाष्यकारस्तदप्यस्तु न्यायस्याऽत्र समत्वतः॥ ६॥**

(२)"सप्तदशाऽनुब्रूयाद्वैश्यस्य" इति विहितं वैश्यनिमित्तकं साप्तदश्यं पूर्वन्यायेन विकृतिगतम् इति चेत्—

**मैवम्**; नैमित्तिकेनाऽनेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यतिरिक्तविषयतया संकोचनीयत्वात्। नित्यं सामान्यरूपतया सावकाशत्वेन च दुर्बलम्। नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम्। तस्मात् वैश्यनिमित्तकं साप्तदश्यं प्रकृतावबतिष्ठते।

अत्र **भाष्यकारो**ऽन्यदुदाजहार—"चमसेनाऽपः प्रणयेद्गोदोहनेन पशुकामस्य" इति। तत्र प्रकृतेश्चमसेनावरुद्धत्वाद्गोदोहनं विकृतौ **इति पूर्वपक्षः**।

कामनानिमित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया संकोचनीयत्वात्प्रकृतावेव गोदोहनमिति **राद्धान्तः**।

इति तृतीयं नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणम्॥ ३॥

---

१. मित्रप्राप्तिफलकेष्टिः मित्रविन्देष्टिः। ईषदसमाप्तोऽध्वरः अध्वरकल्पा, तन्नाम्नी काचनेष्टिः। इष्टिरियं सोमयागवत् सवनत्रयेऽपि क्रियते। सोमद्रव्याभावात् स्तोत्रशस्त्राद्यभावाच्च न सोमयागः। अत इयमध्वरकल्पा। अस्या विधिः तै.सं.२.२.९. द्रष्टव्यः।

२. वैश्यकर्तृकेष्टौ सप्तदश सामिधेनीः पठेत् इत्यर्थः।

### अथ चतुर्थं पवमानेष्ट्यधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**आधानं पवमानादेरिष्टेरङ्गं न वा भवेत् ।**
**अग्नीनामिष्टिशेषत्वात्तद्द्वाराऽस्य तदङ्गता ॥ ७ ॥**
**अनारभ्य विधानात्तु नाऽङ्गं कस्यचिदाहितिः ।**
**अग्न्यर्थत्वात्तत्समेष्टिरग्नयस्त्वग्निहोत्रगाः ॥ ८ ॥**

इदमाम्नायते—(१)"अग्नये पवमानायाऽष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये" इति "वसन्ते ब्राह्मणोऽग्नीनाधीत" इति च । तत्र आधानं पवमानादीष्टीनामङ्गं भवेत् । कुतः ? दर्शपूर्णमासविकृतिषु पवमानादीष्टिषु चोदकप्राप्तानामाहवनीयाद्यग्नीनामिष्ट्यङ्गत्वे सत्यग्निद्वारा तत्संस्काररूपस्याऽऽधानस्यापि तदङ्गताया अनिवार्यत्वात् इति चेत्—

**मैवम्**; न ह्येतदाधानं कस्यचित्क्रतोः प्रकरणे पठितम् । किंतु अनारम्याधीतम् । अतो न कस्याप्येतदङ्गम्, किंत्वाधानवदिष्टीनामप्यग्निसंस्कारार्थत्वात्परस्परं नाऽस्त्यङ्गाङ्गिभावशङ्का । ननु पवमानेष्ट्यङ्गत्वाभावेऽग्निसंस्कारवैयर्थ्यादग्निद्वारा तदङ्गत्वं युक्तमिति चेत्—न; संस्कृतानामग्नीनामग्निहोत्राद्युत्तरक्रतुषु तत्तद्वाक्यैर्विनियोगावगमात् । तस्मात् नाऽऽधानमङ्गम् ।

इति चतुर्थं पवमानेष्ट्यधिकरणम् ॥ ४ ॥

---

### अथ पञ्चममाधानस्य प्रकृतिविकृत्यर्थताधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

**आधानं किं प्रकृत्यर्थं वह्निमात्रेण वा युतम् ।**
**संस्कृताग्निप्रणाडचैतत्पर्णवत्प्रकृतौ स्थितम् ॥ ९ ॥**
**लौकिकाकारमात्रत्वे विफलत्वात्क्रतौ युतिः ।**
**पर्णस्याऽऽहवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता ॥ १० ॥**

---

१. पवमानसंज्ञकायाऽग्नयेऽष्टाकपालद्रव्यकं यागं कुर्यात् । एवं पावकसंज्ञकायाग्नये, शुचिसंज्ञकायाऽग्नये च पूर्वोक्तं यागं कुर्यात् इति सरलार्थः । इष्टित्रयमिदम् । तिसृणामप्यासां पवमानेष्टय इति व्यवहारः ।

आनारभ्याऽधीतं पर्णमयीत्वं यथा जुहूप्रणाड्या प्रकृतौ निविष्टम्, तथैवाऽग्निप्रणाड्या तत्संस्काररूपमाधानं प्रकृतौ निविशते **इति चेत्**--

**मैवम्**; वैषम्यात्। द्विविधो हि जुह्वा आकारः लौकिकः शास्त्रीयश्च। अरत्निमात्रदैर्घ्यहंसमुखत्वत्वग्बिलत्वादिरूपो दृश्यमानो लौकिकः। अपूर्वीयत्वाकारस्तु शास्त्रीयः। तयोरपूर्वीयत्वं क्रतुप्रवेशमन्तरेण नाऽस्ति। तत्र यदि लौकिकाकारमात्रे पर्यवस्यति, तदा पर्णमयीत्वं विफलं भवेत्। काष्ठान्तरेणाऽपि तदाकारस्य सुसम्पादत्वात्। अतोऽपूर्वीयत्वाय पर्णः क्रतौ प्रविष्टः। आहवनीयादीनां त्वेक एव शास्त्रीयाकारः। स च विधिबलादाधानेनैव जन्यते, नाऽन्यथा। तस्मादाधानस्य क्रतुप्रवेशं विनैव शास्त्रीयाहवनीयाद्याकारसम्पादनसमर्थत्वादग्निहोत्रेण तत्संयुज्यते। तथा सति पर्णवैषम्यात्प्रकृतावप्रविश्याऽग्नीनुत्पाद्य क्रतुवत्स्वातन्त्र्येणाऽवतिष्ठते। ततो लौकिकोपायसम्पादितसुवर्णव्रीह्यादिवदाधानसम्पादितानां स्वतन्त्राणामेवाऽऽहवनीयाद्यग्नीनां पश्चाद्वाक्यैः क्रतुषु विनियोगोऽस्तु ॥

इति पञ्चममाधानस्य प्रकृतिविकृत्यर्थताधिकरणम् ॥ ५ ॥

---

## अथ षष्ठं पवमानेष्ट्यनतिदेशाधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**संस्कृते पवमानेष्ट्या वह्नौ सेष्टिर्न वेष्टयः ।**
**वह्नौ तत्संस्कृते कार्याश्चोदकस्याऽनुरोधतः ॥ ११ ॥**
**चोदकः पवमानेष्टौ न तां प्रापयितुं प्रभुः ।**
**अनङ्गत्वेष्ट्यसिद्धिभ्यामिष्टयस्तदसंस्कृते ॥ १२ ॥**

पवमानादीष्टिभिराहवनीयाद्यग्नयः संस्क्रियन्ते । संस्कृतेष्वग्निहोत्रदर्शपूर्णमासादिक्रतवः प्रवर्तन्ते। तथासति विमताः पवमानेष्टयस्ताभिरिष्टिभिः संस्कृते वह्नौ कर्तव्याः, इष्टित्वात्, इतरेष्टिवत्। चोदकोऽप्येवं सत्यनुगृहीतो भवति। एताभिरिष्टिभिः संस्कृते वह्नौ प्रकृत्यनुष्ठानादिति **प्राप्ते**—

**ब्रूमः**—यद्यपि पवमानेष्टिर्विकृतिः, तथाऽपि चोदको न तस्यां पवमानेष्टौ पवमानेष्टिमतिदेष्टुं प्रभवति। प्रकृतौ प्रयाजादिवत्पवमानेष्टेरङ्गत्वाभावात्। किञ्च एतस्याः पवमानेष्टेः संस्कृताग्निसिद्ध्यर्थं पवमानेष्ट्यन्तराङ्गीकारे तत्राऽपि तथा इत्यनवस्थायामिष्टिरेव न सिध्येत्। तस्मात् ताभिरिष्टिभिरसंस्कृते वह्नौ पवमानेष्टयः कर्तव्याः ॥

इति षष्ठं पवमानेष्ट्यनतिदेशाधिकरणम् ॥ ६ ॥

अथ सप्तमं पशुधर्माणामग्नीषोमीयार्थत्वाधिकरणम् ॥ ७ ॥

सप्तमाधिकरणमारचयति—

**अग्नीषोमीयसवनीयानुबन्ध्यपशुष्वमी ।**
**उपाकरणमुख्यास्तु धर्माः साधारणा न वा ॥ १३ ॥**
**ज्योतिष्टोमप्रकरणे पाठात्साधारणा अमी ।**
**पशुधर्माग्रहात्सोमयागे ते स्युर्निरर्थकाः ॥ १४ ॥**
**अग्नीषोमीयधर्मत्वं तेषां स्थानात्प्रसिध्यति ।**
**द्वयोरितरयोः पश्वोः प्राप्यन्ते चोदकेन ते ॥ १५ ॥**

अग्नीषोमीयः, सवनीयः, आनुबन्ध्यश्च इत्येते त्रयः पशवो ज्योतिष्टोमप्रकरणे समाम्नाताः । (१)पशुधर्माश्चोपाकरणपर्यग्निकरणादयस्तत्राऽऽम्नाताः । (२)"प्रजापतेर्जायमानाः" (३)"इमं पशुम्" इत्याभ्यामृग्भ्यां पशोः (४)उपस्पर्शन **मुपाकरणम्** । दर्भज्वालया त्रिः प्रदक्षिणीकरणं **पर्यग्निकरणम्** । त एते धर्मास्त्रिष्वपि पशुषु साधारण्येन विधीयन्ते । त्रयाणामपि ज्योतिष्टोमप्रकरणपाठसाम्यात् ।

ननु ज्योतिष्टोमस्य प्रकरणे पठितानेतान्धर्मान् स एव ग्रहीष्यति, न तु पशव इति चेत्—न; तस्य सोमयागत्वात् । सोमो (५)ह्यभिषवादीन्धर्मानाकाङ्क्षति, न तु यूपनियोजनविशसनादीन् । तस्मात् अङ्गिन्यनर्थकाः सन्तोऽङ्गेषु निविशमाना अविशेषतस्त्रिष्वपि प ष्ववतिष्ठन्ते इति प्राप्ते—

**ब्रूमः**—अस्त्यत्र विशेषः सन्निधिलक्षणः । (६)सौत्यनामकादह्नः प्राचीन औपवसथ्यनामकेऽह्नि (७)धिष्ण्यनिर्माणादूर्ध्वमेते धर्मा आम्नाताः । अग्नीषोमीयस्याऽपि तदेव स्थानम् । सवनीयस्तु सौत्येऽहनि (८)श्रूयते—"आश्विनं ग्रहं गृहीत्वा त्रिवृता

---

१. पशौ अनुष्ठीयमानानि पश्वङ्गानि पशुधर्माः ।

२. "प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः । तस्मै प्रति प्रवेदय चिकित्वाँ अनुमन्यताम्" । तै. सं. ३. १. ४. इति समग्रो मन्त्रः ।

३. "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये । अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम्" । तै. सं. ३. १. ४. इति समग्रो मन्त्रः ।

४. अत्रोपस्पर्शनं न हस्तेन, किन्तु कुशाभ्यां प्लक्षशाखया च विधिबलात् ।

५. अभिषवो रसनिष्पीडनम् ।

६. सोमसम्बन्धी अभिषवग्रहचमसादिग्रहणहोमभक्षणादिव्यापारो यस्मिन् दिनेऽनुष्ठीयते तत् सौत्यमहः ।

७. मैत्रावरुणादीनां स्थानविशेषाः स्थण्डिलाकाराः धिष्ण्याः ।

८. सौत्येऽहन्येव 'आश्विनो दशमो गृह्यते' इत्यनेन आश्विनस्य दशमस्थानविधानात् तदनन्तरमेव सवनीयस्य पशोर्विधानादिति भावः ।

यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति" इति। आनुबन्ध्यस्त्ववभृथान्ते समाम्नातः । ततः सन्निधिना ते धर्मा अग्नीषोमीये सम्बध्यन्ते, सवनीयानुबन्ध्ययोस्तु चोदकादतिदिश्यन्ते ॥

इति सप्तमं पशुधर्माणामग्नीषोमीयार्थत्वाधिकरणम् ॥ ७ ॥

## अथाऽष्टमं शाखाहरणादीनामुभयदोहार्थताधिकरणम् ॥८॥

अष्टमाधिकरणमारचयति—

**शाखाच्छेदादयो दोहे धर्माः सायं व्यवस्थिताः ।**
**प्रातश्च सन्ति वा सायं स्थानात्ते पूर्ववत्स्थिताः ॥ १६ ॥**
**आनर्थक्यप्रतिहतिः पूर्ववन्नेह विद्यते ।**
**बलिनोऽतः प्रकरणात्प्रातर्दोहेऽपि सन्ति ते ॥ १७ ॥**

दर्शपूर्णमासप्रकरणे—पलाशशाखाच्छेदनम्, तया शाखया (१)वत्सापाकरणम्, इत्यादयो दोहधर्माः समाम्नाताः । दोहौ च द्वौ विद्येते—अमावास्यायां (२) रात्रावेको दोहः, प्रतिपदि प्रातरपरो दोहः । तत्र पूर्वन्यायेन प्राथमिके सायंदोहे प्रथमश्रुतास्ते धर्मा व्यवतिष्ठन्ते इति चेत्—

मैवम्; वैषम्यात् । पूर्वत्र हि सोमे विशसनादिधर्माणामनन्वयात्प्रकरणं (३)आनर्थक्यप्रतिहतम् । इह तु नाऽस्त्यानर्थक्यप्रतिहतिः । ततः प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोस्ते धर्मा अभ्युपेयाः ॥

इत्यष्टमं शाखाहरणादीनामुभयदोहार्थताधिकरणम् ॥ ८ ॥

## अथ नवमं ग्रहधर्माणां सवनत्रयार्थताधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**ग्रहधर्माः सादनाद्याः प्रातस्सवन एव ते ।**
**त्रिषु वा निश्चितस्थानादाद्यः पूर्ववदुत्तरः ॥ १८ ॥**

---

१ गोवत्सानां स्वस्वमातृभ्यः पृथक्करणम् ।

२. रात्रौ दोहो दधिसम्पादनार्थः ।

३. 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन प्रकरणमन्यत्र चरितार्थं अचरितार्थेन सन्निधिना बाध्यत इति युक्तमिति भावः ।

**ज्योतिष्टोमे** प्रातस्सवने (१)सन्त्यैन्द्रवायवादयो ग्रहाः, माध्यन्दिने सवने मरुत्वतीयादयः, तृतीयसवन आदित्यादयः । तत्र सादनसम्मार्गादयो धर्माः प्रातस्सवनीयग्रहसन्निधावाम्नायन्ते—(२)"उपोप्तेऽन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवः" इति । (३)"दशापवित्रेण ग्रहं संमार्ष्टि" इति च । ध्रुवव्यतिरिक्तानां ग्रहाणामधस्तान्मृत्तिकोपवेशनं कृत्वा तत्र सादनम्, ध्रुवस्य तु न तथा । पूर्वाधिकरणे शाखाहरणादयः प्रधानयोर्दधिपयसोर्धर्माः समाम्नाताः, तच्च दधि पूर्वेद्युः सायंदोहमन्तरेण न सिध्यतीति तत्सिद्ध्यर्थं केवलं सायं दुह्यते, न तु सायंदोहस्यासाधारणत्वेन धर्मैः सहैकस्मिन्देशे पाठोऽस्तीति स्थानं न निश्चितम् । इह तु तन्निश्चितमिति प्रातस्सवन एव ते धर्मा **इति चेत्**—

**मैवम्**; सादनादीनां वाक्येन ग्रहधर्मत्वं, प्रकरणेन ज्योतिष्टोमधर्मत्वं चाऽवगम्यते । तस्मिन्निश्चितमपि स्थानं वाक्यप्रकरणाभ्यां बाधित्वा त्रिषु सवनेषु सादनादयोऽवतिष्ठन्ते ॥

इति नवमं ग्रहधर्माणां सवनत्रयार्थताधिकरणम् ॥ ९ ॥

---

### अथ दशमं रशनाधर्मसाधारण्याधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**एकत्रैवोत सर्वत्र रशनावेष्टनादयः ।**
**अग्नीषोमीय एवैते क्रमाल्लिङ्गादितोऽन्तिमः ॥ १९ ॥**

अग्नीषोमीयपशुसन्निधौ रशनया यूपस्य वेष्टनम्, रशनायास्त्रिवृत्त्वं दर्भमयत्वं च, इत्यादयो धर्मा आम्नाताः—(४)"परिव्ययति, ऊर्ग्वै रशना" इति, "त्रिवृद्भवति" इति, "दर्भमयी भवति" इति च । तत्र येयं रशना, ये च वेष्टनादयः, ते सर्वे सन्निधेरवान्तरप्रकरणाद्वाऽग्नीषोमीय एव स्युः **इति चेत्**—

**मैवम्**; सवनीयपशावपि तत्सद्भावो लिङ्गादवगम्यते "त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति" इति त्रिवृत्त्वपरिव्याणयोः सिद्धवदनुवादो लिङ्गम् ।

---

१. ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, त्रयोऽतिग्राह्याः–ऐन्द्रः सौर्यो वैश्वदेवश्चेति, ध्रुवः ऋतुग्रहाः द्वादश इति प्रातस्सवने ग्रहाः । एवं माध्यन्दिनतृतीयसवनयोर्ग्रहाः श्रौतसूत्रतोऽवगन्तव्याः ।

२. उपोप्ते 'उपरवपांसूपवापकृतस्थण्डिले खराख्ये' इति मयूखमालिकायां सोमनाथः ।

३. अस्याऽर्थः पृष्ठे १२५ टिप्पणीतोऽवगन्तव्यः ।

४. तै. सं. ६. ३. ४. ५. परिव्ययति–संवेष्टयति ।

किञ्च तृतीयाश्रुत्या वाक्येन च परिव्याणस्य यूपधर्मता, न तु पशुधर्मता । यूपश्च त्रयाणां पशूनां तन्त्रम्, इति (१)वक्ष्यते । तस्मात् सर्वेषु पशुष्वेते धर्माः स्युः ।

इति दशमं रशनाधर्मसाधारण्याधिकरणम् ॥ १० ॥

---

अथैकादशमंश्वदाभ्याधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**ग्रहधर्मा अनारभ्योक्तांश्वदाभ्यद्वयेन हि ।**
**विद्यन्ते वा प्रकरणादाद्यो वाक्यादिहाऽन्तिमः ॥ २० ॥**

अनारभ्य द्वौ ग्रहौ श्रुतौ—"अंशुं गृह्णाति" इति, "अदाभ्यं गृह्णाति" इति च । तयोः सादनसम्मार्गादयो ग्रहधर्मा न विद्यन्ते । कुतः ? आरभ्याधीतेष्वैन्द्रवायवादिष्वेव प्रकरणेन व्यवस्थापितत्वात् इति चेत्—

मैवम्; "ग्रहाः साद्यन्ते" इत्यादिवाक्येन ग्रहधर्मत्वावगमे तयोरपि ग्रहयोरनिवार्यत्वात् । न चैन्द्रवायवादयः प्रकरणिनः । ज्योतिष्टोमो हि प्रकरणी । तस्मात्सन्ति तयोर्धर्माः ॥

इत्येकादशमंश्वदाभ्याधिकरणम् ॥ ११ ॥

---

अथ द्वादशं चित्रिण्यधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**अखण्डादीष्टकाधर्माश्चित्रिण्यादिषु नोचिताः ।**
**सन्ति वा वाक्यमप्यत्रानारभ्योक्तं ततो न ते ॥ २१ ॥**
**प्रकृतापूर्वसम्बन्धात्तादृशादपि वाक्यतः ।**
**अखण्डत्वादयोऽग्न्यर्थचित्रिण्यादिषु सन्ति ते ॥ २२ ॥**

अनारभ्य श्रूयते—(२)"चित्रिणीरुपदधाति" इति । (३)अग्निप्रकरणे चेष्टकानां

---

१. एकादशाध्यायस्य तृतीयपादे तृतीयाधिकरणे ।

२. चित्रिणीशब्द इष्टकावाचकः, "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" (पा. सू. ४.४.१२५) इति सूत्रेण निष्पन्नः । चित्रपदघटितमन्त्रोपधेया इष्टकाश्चित्रिण्यः ॥

३. अग्निशब्दोऽत्र चयनवाची । स च यद्यपि मुख्यया वृत्या ज्वलनवाची आहवनीयाद्यग्निवाची वा, तथाऽप्यत्र लक्षणया तदाधारभूतस्थण्डिलवाची ।

धर्माः श्रुताः—"अखण्डामकृष्णां कुर्यात्" इति । पूर्वत्र अश्वदाभ्ययोरुत्पत्तिवाक्यस्यानारभ्याधीतत्वेऽपि विनियोजकवाक्यं प्रकरणाधीतम् । चित्रिण्यादिनामकानां त्विष्टकाविशेषाणां विनियोजकं वाक्यमप्यनारभ्याधीतम् । तच्च चित्यन्तरे ताश्चित्रिणीर्विनियुङ्क्ते । अखण्डत्वादिधर्मास्तु षण्णां चितीनां मध्ये प्रथमचितावाम्नाताः । तस्मात् ते चित्रिण्यादिषु नोचिता इति प्राप्ते—

**ब्रूमः**—यद्यप्युत्पत्तिविनियोजकवाक्ययोरन्यतरस्याऽपि प्रकरणपाठो नास्ति, तथाऽपि "य एवं विद्वानग्निं चिनुते" इति प्रकृतं यदेतदग्न्यपूर्वं तत्सम्बन्धित्वेनैव चित्रिण्यादयोऽप्यप्रकरणपठितेनाऽपि वाक्येन विनियुज्यन्ते । अखण्डत्वादयश्चाग्निसाधनभूतेष्टकाधर्माः, न तु प्रथमचितिधर्माः । तस्मात् अग्निसाधनभूतासु चित्रिण्यादीष्टकास्वपि ते सन्ति ॥

इति द्वादशं चित्रिण्यधिकरणम् ॥ १२ ॥



## अथ त्रयोदशमभिषवादीनां सोमार्थत्वाधिकरणम् ॥ १२ ॥

त्रयोदशाधिकरणमारचयति—

**विधयोऽभिषवाद्याः स्युः फलाख्ये चमसे न वा ।**
**नैमित्तिकस्य नित्येन तुल्यत्वादस्ति तद्विधिः ॥ २३ ॥**
**नित्ये कृतार्थाः संस्काराः पश्चाद्भाविनिमित्तजे ।**
**न विधेयाः किन्तु तत्र प्राप्यन्तामतिदेशतः ॥ २४ ॥**

न्यग्रोधमुकुलरूपस्य फलस्य पिष्टं चम्यते यत्र स फलचमसः । स च नैमित्तिकः, राजन्यवैश्यौ निमित्तीकृत्य विहितत्वात् । सोमस्तु नित्यः, उपाधिक्रममप्यनुपजीव्यैव "सोमेन यजेत" इति विहितत्वात् । तस्य च नित्यस्य सोमस्य यथा यागसाधनत्वम्, तथा फलचमसस्याऽपि तदस्ति । तस्मात् "सोममभिषुणोति" "सोमं क्रीणाति" इत्यादयो यागद्रव्यसंस्कारविधयः सोम इव फलचमसेऽपि प्रवर्तन्ते इति प्राप्ते—

**ब्रूमः**—नित्या अभिषवादिसंस्कारा नित्यं सोमं संस्कार्यं लब्ध्वा चरितार्थाः सन्तो नाऽन्यं संस्कार्यमपेक्षन्ते फलचमसस्तु सोमविकारत्वात्पश्चाद्भावी । ततो निरपेक्षाः संस्कारविधयो न तत्र प्रवर्तन्ते । न चैतावता संस्काराभावः, चोदकेन तत्सिद्धेः । तस्मात् सोममात्रसम्बन्धिनो विधयः ॥

इति त्रयोदशमभिषवादीनां सोमार्थत्वाधिकरणम् ॥ १३ ॥



### अथ चतुर्दशं मुख्यप्रतिनिध्योस्सामानविध्याधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**नीवारादिप्रतिनिधेरतुल्यो वा विधिः समः ।**
**पुरेवाऽतुल्यता साम्यमाकाराद्व्रीहिता यतः ॥ २५ ॥**

"व्रीहिभिर्यजेत" इति विहितानां व्रीहीणामसम्भवे नीवाराः प्रतिनिधित्वेन स्वीकार्या इति (१)वक्ष्यते । तत्र पूर्वन्यायेनाऽवघातादिविधयो व्रीहिषु कृतार्थाः पश्चाद्भाविनि नीवारादौ न प्रवर्तन्त इति चेत्—

**मैवम्** ; व्रीहिशब्दो हि जातिविशेषेणाऽऽकारविशेषेण वोपेतं द्रव्यमाचष्टे । नीवारेषु जातितो व्रीहिशब्दार्थत्वाभावेऽप्याकारतो व्रीहिशब्दार्थत्वेन "व्रीहीनवहन्ति" इति विधिः प्रवर्तते । यथा व्रीहिजातावेव समीचीनानां व्रीहीणामभावे जलवह्न्याद्युपघातेन सारविकलेष्वपि विधिः, तथा जातिविकलेष्वपि व्रीहिषु मुख्यैकदेशरूपत्वाद्विधिरस्तु ॥

इति चतुर्दशं मुख्यप्रतिनिध्योस्सामानविध्याधिकरणम् ॥ १४ ॥

---

### अथ पञ्चदशं प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**पूतीकाभिषवोऽतुल्यस्तुल्यो वा सोमतुल्यता ।**
**नाऽस्ति नैमित्तिकत्वेन तुल्यः प्रतिनिधित्वतः ॥ २६ ॥**

(२)"यदि सोमं न विन्देत, पूतिकानभिषुणुयात्" इति श्रूयते । तत्र सोमाभावं निमित्तीकृत्य पूतीकलताखण्डानां विहितत्वात्फलचमसवन्नैमित्तिकत्वेन सोमाभिषवक्रयादिविधिः पूतीकेषु न तुल्य इति चेत्—

**मैवम्** ; नीवारवत्प्रतिनिधित्वात् । ननु प्रतिनिधित्वे स्वयमेवोपादित्सितत्वाद्विधिर्नापेक्षितः । अत एव नीवारेषु विधिर्न श्रुतः इति चेत्—न; विधेर्नियमार्थत्वस्य(३) षष्ठे वक्ष्यमाणत्वात् । तस्मात् अभिषवक्रयादिविधिः सोमपूतीकयोस्तुल्यः ॥

इति पञ्चदशं प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ॥ १५ ॥

---

१. षष्ठतृतीयचतुर्थाधिकरणे ।

२. तां. ब्रा. ९.५.३. पूतीकाः सोमलतासदृशा लताविशेषाः । सोमलताया अलाभे तत्स्थाने पूतीकानानीय तान् अभिषवादिसंस्कारैः संस्कृत्य तद्रसेन यागमभिनिर्वर्तयेदिति विषयवाक्यार्थः । ३. षष्ठाध्याये तृतीयपादे त्रयोदशाधिकरणे ।

## अथ षोडशं संस्थाधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**उक्थ्यादिषु समो दीक्षणीयाद्यङ्गविधिर्न वा ।**
**एकप्रकरणत्वेन फलवत्त्वाच्च तुल्यता ॥ २७ ॥**
**उक्थ्यादयः कामयोगाद्विकाराः प्रक्रिया ततः ।**
**अग्निष्टोमात्मके ज्योतिष्टोममात्रे च तद्विधिः ॥ २८ ॥**

**इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां**
**तृतीयाध्यायस्य षष्ठः पादः ॥**

---

**ज्योतिष्टोमः** स्वयमेकोऽपि समाप्तिभेदाद्भिद्यते । (१)यज्ञायज्ञियस्तोत्रेण समाप्तौ 'अग्निष्टोमः' इत्युच्यते । तस्मादपि स्तोत्रादूर्ध्वमुक्थ्यस्तोत्रेण समाप्तौ 'उक्थ्यः' इत्युच्यते । एवं षोडश्यादयोऽपि । तादृशस्य (२)सप्तसंस्थावतो ज्योतिष्टोमस्य प्रकरणे दीक्षणीयेष्टिप्रायणीयेष्ट्यादीनामङ्गानां विधिराम्नातः । स च विधिर्ज्योतिष्टोमस्य प्रथमसंस्थाविशेषेऽग्निष्टोमे यथा प्रवृत्तः, तथैवोक्थ्यादिष्वपि प्रवर्तते । कुतः ? प्रकरणसम्बन्धस्य समानत्वात् । किंच यथाऽग्निष्टोमः फलवत्वादङ्गविधिभिः संयुज्यते । एवमुक्थ्यादयोऽपि । तेषां च फलमेवमाम्नायते "पशुकाम उक्थ्यं गृह्णीयात्" "षोडशिना वीर्यकामः स्तुवीत" "अतिरात्रेण प्रजाकामं याजयेत्" इति । तस्मात् सप्तस्वपि संस्थासु समानोऽङ्गविधिः **इति प्राप्ते—**

**ब्रूमः**—यदेतदुक्थ्यादीनां फलमुदाहृतम् , तत्तु तेषां विकारत्वं गमयति । 'काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्य निविशते' इति न्यायाद्यथा गोदोहनगुणो नित्यं चमससाधनकमपां प्रणयनं विकृत्य निविशते, एवमुक्थ्यगुणो नित्यामग्निष्टोमस्य संस्थां विकृत्य संस्थान्तरत्वं गमयति । ततोऽग्निष्टोमस्य गुणविकारा उक्थ्यादय इति न

---

१. "यज्ञा यज्ञा वो अग्नये गिरागिरा च दक्षसे । प्र प्रवयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्" इत्यस्यामृच्युत्पन्नं अग्निष्टोमाख्यं साम । तेन साम्ना क्रियमाणं स्तोत्रं यज्ञायज्ञियस्तोत्रं अग्निष्टोमस्तोत्रं चोच्यते ।

२. अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, वाजपेयः, अप्तोर्यामः, इति संस्थाः सप्त । संस्थाशब्दः समाप्तिवाची, येन स्तोत्रेण यः क्रतुस्समाप्तिमेति, स तत्संस्थाको व्यपदिश्यते ।

सर्वसंस्थासाधारणं प्रकरणम्, किंतु (१)अग्निष्टोमस्यैवाऽसाधारणम्। ननु "ज्योतिष्टोमेन यजेत" इत्युक्तत्वाज्ज्योतिष्टोमस्येदं प्रकरणम्, न त्वग्निष्टोमसंस्थाया इति चेत्—बाढम्; असौ ज्योतिष्टोमो न कदाचिदप्यग्निष्टोमं व्यभिचरति, (२) उक्थ्यादीनामप्यन्तर्भावितानिष्टोमकत्वात्। उक्थ्यादींस्तु व्यभिचरति' विनाऽपि तैरग्निष्टोमदशायां ज्योतिष्टोमत्वसम्भवात्। अतोऽग्निष्टोमसंस्थस्य ज्योतिष्टोमस्येदं प्रकरणं सत्तत्रैव दीक्षणीयाद्यङ्गविधिं निवेशयति। उक्थ्यादिषु चोदकादङ्गान्यतिदिश्यन्ते ॥

इति षोडशं संस्थाधिकरणम् ॥ १६ ॥

इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य षष्ठः पादः ॥ ६ ॥



## अथ तृतीयाध्यायस्य सप्तमः पादः ॥

### तत्र प्रथमं वेदिबर्हिरधिकरणम् ॥ १ ॥

सप्तमपादस्य प्रथमाधिकरणमारचयति—

**मुख्याङ्गतैव वेद्यादेः प्रयाजाद्यङ्गताऽपि वा ।**
**तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बोधकम् ॥ १ ॥**
**मुख्याङ्गस्याऽपि वेद्यादेः प्रयाजादिषु चाऽङ्गता ।**
**मुख्यार्थत्वात्प्रयाजादेः स्वापूर्वव्यवधानतः ॥ २ ॥**

**दर्शपूर्णमासयोः** श्रूयते—(३)"वेद्यां हवींष्यासादयति" "बर्हिषि हवींष्यासादयति" इति। तथा तद्धर्माः श्रूयन्ते—"वेदिं खनति" "बर्हिर्लुनाति" इत्यादयः। मुख्यहवींष्याग्नेयपुरोडाशादीनि अमुख्यहवींषि तु प्रयाजाद्यर्थानि। तत्र स्वस्वधर्मस-

---

१. एवं च अग्निष्टोमसंस्थैव प्रकृतिभूता। उक्थ्यादयस्तु विकृतिभूताः धर्माकांक्षायां अग्निष्टोमतो धर्मान् गृह्णन्ति इति सिद्धम्।

२. अत्राऽयं प्रकारः—अग्निष्टोमसंस्थाऽग्निष्टोमसाम्नैव समाप्यते। न तत उक्थ्यादि। उक्थ्यसंस्था तु अग्निष्टोमस्तोत्रं पठित्वैवाऽनन्तरमुक्थ्यस्तोत्रं पठित्व तत्र समाप्यते सा। एवं षोडश्यादौ बोध्यम्।

३. अत्र प्रथमवाक्येन वेद्यां हविरासादनं विधीयते। द्वितीयेन च बर्हिष उपरि। तत्रोभयोस्समुच्चयः। एवं च वेदिं कुशैरास्तीर्य तदुपरि प्रधानहवींषि पुरोडाशादीनि अङ्गहवींषि आज्यादीनि चाऽऽसादयेदिति वाक्यद्वयस्य निष्कृष्टोऽर्थः।

हितानि वेद्यादीनि प्रकरणबलान्मुख्यहविषामेवाऽङ्गानि "वेद्यां हवींष्यासादयति" इति वाक्यात्सर्वहविरङ्गता इति चेत्–न; प्रकरणेन वाक्यस्य संकोचनीयत्वात्। यदि वाक्यं प्रकरणनैरपेक्ष्येण स्वतन्त्रं स्यात्, तदा सादनमात्रपर्यवसानेन यागाभावे वैयर्थ्यं स्यात्। सौमिकहविषामप्येतद्वेद्यासादनं प्रसज्येत। तस्मात् मुख्यहविरङ्गं वेद्यादिकम् **इति प्राप्ते—**

**ब्रूमः**—अस्तु वैयर्थ्यातिप्रसङ्गपरिहारेण प्रकृतापूर्वसाधनभूतहविष्षु वेद्यादेरङ्गत्वम्। प्रयाजादिहवींष्यपि स्वकीयावान्तरापूर्वद्वारा मुख्यापूर्वसाधनान्येवेति तदङ्गत्वमपि वेद्यादेर्युक्तम्। एवं सति वाक्यस्याऽत्यन्तसंकोचो न भविष्यति॥

इति प्रथमं वेदिवर्हिरधिकरणम्॥ १॥

---

### अथ द्वितीयं यजमानधर्माणां प्रधानार्थताधिकरणम्॥ २॥

द्वितीयाधिकरणमारचयति—

**वपनाद्युपकारः किं द्वयोर्मुख्याङ्गयोरुत।**
**मुख्य एव, द्वयोरस्तु कृत्स्नकर्तृगतत्वतः॥ ३॥**
**युक्तः शास्त्रीयसंस्कारो मुख्यस्य फलभोजिनः।**
**विनाऽपि संस्कृतिं दृष्टं कर्तृत्वं तत्र नाऽस्ति सः॥ ४॥**

ज्योतिष्टोमे(१) केशश्मश्रुवपनपयोव्रतादयो यजमानसंस्कारा आम्नाताः। ग्रहैः सोमहोमो ज्योतिष्टोमे मुख्यः। अग्नीषोमीयपश्वादिकमङ्गम्। तत्र द्वयोर्मुख्याङ्गयोरेते वपनादय उपकुर्वन्ति। कुतः? कर्तृधर्मत्वात्। यजमानो हि कर्तृतया वपनादिभिः संस्क्रियते। कर्तृत्वं च यथा मुख्यं प्रति तस्य विद्यते, तथाऽङ्गं प्रत्यप्यस्ति। तस्मात् उभयोरुपकार **इति चेत्—**

**मैवम्**; द्वौ हि यजमानस्याऽऽकारौ क्रियाकर्तृत्वम्, फलभोक्तृत्वं चेति। तयोरदृष्टः फलभोगः। क्रियानिष्पत्तिश्च दृष्टा। तथासति वपनादिकृतोपकारस्याऽप्यदृष्टत्वाद्भोक्तृशेषा वपनादयः फलभोगसाधने मुख्य एव पर्यवस्यन्ति। वपनादिसंस्काररहितैरप्यृत्विग्भिः कृषीवलादिभिश्च क्रिया निष्पाद्यमाना दृश्यते। ततस्तत्र कर्तृत्वाकारे वपनादिकृतः स उपकारो नाऽस्ति। तस्मात् अदृष्टफलभोजिनोऽस्य यजमानस्य योऽयमदृष्टरूपः शास्त्रीयस्संस्कारः सोऽयं मुख्ये कर्मणि युक्तो, नाऽङ्गेषु। नाऽत्र पूर्ववद्वाक्य-

१. "केशश्मश्रु वपते। नखानि निकृन्तते" (तै. सं. ६. १. १२) 'पयो ब्राह्मणस्य व्रतम्, यवागू राजन्यस्य तै. सं (६. २. ५. २.) इत्यादयः।

मस्ति, येन परम्पराफलसाधनेष्वङ्गेषु वपनाद्युपकारः शङ्क्येत । प्रकरणं तु मुख्यस्यैव, न त्वङ्गानाम् । तस्मात् न तेषूपकारः ॥

इति द्वितीयं यजमानधर्माणां प्रधानार्थताधिकरणम् ॥ २ ॥

---

## अथ तृतीयं सौमिकवेदेरङ्गप्रधानार्थताधिकरणम् ॥ ३ ॥

तृतीयाधिकरणमारचयति—

**मुख्यार्था सौमिकी वेदिरुभयार्थोत मुख्यगा ।**
**चिकीर्षितत्वान्मुख्यस्य वेद्यां तत्कृतिसंभवात् ॥ ५ ॥**
**मुख्यपौष्कल्यहेतुत्वात्तदङ्गं च चिकीर्षितम् ।**
**मुख्यवत्तेन तद्वेदिरङ्गेष्वप्युपकारिणी ॥ ६ ॥**

दार्शिकीं वेदिं मध्येऽन्तर्भाव्य(१)प्राचीनवंशो मण्डपोऽवस्थितः । ततः पूर्वस्यां दिशि सदोहविर्धानादीनां पर्याप्तो भूभागविशेषः । तैः सदःप्रभृतिभिः सह सौमिकी वेदिरित्युच्यते । सेयं मुख्यस्य सोमयागस्यैवोपकारं करोति, न त्वमुख्यानामग्नीषोमीयाद्यङ्गानाम् । कुतः ? मुख्यस्य चिकीर्षितत्वात् । न च अङ्गान्यपि चिकीर्षितानि इति वाच्यम्। चिकीर्षास्वरूपस्य वेदेनैवाऽभिहितत्वात् । एवं श्रूयते—(२) "षट्त्रिंशत्प्रक्रमा प्राची, चतुर्विंशतिरग्रेण, त्रिंशज्जघनेन, इयति शक्ष्यामहे" इति । अस्याऽयमर्थः—श्रूयमाणेनाऽनेन दैर्घ्यप्रमाणेन तिर्यक्प्रमाणद्वयेन च प्रमिते भूभागे फलहेतुसोमयागं कर्तुं शक्ष्यामहे इति निश्चित्य तथैव कुर्यात् इति । सेयं चिकीर्षा मुख्यविषया "इयति शक्ष्यामहे" इति परिमाणस्य शक्तेश्चोपन्यासात् । अङ्गानां तु पशूनामिष्टीनां च सदोहविर्धानादिमण्डपनिरपेक्षाणां यथोक्तपरिमाणमन्तरेणाऽप्यनुष्ठातुं शक्यत्वात्स उपन्यासस्तत्र निरर्थकः । सोमस्य त्वनुष्ठानं यथोक्तवेद्यामेव संभवति, न त्वन्यत्र । तस्मात् सा वेदिर्मुख्यस्यैवोपकरोति इति प्राप्ते—

**ब्रूमः**—"इयति शक्ष्यामहे" इत्यत्र साङ्गप्रधानानुष्ठाने शक्तिरुक्ता, तादृशस्यैव फलं प्रति पुष्कलहेतुत्वात् । अतो मुख्याङ्गयोश्चिकीर्षायास्तुल्यत्वाद्वेदिरुभयार्था । न च अत्र वपनादिसाम्यं शङ्कनीयम्, दृष्टोपयोगाभावस्य तत्रोक्तत्वात् । इह तु हविरासादनादिर्दृष्ट उपयोगः । स च मुख्याङ्गयोः सम इत्युभयार्थत्वम् ॥

इति तृतीयं सौमिकवेदेरङ्गप्रधानार्थताधिकरणम् ॥ ३ ॥

---

१. अस्य स्वरूपं ३. ४. १४. अधिकरणे निरूपतम् । २. मै. सं. ३.८.४.

## अथ चतुर्थं अभिमर्शनस्याऽङ्गप्रधानहविरर्थताधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**चतुर्होत्रा पौर्णमासीं मृशेदाज्यादिमर्शने ।**
**मन्त्रो मुख्य उताङ्गेऽपि मुख्ये तद्वाचिशब्दतः ॥ ७ ॥**
**शब्दस्य कर्मवाचित्वात्तत्र मर्शनवर्जनात् ।**
**विभक्तिव्यत्यये मन्त्रो मुख्याङ्गहविषोर्द्वयोः ॥ ८ ॥**

**दर्शपूर्णमासयोः** श्रूयते—(१) "चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्याम्" इति । "पृथिवी होता" इत्यादिको मन्त्रश्चतुर्होता । तस्मिन्मन्त्रे यज्ञाङ्गानां चतुर्णां श्रुतत्वात् । अथवा तस्य मन्त्रस्याऽभिमानित्वेनाऽऽत्मभूतः कश्चित् पुरुषः प्रजापतिना चतुर्वारमामन्त्रितः प्रत्युत्तरमुवाचेति स पुरुषश्चतुर्हूतः । तदीयनाम्ना मन्त्रोऽपि 'चतुर्हूतः' इत्युच्यते । पूज्यानां प्रत्यक्षनामग्रहणमयुक्तम् इत्यभिप्रायेण हूतशब्दस्थाने होतृशब्दः पठ्यते । अयमर्थः सर्वोऽपि **तैत्तिरीयब्राह्मणे** श्रूयते-(२)"आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै चतुर्थं हूतः प्रत्यशृणोत् । स चतुर्हूतोऽभवत् । चतुर्हूतो ह वै नामैषः । तं वा एतं चतुर्हूतं सन्तम् । चतुर्होतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः" इति । "अग्निर्होता" इत्यादिको मन्त्रः पञ्चहोता । तत्राऽप्युक्तप्रकारो द्रष्टव्यः । अत्र योऽयमाज्यादिहविष उपस्पर्शनार्थो मन्त्रः, असौ मुख्य एव हविषि निविशते, पौर्णमास्यमावास्याशब्दयोर्मुख्यहविर्विषयत्वात् **इति प्राप्ते—**

**ब्रूमः**—पौर्णमास्यमावास्याशब्दौ कर्मवाचिनौ, न तु हविर्वाचिनौ । न च कर्मणोरुपस्पर्शनसम्भवः । अथ कालविवक्षायां विभक्तिव्यत्ययेन सप्तम्यर्थो व्याख्यायेत, तदा कालसम्बन्धस्य मुख्याङ्गयोरुभयोस्तुल्यत्वादुभयविधहविरुपस्पर्शने मन्त्रो विनियुज्यते ॥

इति चतुर्थमभिमर्शनस्याऽङ्गप्रधानहविरर्थताधिकरणम् ॥ ४ ॥

---

१. तृसंज्ञकेन मन्त्रेण पौर्णमासयागसम्बद्धं हविः स्पृशेदित्यर्थः ।

२. तै. ब्रा. २. ३. ११. ४. अत्राऽऽमन्त्रयिता प्रजापतिः । तस्मै प्रजापतये । अन्यत्सुगमम् ।

## अथ पञ्चमं दीक्षादक्षिणयोः प्रधानार्थत्वाधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

**दण्डदीक्षा दक्षिणा तु शतं द्वादशभिर्युतम् ।**
**द्वयार्थमुत मुख्यार्थं सोमस्येत्युक्तिसम्भवात् ॥ ९ ॥**
**मुख्याङ्गद्वयगं, मैवं पारम्पर्यविडम्बना ।**
**वचनस्य न युक्ताऽतः प्रधानार्थमिदं स्थितम् ॥ १० ॥**

ज्योतिष्टोमे दीक्षादक्षिणं श्रूयते—(१)"दण्डेन दीक्षयति" इति । (२)"तस्य द्वादशशतं दक्षिणा" इति च । तत्र दीक्षा मुख्याङ्गयोरुपकरोति, तथा दक्षिणाऽपि । न च वाच्यं 'दीक्षाः सोमस्य, दक्षिणाः सोमस्य'इति वाक्ये षष्ठ्या मुख्यसम्बन्ध एवाऽवगम्यते, न त्वङ्गसम्बन्ध इति । दीक्षादक्षिणे सोमेनैव साक्षात्सम्बध्नीताम्, स सोमः पुनरङ्गैः सम्बद्ध इति परम्परया दीक्षादक्षिणयोरङ्गैरपि सम्बन्धोऽस्ति । तस्मात् उभयार्थं दीक्षादिकम् इति प्राप्ते—

ब्रूमः—अव्यवहितसम्बन्ध एव षष्ठ्या अभिधेयोऽर्थः । तदसम्भवे तु परम्परासम्बन्धः कथञ्चिद्गृह्यते । इह तु तत्सम्भवात्पारम्पर्यं न युक्तम् । तस्मात् प्रधानार्थं दीक्षादिकम् ॥

इति पञ्चमं दीक्षादक्षिणयोः प्रधानार्थत्वाधिकरणम् ॥ ५ ॥

---

## अथ षष्ठं यूपावटदेशलक्षणाधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत् ।**
**देशं यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते ॥ ११ ॥**
**बहिर्वेद्यर्धमित्येतद्वाक्यं भिद्येत तद्विधौ ।**
**मीयमानस्य यूपस्य तावान्देशोऽत्र लक्ष्यते ॥ १२ ॥**

---

१. अत्र अध्वर्युः, यजमानं, इति पदद्वयमध्याहार्यम् । अध्वर्युः यजमानहस्ते औदुम्बरं दण्डं दद्यात् दीक्षाभिव्यञ्जनार्थमित्यर्थः ।

२. तां. ब्रा. १६. १. ११. अत्र दक्षिणाशब्देन कर्मकरेभ्योऽध्वर्य्वादिभ्यो देया भृतिरुच्यते । 'तस्य' ज्योतिष्टोमस्य 'दक्षिणा' तत्साधनं द्वादशोत्तरं शतं (गावः) इत्यर्थः । ततश्च ज्योतिष्टोमे द्वादशोत्तरशतं गावो दक्षिणात्वेन देया इति भावः ।

**अग्नीषोमीयपशौ** (१)"यूपं मिनोति" इति प्रकृत्य श्रूयते-(२)"अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि" इति । 'यूपं स्थापयितुं कियद्विस्तारवानवटोऽपेक्षितः' इति बुभुत्सायां तन्निर्णयाय यूपमूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यम् । तस्य च मीयमानस्य यूपस्य वेद्यभ्यन्तरभागोऽङ्गत्वेन विधीयते **इति चेत्**—

**मैवम्** ; यथा संस्कृतो वेद्यन्तरभागः 'अर्धमन्तर्वेदि' इत्यनेन वाक्येन विधीयते, तद्वदसंस्कृतो बहिर्भागो 'बहिर्वेदि' इत्यनेन वाक्येन विधातव्यः । ततो वाक्यं भिद्येत । यदा तु वेदेरभ्यन्तरबाह्यभागाभ्यामुपलक्षितोऽसंस्कृतो लौकिको देशो मीयमानयूपोचितो विधीयते, तदा नाऽस्ति वाक्यभेदः । तस्मात् लौकिकदेश एवाऽत्र यूपाङ्गत्वेन विधीयते, न तु संस्कृतवेदिभागः ॥

इति षष्ठं यूपावटदेशलक्षणाधिकरणम् ॥ ६ ॥

---

**अथ सप्तमं हविर्धानस्य सामिधेन्यनङ्गताधिकरणम् ॥ ७ ॥**

सप्तमाधिकरणमारचयति—

**हविर्धाने स्थितो ब्रूयात्सामिधेनीरिहाऽङ्गता ।**
**हविर्धानस्य तास्वाहो तद्देशोऽनेन लक्ष्यते ॥ १३ ॥**
**वाक्यात्स्यादङ्गता, मैवं प्रकृत्या पश्चिमेऽग्नितः ।**
**देशः प्राप्तो लाघवेन लक्ष्यः शकटसन्निधिः ॥ १४ ॥**

**ज्योतिष्टोमे** श्रूयते—"उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः" इति । हविर्धानमण्डपगतयोर्दक्षिणोत्तरभागावस्थितयोर्हविर्धाननामकयोः शकटयोर्मध्ये दक्षिणं शकटमत्र यत्तच्छब्दाभ्यामभिधीयते । तस्य समीपे सोमस्याऽभिषवः । 'उत' इत्ययं शब्दोऽथशब्दार्थे वर्तते—अथ यस्मिन्हविर्धाने सोममभिषुण्वन्ति, तस्मिन्सामिधेनीरनुब्रूयुः । इह दक्षिणस्य हविर्धानस्य सामिधेनीष्वङ्गत्वं प्रतीयते । न चाऽत्र पूर्ववद्वाक्यभेददोषः शङ्क्यः, एकवाक्यतायाः स्पष्टं प्रतिभासात् **इति प्राप्ते**—

**ब्रूमः**—सामिधेनीनामिष्ट्यङ्गतया दर्शपूर्णमासावत्र प्रकृतिः । प्रकृतौ चाऽऽहवनीयाग्नेः पश्चिमो देशः सामिधेनीनां स्थानम् । इहोत्तरवेदेराहवनीयत्वात्तदपेक्षया हविर्धानस्य पश्चिमदेशावस्थानात् स देशश्चोदकेन प्राप्त इति देशस्य सामिधेन्यङ्गत्वं विधातव्यम् । किन्तु दक्षिणोत्तरहविर्धानसमीपदेशयोरनियमेन प्राप्तौ दक्षिणस्यैव ह-

---

१. यूपखननार्थं अवटं मिनुयात् इत्यर्थः । २. मै. सं. ३. ९. ४. अवटस्याऽर्धभागो वेदेरन्तः अर्धभागो वेदेर्बहिश्च यथा भवेत् तथा मिनुयादित्यर्थः ।

विर्धानस्य समीपदेशः इति नियन्तुं हविर्धानेन सन्निधिर्लक्ष्यते । तथा सति नियममात्रविधानाल्लाघवं भवति । त्वत्पक्षे त्वभिधवोपलक्षितस्य दक्षिणस्य हविर्धानस्याऽत्यन्तमप्राप्तं सामिधेन्यङ्गत्वं विधीयत इति गौरवम् । तस्माद्देशलक्षणा ॥

इति सप्तमं हविर्धानस्य सामिधेन्यनङ्गताधिकरणम् ॥ ७ ॥

---

### अथाऽष्टमं यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**यजमानेन कर्तव्यं निखिलं त्याग एव वा ।**
**कर्तृगामिफलश्रुत्या युज्यते सर्वकर्तृता ॥ १५ ॥**
**प्रयोजकेऽपि कर्तृत्वमस्ति नो चेत्क्रयो वृथा ।**
**कार्यं तेन त्यागमात्रमृत्विजोऽन्यत्र कर्तृता ॥ १६ ॥**

"स्वर्गकामो यजेत" इति स्वर्गभोक्तुर्यागकर्तुश्च सामानाधिकरण्यादेकत्वं गम्यते । पाणिनिश्च (१)"स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति सूत्रेण क्रियाफलस्य कर्तृगामित्वे सत्यात्मनेपदं विदधाति । अतः साङ्गकर्मानुष्ठानमन्तरेण फलासम्भवान्निखिलं यजमानेन कर्तव्यमिति प्राप्ते—

ब्रूमः—निखिलानुष्ठानाभावेऽपि प्रयोजकतया यजमानस्य सर्वकर्तृत्वमस्ति । 'षड्भिर्हलैः कर्षति' इत्यत्र तथा दर्शनात् । यदि स्वेनैव सर्वमनुष्ठीयेत, तदानीमृत्विजां परिक्रयो वृथा स्यात् । तस्मात् यजमानेन त्यागमात्रं कार्यम् । अन्यत्र साङ्गप्रधाने क्रीतस्यर्त्विजोऽनुष्ठानम् । तथा सति साक्षात्परम्परया च सर्वकर्तृत्वस्य यजमाने सम्भवात्तस्य फलं न विरुध्यते ॥

इत्यष्टमं यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम् ॥ ८ ॥

---

### अथ नवममृत्विक्संख्यानियमाधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**न क्रीतकर्तृसंख्याया नियमोऽस्त्यस्ति वा न हि ।**
**अविशेषादस्ति यावत्कार्यं तावन्त एव हि ॥ १७ ॥**

---

१. पा. सू. १. ३. ७२.

ये यजमानेन क्रीताः कर्तार ऋत्विजः, तेषां संख्याविशेषो यद्यपि न श्रुतः, तथाऽपि कार्यानुसारेण सोऽवगन्तव्यः। ते च कार्यविशेषाः कर्तृसंयुक्ता एवं श्रूयन्ते—"पुरोऽध्वर्युर्विभजति, प्रतिप्रस्थाता मन्थिनं जुहोति, नेष्टा पत्नीमुदायति, उन्नेता चमसानुन्नयति, प्रस्तोता प्रस्तौति, उद्गातोद्गायति, प्रतिहर्ता प्रतिहरति, सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति, होता प्रातरनुवाकमनुब्रूते, मैत्रावरुणः प्रेष्यति, अच्छावाको यजति, ग्रावस्तुद्ग्रावस्तोत्रीयामन्वाह" इति। एवं ब्रह्मब्राह्मणाच्छंस्याग्नीध्रपोतॄणां चतुर्णां कर्माण्युदाहार्याणि। तस्मात् यावन्ति कार्याणि तावन्त ऋत्विजो वरीतव्याः।

इति नवममृत्विक्संख्यानियमाधिकरणम् ॥ ९ ॥

अथ दशमं चमसाध्वर्य्वधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**चमसाध्वर्यवो नाऽन्य ऋत्विग्भ्योऽन्येऽथवाऽग्रिमः।**
**यौगिक्या संज्ञया, मैवं षष्ठ्या तेभ्यो विभेदनात् ॥ १८ ॥**

ज्योतिष्टोमे श्रूयते—"चमसाध्वर्यून्वृणीते" इति। ये पूर्वत्र कार्यानुसारेणाऽध्वर्युप्रमुखा ऋत्विज उक्ताः, तेभ्यो न व्यतिरिक्ताश्चमसाध्वर्यवः। कुतः? यौगिकसंज्ञया तदभेदप्रतीतेः यथा देवदत्त एव पचिक्रियायोगात्पाचको भवति, तथाऽध्वर्युप्रमुखा एव चमसयोगाच्चमसाध्वर्यव इति चेत्—

**मैवम्**; मध्यतःकारिणां चमसाध्वर्यवः, होत्रकाणां चमसाध्वर्यव इति षष्ठ्या भेदावभासात्। (१)मध्यतःकारिणोऽध्वर्युहोत्रादयः। (२) होत्रकाः प्रतिप्रस्थातृमैत्रावरुणादयः। तस्मादृत्विग्भ्योऽन्ये॥

इति दशमं चमसाध्वर्य्वधिकरणम् ॥ १० ॥

अथैकादशं चमसाध्वर्यूणां बहुत्वाधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**तान्वृणीतेति बहुता नाऽस्ति वाऽस्ति ग्रहैक्यवत्।**
**नेति चेन्नाऽत्र वैषम्यादुत्पत्तौ बहुताश्रुतेः ॥ १९ ॥**

---

१. होतृब्रह्मोद्गातृयजमाना मध्यतः कारिणः।
२. मैत्रावरुण, ब्राह्मणाच्छंसि, पोतृ, नेष्टृ, च्छावाका, ग्नीध्राः होत्रकाः।

"चमसाध्वर्यूंन्वृणीते" इति यद्बहुत्वं श्रुतम्, तन्न विवक्षितम्, ग्रहैकत्ववदुद्देश्यगतत्वात् इति चेत्—

**मैवम्**; ग्रहवैषम्यात्। 'ग्रहं संमार्ष्टि' इत्येतद्ग्रहाणां नोत्पत्तिवाक्यम्। चमसाध्वर्यूणां त्वेतदेवोत्पत्तिवाक्यम्। ततस्तेषामुपादेयत्वात्तद्गतं बहुत्वं विवक्षितम् ॥

इत्येकादशं चमसाध्वर्यूणां बहुत्वाधिकरणम् ॥ ११ ॥



## अथ द्वादशं चमसाध्वर्यूणामियत्ताधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**नेयत्ताऽस्त्यस्ति वा तेषां न नियामकवर्जनात् ।**
**चमसानां(१)दशत्वेन चमसाध्वर्यवो दश ॥ २० ॥**

स्पष्टोऽर्थः ॥

इति द्वादशं चमसाध्वर्यूणामियत्ताधिकरणम् ॥ १२ ।



## अथ त्रयोदशं शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

**तेभ्योऽन्यः शमिताऽनन्यो वाऽन्यः संज्ञापृथक्त्वतः ।**
**वरणाभावतो नाऽन्यः संज्ञाभेदस्तु यौगिकः ॥ २१ ॥**

(२)"शमितार उपेतन यज्ञम्" इत्यस्मिन्मन्त्रे श्रुतायाः शमितृसंज्ञायाः पृथक्त्वादुक्तेभ्योऽन्यः शमिता इति चेत्—

**मैवम्**; पृथग्वरणाभावात्। संज्ञाभेदस्तु पशुसंज्ञपनयोगादुपपद्यते। यद्यप्ययं मन्त्रोऽध्वर्युकाण्डे पठितः, तथाऽप्यध्वर्योः परावृत्तिश्रवणादध्वर्युपुरुषाः प्रतिप्रस्थात्रादयः शमितारः। अत एव श्रूयते—(३)"पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्" इति ॥

इति त्रयोदशं शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥

---

१. यदा सदस्यस्याऽपि वरणं तदा एकादश चमसा बोध्याः। तदानीं चमसाध्वर्यवोऽप्येकादश वरीतव्याः।

२. तै. सं. ३. १. ४. ३. हे शमितारः पशुसंज्ञपयितारः। इमं यज्ञं उपेतन प्राप्नुत इत्यर्थः। ३. तै. सं. ६. ३. ८. ३.

अथ चतुर्दशमुपगातॄणामपृथक्त्वाधिकरणम् ॥१४॥

चतुर्दशाधिकरणमारचयति—

**अन्ये स्युरुपगातार उदितेभ्यो न वा यथा ।**
**लोकेऽत्रापि तथा मैवं नाऽध्वर्युरिति लिङ्गतः ॥ २२ ॥**

यथा लोके मुख्येभ्यो गायकनायकादिभ्योऽन्ये पार्श्वस्था उपगातारः, तथाऽत्रापि इति चेत्—

**मैवम्** ; यद्युक्तेभ्यः पुरुषेभ्य उपगतारोऽन्ये भवेयुः, तदानीमध्वर्योः प्रसक्त्यभावात् "नाऽध्वर्युरुपगायेत्" इति प्रतिषेधोऽनर्थकः स्यात् । तस्मादुक्तेष्वेव यौगिकः संज्ञाभेदः ॥

इति चतुर्दशमुपगातॄणामपृथक्त्वाधिकरणम् ॥ १४ ॥

अथ पञ्चदशं सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥ १५ ॥

पञ्चदशाधिकरणमारचयति—

**सोमविक्रय्येक एषु न वा वरणवर्जनात् ।**
**एकः क्रत्वर्थता नाऽस्ति विक्रयस्येति भिद्यते ॥ २३ ॥**

क्रय एव ज्योतिष्टोमाङ्गत्वेन श्रुतः, न विक्रयः । न चाऽविहितमृत्विजः कुर्वन्ति । तस्मादन्यो विक्रेता ॥

इति पञ्चदशं सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥ १५ ॥

अथ षोडशं सर्वेषामृत्विक्छब्दवाच्यताधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**किमृत्विङ्नाम सर्वेषु समानमुत केषुचित् ।**
**क्रतौ यजनमेतेषां तुल्यमित्यस्ति नाम तत् ॥ २४ ॥**
**सौम्याध्वरस्य सप्त स्युर्दश चेत्यादिसंख्यया ।**
**न सर्वेषां समं नामकेषांचिद्योगरूढितः ॥ २५ ॥**

ऋत्विक्शब्दस्य प्रवृत्तिनिमित्तमृतौ यजनम् । तच्च ब्रह्मादिष्विव चमसाध्वर्युष्व प्यस्ति । तस्मात् सर्वेषामृत्विङ्नाम समानमिति चेत्—

**मैवम्**; संख्याश्रुतिविरोधात् । "सौम्यस्याऽध्वरस्य यज्ञक्रतोः सप्तदशर्त्विजः" इति श्रूयते । तस्मात् योगमनतिक्रम्य शास्त्रीयरूढिमप्याश्रित्य केषुचिदेवैतन्नामेत्यवग-न्तव्यम् ॥

इति षोडशं सर्वेषामृत्विक्छब्दवाच्यताधिकरणम् ॥ १६ ॥

---

### अथ सप्तदशं ब्रह्मादीनामृत्विक्त्वनियमाधिकरणम् ॥ १७ ॥

सप्तदशाधिकरणमारचयति—

**संख्याता अपि ये केचिन्नियता वाऽविशेषतः ।**
**आद्यो, न दक्षिणादाने दीक्षायां च विशेषतः ॥ २६ ॥**

ये सप्तदश संख्याताः, ते ब्रह्मादिषु चमसाध्वर्युषु च ये केचिदिच्छया ग्रहीत-व्याः । विशेषस्याऽश्रवणात् इति चेत्—

**मैवम्**; दक्षिणावाक्ये दीक्षावाक्ये च विशेषश्रवणात् । 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्युक्त्वा तद्विशेषः श्रूयते—(१)"अग्नीधे ददाति" (२)"ब्रह्मणे ददाति" इत्यादिना । दीक्षावाक्यं च सत्रप्रकरणे "ये यजमानास्त ऋत्विजः" इत्युक्त्वाऽनन्तर-मेवमाम्नायते—(३)"अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम्, ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति—ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्ष-यति, अग्नीधं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्रा-

---

१, २. तै. सं. ६. ६. १. ५.

३. ( मा. श. ब्रा. १२. १. १. १० ) सत्रे सर्वेषां यजमानत्वेऽपि तत्तत्कार्य-स्य तेषु तेषु विभक्तत्वेन कार्याणि नियमितानि तैस्तैः कर्तव्यानि । तत्र यजमा-नकार्यकता गृहपतिरित्युच्यते । अध्वर्युः तं प्रथमतो दीक्षयित्वाऽनन्तरं ब्रह्माणं दी-क्षयेत् । एवं गृहपतिब्रह्मोद्गातृहोतॄन् चतुरो दीक्षयित्वा तावतैव विरमेदध्वर्युः । तत अध्वर्योरनन्तरः प्रतिप्रस्थाता तं अध्वर्युं दीक्षयित्वा तत्तद्गणसम्बन्धिनो द्वितीया-नृत्विजो दीक्षयेत् । तत्राऽयं क्रमः—ब्रह्मगणसम्बन्धिनं ब्राह्मणाच्छंसिनं उद्गातृगणा-न्तर्गतं प्रस्तोतारं होतुरनन्तरं मैत्रावरुणं च दीक्षयेदिति । अग्रेऽप्येवमेव द्रष्टव्यम् । अन्यदत्र सुगमम् ।

ह्मणो दीक्षयति" इति । अस्याऽयमर्थः—अध्वर्युर्यजुर्वेदोक्तं करोति, तस्य पुरुषास्त्रयः–प्रतिप्रस्थाता नेष्टोन्नेता चेति । एते चत्वारो दीक्षयितारः । ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति, तस्य पुरुषास्त्रयः—ब्राह्मणाच्छंसी, अग्नीत्, पोता चेति । उद्गातोद्गानं करोति, तस्य पुरुषास्त्रयः—प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्यश्चेति । होता शंसनं करोति, तस्य पुरुषास्त्रयः—मैत्रावरुणः, अच्छावाकः, ग्रावस्तुदिति । चतुर्षु वर्गेषु ये प्रथमास्ते दक्षिणां संपूर्णं प्राप्नुवन्ति । ये द्वितीयास्ते तदर्धं प्राप्नुवन्ति इत्यर्धिनः । ये तृतीयास्ते तृतीयांशं प्राप्नुवन्ति इति तृतीयिनः । ये चतुर्थास्ते चतुर्थमंशं प्राप्नुवन्ति इति पादिनः । तानेतानुक्तक्रमेण स स पुरुषः संस्करोति इति । अत्र दीक्षावाक्ये निर्दिष्टा अध्वर्युप्रभृतय ऋत्विजः षोडश, न तु चमसाध्वर्यव इति नियमो द्रष्टव्यः ॥

इति सप्तदशं ब्रह्मादीनामृत्विक्त्वनियमाधिकरणम् ॥ १७ ॥

---

अथाऽष्टादशं यजमानसप्तदशत्वाधिकरणम् ॥ १८ ॥

अष्टादशाधिकरणमारचयति—

**सदस्ये यजमाने वा साप्तदश्यं वृतत्वतः ।**
**सदस्ये, कुरुते किंचिन्नाऽसौ स्वामिनि तत्त्वतः ॥ २७ ॥**

*अध्वर्युब्रह्मादिषु षोडशसु व्यवस्थितेषु सप्तदशसंख्यापूरकः कश्चिदृत्विगपेक्षितः। सोऽत्र सदस्यो भविष्यति । सदस्यवस्थितः सदस्यः । न च तस्य वरणाभावः, केषांचिच्छाखायां तद्वरणस्याऽऽम्नातत्वात् । ततः साप्तदश्यं सदस्ये पर्यवसितम् **इति चेत्—**

**मैवम्** ; असौ सदस्यः किंचिदपि न करोति 'सदस्य इ ' कुर्यात्' इति विध्यभावात् । न च विना क्रियामृतुयजननिमित्त ऋत्विक्शब्दस्तस्मिन्नवकल्पते । यजमानस्तु त्यागं करोतीति तस्मिन्नुपपद्यते । तस्मात्साप्तदश्यं यजमाने युक्तम् ॥

इत्यष्टादशं यजमानसप्तदशत्वाधिकरणम् ॥ १८ ॥

---

| | १ | २ | ३ | ४ |
|---|---|---|---|---|
| * | १ अध्वर्युः | १ ब्रह्मा | १ उद्गाता | १ होता |
| | २ प्रतिप्रस्थाता | २ ब्राह्मणाच्छंसी | २ प्रस्तोता | २ मैत्रावरुणः |
| | ३ नेष्टा | ३ आग्नीध्रः | ३ प्रतिहर्ता | ३ अच्छावाकः |
| | ४ उन्नेता | ५ पोता | ४ सुब्रह्मण्यः | ४ ग्रावस्तुत् |

इति चत्वारो गणाः षोडशर्त्विजो वेदितव्याः ।

## अथैकोनविंशमृत्विजां नियतपदार्थकर्तृत्वाधिकरणम् ॥ १९ ॥

एकोनविंशाधिकरणमारचयति—

**न कार्यं नियतं तेषां नियतं वाऽग्रिमो यतः ।**
**शक्ताः, केन किमित्यत्र नियतिः स्यात्समाख्यया ॥ २८ ॥**

तेषामध्वर्युप्रभृतीनां कार्यं न नियतम्। यतः सर्वे सर्वत्र शक्ताः। प्रकरणं च सर्वसाधारणत्वान्न नियामकम् इति चेत्—

**मैवम्**; समाख्याया नियामकत्वात्। यस्मिन् कर्मणि 'आध्वर्यवम्' इति समाख्या तत्कर्माऽध्वर्योः। एवमितरत्राऽपि ॥

इत्येकोनविंशमृत्विजां नियतपदार्थकर्तृत्वाधिकरणम् ॥ १९ ॥

## अथ विंशमग्नीनां सर्वार्थत्वाधिकरणम् ॥ २० ॥

विंशाधिकरणमारचयति—

**प्रकृत्यर्थोऽथ सर्वार्थो वह्निराद्योऽस्तु पर्णवत् ।**
**पर्णन्यायोऽतिदिष्टे स्यादुपदिष्टे तु सर्वगः ॥ २९ ॥**

यथा "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यसौ पर्णविधिः प्रकृत्यर्थः, एवमाधानस्याऽप्यनारभ्याधीतत्वादाहित आहवनीयाद्यग्निः प्रकृत्यर्थ इति चेत्—

**मैवम्**; वैषम्यात्। पर्णवाक्यात्पर्णताया यावत्क्रतुप्रवेशे जुहूर्द्वारम्। सा च जुहूः प्रकृतावेव विहिता विकृतिषु सर्वत्राऽतिदिश्यते। आहवनीयाद्यग्नेस्तु क्रतुप्रवेशे द्वारं होमः। स च क्वचित्प्रकृतावेव विहितः सन्विकृतावतिदिश्यते। तद्यथा प्रयाजनारिष्टादिहोमाः। तादृशे विषये "यदाहवनीये जुहोति" इति वाक्येनाऽग्निः प्रकृतावेव विधीयते। विकृतौ तु होमेन सहाऽतिदिश्यते। तस्मात्तत्र पर्णन्यायः। यस्तु होमो विकृतावुपदिश्यते—तद्यथा सांग्रहण्यामिष्टावामनहोमः, तत्र द्वारभूतस्य होमस्य विकृतावुपदिश्यमानतया द्वारिणोऽपि प्रकृताविव विकृतावपि वाक्येन विधिर्वारयितुमशक्यः। तस्मात् सर्वार्थो वह्निः ॥

इति विंशमग्नीनां सर्वार्थत्वाधिकरणम् ॥ २० ॥

## अथैकविंशं प्रैषानुवचनस्य मैत्रावरुणकर्तृत्वाधिकरणम् ॥ २१ ॥

एकविंशाधिकरणमारचयति—

**यन्मैत्रावरुणः प्रेष्यत्यनु चाऽऽहेति बाधनम् ।**
**हौत्रादिकसमाख्यायास्तत्सर्वत्रोत कुत्रचित् ॥ ३० ॥**
**आद्योऽस्तु वचनान्मैवं साहित्योक्त्युपलम्भनात् ।**
**प्रैषानुवचने यत्र सहिते तत्र बाधनम् ॥ ३१ ॥**

**अग्नीषोमीयपशौ** श्रूयते—(१)"मैत्रावरुणः प्रेष्यति चानु चाऽऽह" इति । तदेतद्वाक्यं प्रैषानुवचनयोर्मैत्रावरुणकर्तृकतां विदधाति । तेन च वाक्येन समाख्या बाध्यते । "अग्नये समिध्यमानायाऽनुब्रूहि" "यूपायाऽज्यमानायाऽनुब्रूहि" इत्यादिप्रैषाणामध्वर्युकर्तृकत्वदर्शनात् 'आध्वर्यवाः प्रैषाः' इत्यस्ति याज्ञिकानां समाख्या । तथा (२)"प्र वो वाजा अभिद्यवः" (३)"अञ्जन्ति त्वामध्वरे देवयन्तः" इत्याद्यनुवचनानां होतृकर्तृकत्वदर्शनात् 'अनुवचनानि हौत्राणि' इति याज्ञिकसमाख्या । प्रैषानुवचने च द्विविधे—समस्ते व्यस्ते च । पूर्वोदाहृते व्यस्ते । (४)"होताऽयक्षदग्निꣳ समिधा" इत्याद्यनुवचनमन्त्रस्याऽन्ते "होतर्यज" इति प्रैष आम्नातः । एते प्रैषानुवचने समस्ते । तेषु च व्यस्तसमस्तप्रैषानुवचनेषु सर्वत्र प्रबलेन वाक्येन समाख्यां बाधित्वा होतृकर्तृकत्वमध्वर्युकर्तृकत्वं च परित्यज्य मैत्रावरुणकर्तृकत्वमेवाऽभ्युपेयम् इति प्राप्ते—

**अभिधीयते**—"प्रैष्यति चानु चाऽऽह" इति चकारद्वयेन प्रैषानुवचनयोः समुच्चयो वाक्येऽस्मिन्नुपलभ्यते । ततः समुच्चितयोरेव समाख्याबाधनम् । व्यस्तयोस्तु यथासमाख्यं होत्रादिकर्तृकत्वमेवाऽभ्युपेयम् ॥

इत्येकविंशं प्रैषानुवचनस्य मैत्रावरुणकर्तृत्वाधिकरणम् ॥ २१ ॥

---

१. मैत्रावरुणाख्यो होतुरनन्तर ऋत्विक् प्रैषमपि कुर्यात् अनुवचनमपि पठेत् इत्यर्थः ।

२. तै. ब्रा ३. ५. ३. दर्शपूर्णमासयोः सामिधेन्यनुवचनमन्त्रोऽयम् ।

३. तै. ब्रा ३. ६. १. पशुयागे यूपाञ्जनानुवचनमन्त्रोऽयम् ।

४. (तै. ब्रा. ३. ६. २. १.) "होताऽयक्षदग्निꣳ समिधा सुषमिधा समिद्धं नाभा पृथिव्यास्सङ्गथे वामस्य । वर्ष्मन् दिव इडस्पदे वेत्त्वाज्यस्य होतर्यज" इति प्रैषानुवचनमन्त्रोऽयं समस्तः ।

अथ द्वाविंशं चमसहोमेष्वध्वर्युकर्तृत्वाधिकरणम् ॥२२॥

द्वाविंशाधिकरणमारचयति—

चमसैश्चमसाध्वर्युर्जुहोत्यध्वर्युरेव वा ।
सञ्ज्ञाविशेषादाद्योऽस्तु, मैवमध्वर्युसंज्ञया ॥ ३२ ॥
विशेषस्याऽनपेक्षत्वात्तेनाऽन्यस्या अपेक्षणात् ।
अध्वर्युर्जुहुयाच्छक्तेस्तदशक्तौ परोऽपि वा ॥ ३३ ॥

'चमसाध्वर्युः' इत्येवंविधसंज्ञाविशेषाच्चमसाध्वर्यव एव चमसैर्जुहुयुरिति चेत्— मैवम् ; अध्वर्युसंज्ञाया निरपेक्षत्वेन प्रबलत्वात् । केवलाध्वर्यौ चमसाध्वर्युषु चाऽनुगतोऽध्वर्युशब्दः सामान्यरूपः । चमसशब्दस्तु चमसाध्वर्युष्वेवेति विशेषरूपः । तं च विशेषमनपेक्ष्यैवाऽध्वर्युशब्द ऋत्विक्संज्ञारूपेण वर्तितुं प्रभवति । चमसशब्दस्तु सामान्यवाचिनमध्वर्युशब्दमपेक्ष्यैव पुरुषेषु संज्ञा भवति । तथा सति 'आध्वर्यव होमः' इत्यनया निरपेक्षया प्रबलया समाख्ययाऽध्वर्युरेव सत्यां शक्तौ चमसैर्जुहुयात् । ग्रहहोमव्यापृतत्वेन कदाचिदशक्तौ चमसाध्वर्यवो जुहुयुः ॥

इति द्वाविंशं चमसहोमेष्वध्वर्युकर्तृत्वाधिकरणम् ॥ २२ ॥

---

अथ त्रयोविंशं श्येनादेरनेककर्तृकत्वाधिकरणम् ॥ २३ ॥

त्रयोविंशाधिकरणमारचयति—

श्येन उद्गातृवेदोक्तो वाजपेयो यजुष्यमू ।
उद्गात्राऽध्वर्युणा कार्यौ यथाप्रकृति वाऽग्रिमः ॥ ३४ ॥
आख्याविशेषादाख्यायाः पूर्वभावी हि चोदकः ।
प्रकृताविव कर्तारस्तत्तद्धर्मे व्यवस्थिताः ॥ ३५ ॥

इति श्रीमाधवाचार्यविरचितायां जैमिनीयन्यायमालायां
तृतीयाध्यायस्य सप्तमः पादः ॥

---

श्येनयागः (१)सामवेदे समाम्नात इति तत्रत्याः सर्वे पदार्था उद्गात्राऽनुष्ठेयाः, बहिष्पवमानाज्यपृष्ठादिस्तोत्रेष्विवौद्गात्रत्वसमाख्यायाः श्येनेऽपि समत्वात्। तथा यजुर्वेदे समाम्नातो वाजपेयः सर्वोऽप्यध्वर्युणैवाऽनुष्ठेयः, समाख्यावशादिति **प्राप्ते—**

**ब्रूमः—**श्येनवाजपेयौ हि ज्योतिष्टोमविकारौ। तत्र चोदकस्तत्तत्पदार्थांस्तैस्तैः पुरुषैरनुष्ठेयतया समर्पयति। अङ्गेष्वतिदिष्टेषु पश्चात्साङ्गप्रधानानुष्ठापकस्य प्रयोगवचनस्य प्रवृत्तिः। प्रयोगवचनाधीना तु समाख्याऽत्यन्तजघन्या। ततः प्रबलचोदकवशात्प्रकृताविव नानाविधाः कर्तारः स्वस्वधर्मेषु व्यवतिष्ठन्ते ॥

इति त्रयोविंशं श्येनादेरनेककर्तृकत्वाधिकरणम् ॥ २३ ॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे तृतीयाध्यायस्य सप्तमः पादः ॥ ७ ॥**

---

## अथ तृतीयाध्यायस्याऽष्टमः पादः ॥

### तत्र प्रथमं दक्षिणादानस्य स्वामिकर्तृकत्वाधिकरणम् ॥ १ ॥

अष्टमपादे प्रथमाधिकरणमारचयति—

**दक्षिणादिपरिक्रीतिर्ऋत्विजः स्वामिनोऽथवा ।**
**परिक्रयः समाख्यानादृत्विजः स्यादथेतरत् ॥ १ ॥**
**परिक्रयात्पुराऽध्वर्युहोत्रादीनामभावतः ।**
**परिक्रयणकर्तृत्वं यजमानस्य नर्त्विजः ॥ २ ॥**

दक्षिणादानेन कर्मकराः परिक्रेतव्याः। तत्र हविस्त्यागव्यतिरिक्तं सर्वमार्त्विज्यमिति निर्णीतम्। दक्षिणा च द्वादशशतरूपाऽध्वर्युवेद उद्गातृवेदे च (२) समाम्नाता। (३)अन्वाहार्यदक्षिणाऽध्वर्युवेदे। ततः समाख्यया परिक्रेतृत्वमृत्विज इति चेत्—

---

१. 'श्येनेनाऽभिचरन् यजेत' इति वाक्यं श्येनयागविधायकम्। तच्च सामवेदीयषड्विंशब्राह्मणान्तर्गतम्। अतः श्येनयागस्य सामवेदीयत्वम्।

२. 'गौश्चाऽश्वश्चाऽश्वतरश्च गर्दभश्चाऽजाश्चाऽवयश्च माषाश्च तिलाश्च मुद्गाश्च तस्य द्वादशशतं दक्षिणा' इति सोमयागे दक्षिणाविधायकं वाक्यम्। तच्च यजुर्वेदे सामवेदे चोभयत्राऽपि श्रुतमिति भावः।

३. अन्वाहार्यः ओदनविशेषः।

मैवम्; ऋत्विजां परिक्रयणोत्तरकालीनानां तत्कर्तृत्वासम्भवेन यजमानस्यैव तत्कर्तृत्वात् ॥

इति प्रथमं दक्षिणादानस्य स्वामिकर्तृकत्वाधिकरणम् ॥ १ ॥

---

## अथ द्वितीयं वरदानस्याऽध्वर्युकर्तृकत्वाधिकरणम् ॥२॥

द्वितीयाधिकरणमारचयति—

**इष्टकावरदानं किं स्वामिनः स्यादुतर्त्विजः ।**
**स्वामिनः पूर्ववन्मैवमध्वर्योर्वचनादयम् ॥ ३ ॥**

(१)"य एतामिष्टकामुपदध्यात्, स त्रीन् वरान्दद्यात्"इत्युपधातुरध्वर्योर्गोत्रयदानं वाचनिकम् । न ह्यस्ति वचनस्याऽतिभारः ॥

इति द्वितीयं वरदानस्याऽध्वर्युकर्तृकत्वाधिकरणम् ॥ २ ॥

---

## अथ तृतीयं वपनादिसंस्काराणां याजमानताधिकरणम् ॥ ३ ॥

तृतीयाधिकरणमारचयति—

**संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथवा ।**
**अध्वर्योस्तत्र शक्तत्वात्तद्वेदोक्तेश्च तस्य ते ॥ ४ ॥**
**संस्कारैर्योग्यतां प्राप्य स्वकार्यं कर्तुमृत्विजः ।**
**क्रीणात्यतः क्रिया तेषां संस्क्रिया यजमानगा ॥ ५ ॥**

(२)"आप उन्दन्तु जीवसे" इत्याद्याः संस्कारमन्त्राः । तद्विधयश्चाऽध्वर्युवेदे समाम्नाताः (३)"केशश्मश्रु वपते, नखानि निकृन्तते" इति । शक्तश्चाऽध्वर्युर्वपनादौ । तस्मात् तस्याऽध्वर्योस्ते वपनादिसंस्कारा इति चेत्—

मैवम्; वपनादिसंस्कारा यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते । तथा च ब्राह्मणम्—(४)"केशश्मश्रु वपते नखानि निकृन्तते । मृता

---

१. तै. सं. ५. २. ८. यः एतां यजुष्कृतासंज्ञिकामिष्टकामुपदध्यात् स अध्वर्युः गोत्रयं यस्मै कस्मैचित् दद्यादित्यर्थः ।

२. तै. सं. १. २. १. १. ३. तै. सं. ६. १. १. १.

४. केशश्मश्रुवपनं नखनिकृन्तनं च कर्तव्यम् । केशाश्च श्मश्रूणि चेति यत् सा

वा एषा त्वगमेध्या यत्केशश्मश्रु । मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति'' इति। न ह्यध्वर्युवपनेन यजमानगता मृता त्वगपैति । योग्यस्य हि कर्माधिकारे सति पश्चात्प्रयासरूपेषु व्यापारेषु स्वयमशक्तः सन् कर्मकरानृत्विजः परिक्रीणाति । लोकेऽपि रोगिणः स्वामिन औषधाद्यानयन एव भृत्यो जीवितदानेन परिक्रीयते । न तु तदौषधं भृत्यः सेवते । तस्मात् इतरक्रियर्त्विजाम्, संस्कारस्तु यजमानस्य । क्वचित्तु वचनादृत्विजामपि(१) संस्कारोऽस्तु ॥

इति तृतीयं वपनादिसंस्काराणां याजमानताधिकरणम् ॥३॥



## अथ चतुर्थं तपसो याजमानताधिकरणम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

**नाऽश्नाति द्व्यहमित्येतत्तपः कस्य तयोर्द्वयोः ।**
**दुःखत्वाद्भोक्त्रसंस्कारादध्वर्योर्युज्यते तपः ॥ ५ ॥**
**फलान्तरायपापस्य नाशकत्वेन संस्कृतिः ।**
**लिङ्गात्तपः स्वामिगामि संस्कारान्तरवत्ततः ॥ ६ ॥**

**ज्योतिष्टोमे**—"द्व्यहं नाऽश्नाति" "त्र्यहं नाऽश्नाति" इत्यादिनोक्तं तपोऽध्वर्योर्युक्तम्, तस्य दुःखात्मकत्वेन परिक्रीतपुरुषैः कर्तुमुचितत्वात् । दुःखत्वादेव फलभोक्तृसंस्कारत्वाभावाद्यजमानस्य न युक्तम् इति चेत—

**मैवम्**; भाविनः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत्पापं तस्य नाशकत्वेन दुःखरूपस्याऽपि तपसः स्वामिसंस्कारत्वसम्भवात् । अस्मिन्नर्थे वाक्यशेषगतं लिङ्गं कल्पसूत्रकारेणैवमुदाहृतम्—(२)"यदा वै दीक्षितः कृशो भवति, अथ मेध्यो भवति । यदाऽस्मिन्नन्तर्न किञ्चन भवति, अथ मेध्यो भवति । यदाऽस्य कृष्णं चक्षुषोर्नश्यति, अथ मेध्यो भवति । यदाऽस्य त्वचाऽस्थि संधीयते, अथ मेध्यो भव-

---

अपरिशुद्धा मृततुल्या त्वगेव । वपनकरणेन तादृशीं अपरिशुद्धां त्वचं परित्यज्य यज्ञार्हो भूत्वा यज्ञं प्राप्नोति इति ब्राह्मणार्थः ।

१. हिरण्यमालित्वादिः अत्रैव पञ्चमाधिकरणे वक्ष्यमाणः ।

२. आप. श्रौ. १०. १४. ९, १०. त्वचाऽस्थि सन्धीयते शुष्कमांसो भवतीत्यर्थः । कृष्णं चक्षुषोर्नश्यति पक्ष्मसु लीने तारके न दृश्येते इत्यर्थः । दीक्षादशायां पृथुलस्य व्रतैर्यदङ्गं क्षीणं भवति तदग्नावेव हुतं भवेदित्यर्थः । अतः कर्शिताङ्गेनैव यष्टव्यमिति भावः ।

ति । पीवा दीक्षते, कृशो यजते । यदस्याऽङ्गानां मीयते जुहोत्येव तदिति विज्ञायते" इति । न हि दुःखरूपं तपो विना दुःखप्रदं पापं नश्यति । यथा पाटनमन्तरेण विषव्रणानां नोपशान्तिः, तद्वत् । तस्मात् वपनादिसंस्कारवत्तपोऽपि यजमानस्यैव ॥

इति चतुर्थं तपसो याजमानताधिकरणम् ॥ ४ ॥

---

## अथ पञ्चमं हिरण्यमालित्वाद्यधिकरणम् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

**हिरण्यमालिताद्यास्तु संस्कारा वचनान्मताः ।**
**ऋत्विजां ते यथाख्यानं कर्तव्या निखिलैरुत ॥ ७ ॥**
**आद्य आख्यावशान्मैवं सर्वसंनिधिपाठतः ।**
**प्रतिमुख्यं गुणावृत्तेः कर्तव्या निखिलैरपि ॥ ८ ॥**

वाजपेये श्रूयते—(१)"हिरण्यमालिन ऋत्विजः प्रचरन्ति" इति । **श्येने** श्रूयते—(२)"लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति" इति । यद्यपि हिरण्यमालित्वादीनां संस्कारत्वाद्यजमानविषयत्वं पूर्वन्यायेन प्राप्तम्, तथाऽपि वचनादयमृत्विक्संस्कारः । तत्र हिरण्यमालित्वं यजुर्वेदोक्तत्वादध्वर्यूणामेव, लोहितोष्णीषादिकं सामवेदोक्तत्वादुद्गातॄणामेव, इति समाख्यावशादभ्युपेयम् **इति चेत्—**

**मैवम्** ; 'हिरण्यमालिन ऋत्विजः प्रचरन्ति' इति सर्वेषामृत्विजां संनिधौ पठ्यमानो हिरण्यमालित्वसंस्कारः संनिधिना समाख्यां बाधित्वा सर्वैरप्यृत्विग्भिः सम्बध्यते । किंच संस्कार्यत्वादृत्विजां प्राधान्ये सति प्रतिप्रधानं गुणावृत्त्या सर्वेषामप्यृत्विजां हिरण्यमालित्वादिसंस्कारोऽभ्युपेतव्यः ॥

इति पञ्चमं हिरण्यमालित्वाद्यधिकरणम् ॥ ५ ॥

---

१. हिरण्यनिर्मिताः मालाः हिरण्यमालास्तद्वन्तः हिरण्यमालिनः । प्रचरन्ति ऋत्विक्कार्यं कुर्युः ।

२. ( आप. श्रौ. २२. ४. २३. ) शिरोवेष्टनार्थं वस्त्रमुष्णीषः । सः, परिधानीयं वस्त्रं च श्येनयागे रक्तवर्णं भवेदृत्विजां कर्मकरणकाले । एवं उपवीतस्थाने निवीतमपि धार्यमिति ।

## अथ षष्ठं गुणकामानां याजमानत्वाधिकरणम् ॥ ६ ॥

षष्ठाधिकरणमारचयति—

**वृष्टिकामी सदो नीचैर्मिनुयादिति कामना ।**
**अध्वर्योः स्वामिनो वाऽऽद्यो वाक्यान्मातुस्तदुच्यते ॥ ९ ॥**
**परस्मैपदतोऽध्वर्युव्यापारस्य परार्थता ।**
**प्रतीताऽतो वाक्यबाधे तपोवत्स्वामिनोऽस्तु तत् ॥ १० ॥**

**ज्योतिष्टोमे** श्रूयते—(१)"यदि कामयेत वर्षुकः पर्जन्यः स्यात् इति, नीचैः सदो मिनुयात्" इति । यथा पुरस्तात्पश्चाचाऽवस्थितौ हविर्धानप्राचीनवंशावुच्चैः, तथा सदो नोच्चं, किन्तु नीचैः कार्यम् इत्यर्थः । अत्र वृष्टिकामनाऽध्वर्योर्युक्ता, 'यः कामयेत् , स मिनुयात्' इति वाक्येन कामयितृमात्रोरेकत्वावगमात् । मातृत्वं चाऽध्वर्योरित्यविवादम् । तस्मात् स एव कामयिता इति चेत्—

**मैवम्** ; 'मिनुयात् इति परस्मैपदेनाऽध्वर्युव्यापारफलस्य परगामिता प्रतीयते । ततो वृष्टिलक्षणफलस्य यजमानगामित्वात्परस्मैपदश्रुत्या वाक्यं बाधित्वा कामस्य यजमानकर्तृकत्वं द्रष्टव्यम् । 'यजमानकामितां वृष्टिं पर्जन्यः सम्पादयतु' इत्येव योऽध्वर्युः कामयते, स नीचैर्मिनुयात् इति वाक्यं व्याख्येयम् । "एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते, तमागायति" इति ऋत्विजोऽपि काम इति चेत्—तर्हि तस्मिन्नुद्गीथोपासने(२) वचनादृत्विजोऽपि फलमस्तु ॥

इति षष्ठं गुणकामानां याजमानत्वाधिकरणम् ॥ ६ ॥

---

## अथ सप्तमं प्रोत्साहनमन्त्राणां याजमानत्वाधिकरणम् ॥ ७ ॥

सप्तमाधिकरणमारचयति—

**आयुर्दा इति मन्त्रोक्तिः कस्याऽध्वर्योः समाख्यया ।**
**तद्बाधे लिङ्गतः स्वामिगामिता कामवन्मता ॥ ११ ॥**

**इदमाम्नायते**—(३) "आयुर्दा अग्नेऽस्यायुर्मे देहि" इति । तस्यैतस्य मन्त्रस्य पाठोऽध्वर्योर्यजमानस्य वा इत्ययं **संशयः** 'कस्य' इत्यनेन पदेन सूचितः ।

---

१. मै. सं. ३. ८. ९. ग्रन्थकारेणैव विवृतमिदं वाक्यम् ।

२. छान्दोग्योपनिषदि समाम्नातमिदमुद्गीथोपासनम् ।

३. तै. सं. १. ५. ५. ३.

अस्मिन्मन्त्रे "आयुर्मे देहि" इति फलस्य स्वात्मसम्बन्धः प्रतीयते । स च यजमानस्य युक्तः, नाऽध्वर्योः । तस्मात् कामवन्मन्त्रोऽपि **याजमानः** ॥

इति सप्तमं प्रोत्साहनमन्त्राणां याजमानत्वाधिकरणम् ॥ ७ ॥

---

### अथाऽष्टमं द्व्याम्नातानामुभयार्थत्वाधिकरणम् ॥ ८ ॥

अष्टमाधिकरणमारचयति—

**वाजस्य मेत्यमुं ब्रूयादेको द्वौ वा कृतार्थतः ।**
**एकः काण्डद्वये पाठादध्वर्युस्वामिनावुभौ ॥ १२ ॥**

दर्शपूर्णमासयोः—(१)"वाजस्य मा प्रसवेन" इत्ययं मन्त्रोऽध्वर्युकाण्डे यजमानकाण्डे चाऽऽम्नातः । तत्रैकेन पठिते सति मन्त्रस्य चरितार्थत्वादितरस्तं न पठेत् इति चेत्—

**मैवम्**; काण्डान्तरपाठवैयर्थ्यप्रसङ्गात् । तस्मादुभाभ्यां पठनीयः । तयोः पठतोराशयभेदोऽस्ति । 'अनेन मन्त्रेण प्रकाशितमर्थमनुष्ठास्यामि' इत्यध्वर्युर्मनुते । 'अत्र न प्रमदिष्यामि' इति यजमानः ॥

इत्यष्टमं द्व्याम्नातानामुभयार्थत्वाधिकरणम् ॥ ८ ॥

---

### अथ नवममभिज्ञवाचनाधिकरणम् ॥ ९ ॥

नवमाधिकरणमारचयति—

**वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयौ ज्ञ एव वा ।**
**अविशेषादुभौ, ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥ १३ ॥**

वाजपेये श्रूयते—"क्लृप्तीर्यजमानं वाचयति" इति । (२)"आयुर्यज्ञेन कल्पताम्" इत्यादयो मन्त्राः क्लृप्तयः । तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्; विद्वांसं वाचयेत् इत्येवं विशेषस्याऽश्रवणात् । अनभिज्ञं तदैव शिक्षयित्वाऽपि वाचयितुं

---

१. तै. सं. १. ९. १३. १. ( अध्वर्युकाण्डे ) तै. सं. १. ६. ४. २. ( यजमानकाण्डे )　　२. तै. सं. ४. ७. १०. २, काठ. सं. १४. १.

शक्यत्वात् इति चेत्—

**मैवम्**; अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात्। तस्मात् अभिज्ञमेव वाचयेत् ॥

इति नवममभिज्ञवाचनाधिकरणम् ॥ ९ ॥

---

### अथ दशमं द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ॥ १० ॥

दशमाधिकरणमारचयति—

**वत्सं चोपसृजेत्तद्वदुखां चाऽधिश्रयेदिति ।**
**द्वादशद्वंद्वकर्मैतत्स्वामिनो वेतरस्य वा ॥ १४ ॥**
**आद्यः पाठात्स्वामिकाण्डे तादर्थ्येन परिक्रयात् ।**
**महाकाण्डोक्तितोऽन्त्योऽस्तु द्वंद्वतैवाऽत्र कीर्त्यते ॥ १५ ॥**

**दर्शपूर्णमासयो**र्याजमाने काण्डे श्रूयते—(१)"द्वादश द्वंद्वानि, दर्शपूर्णमासयोस्तानि सम्पाद्यानीत्याहुः वत्सं चोपावसृजति, उखां चाऽधिश्रयति अव च हन्ति, दृषदौ च समाहन्ति" इत्यादि । तत्र गां दोग्धुं वत्सोपावसर्जनमेकं कर्म, दोहनेन संपादितं क्षीरं धारयितुं पिठरस्थापनमपरं कर्म, तदेतदुभयमेकं द्वंद्वम् । तथा—व्रीहीणामवघातः दृषदुपलयोः पाषाणान्तरेण समाघातः; इत्येतदुभयं द्वितीयं द्वंद्वम् । एवं द्वादश कर्मद्वंद्वान्यनुष्ठेयान्याम्नातानि । तेषां याजमाने काण्डे पठितत्वात्समाख्यया यजमानेन तान्यनुष्ठेयानि इति प्राप्ते—

**ब्रूमः**—यजमानस्य यानि कार्याणि, तान्यनुष्ठातुमेव परिक्रीता ऋत्विजः । किञ्च यजुर्वेदे याजमानमिदमवान्तरकाण्डं, महाकाण्डं त्वाध्वर्यवमेव । तत्रैवैते वत्सापाकरणादयो धर्मा आम्नाताः । तस्मादध्वर्युरेवताननुतिष्ठेत् । याजमाने तु काण्डे न तेषा-

---

१. यानीमानि वक्ष्यमाणानि युग्मानि तानि दर्शपूर्णमासयोः सम्पादनीयानि इति ब्रह्मवादिनः कथयन्ति । तेषामेव स्वरूपं विव्रियते–वत्समित्यादिना । गां दोग्धुमध्वर्युः वत्सं बन्धनान्मोचयेत् । क्षीरं श्रपयितुं गार्हपत्यस्योपरि उखां स्थापयेत् । इदमेकं द्वन्द्वम् । व्रीहीनवहन्यात् । तण्डुलपेषणार्थं दृषदुपले शम्यया समाहन्यात् । इदमपरं द्वन्द्वम् । एवं रीत्या द्वन्द्वतासम्पादनं कर्तव्यमिति । एवं पेषणार्थं दृषदि तण्डुलाधिवापः । पुरोडाशश्रपणार्थं अग्नौ कपालोपधानमिति तृतीयं द्वन्द्वम् । एवमन्यान्यपि ब्राह्मणतोऽवगन्तव्यानि । यावदुपात्तमिह दर्शितम् ।

मनुष्ठानप्रकारश्चोदितः, किंतु परिगणनया द्वंद्वतासंपादनमात्रमाम्नातम् । तेन यजमानस्तामानुपूर्वीं मनसि निधायाऽध्वर्योरनुष्ठाने प्रमादराहित्यमनुसंधातुं प्रभवति । तस्मादध्वर्योरेवाऽनुष्ठानम् ॥

इति दशमं द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ॥ १० ॥

### अथैकादशं होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम् ॥ ११ ॥

एकादशाधिकरणमारचयति—

**यो होताऽध्वर्युरेष स्यादित्याध्वर्यवमाचरन् ।**
**हौत्रं कुर्यान्न वा त्यागहेत्वभावात्करोति तत् ॥ १६ ॥**
**होतैको युगपत्कर्मद्वयं कर्तुं न हि प्रभुः ।**
**त्यजेच्चोदकतः प्राप्तं हौत्रं वाचनिकार्थकृत् ॥ १७ ॥**

अग्नीषोमीयपशौ (१)"परिवीरसि" इत्यनेन करणमन्त्रेणाऽध्वर्युर्यूपस्य रशनया(२)परिव्याणं करोति । तदानीं क्रियमाणं तत्परिव्याणं होता (३)"युवा सुवासाः" इत्यनेन मन्त्रेणाऽनुवदति । तदेतदुभयं चोदकपरम्परया(४)कुण्डपायिनामयने प्राप्तम् । तत्राऽध्वर्योर्होतुश्च समास आम्नातः "यो होता सोऽध्वर्युः" इति । होतारमनूद्याऽध्वर्युत्वविधानादध्वर्युकार्यं होत्राऽनुष्ठेयम् । ततः "परिवीरसि" इत्यनेन करणमन्त्रेण होता यूपपरिव्याणं कुर्वीत । तदानीं स्वस्य चोदकतः प्राप्तं हौत्रमपि होता न त्यजेत् । न हि त्यागहेतुं कंचिन्निषेधं पश्यामः । तस्मात्क्रियमाणं तत्परिव्याणं "युवा सुवासाः" इत्यनेन मन्त्रेण होताऽनुवदेत् **इति प्राप्ते—**

**ब्रूमः**—द्वयोरध्वर्युहोत्रोरुचितं कर्मद्वयमेको होता युगपत्कर्तुं न शक्नोति । ततोऽन्यतरस्याऽवश्यंभाविनि त्यागे चोदकतः प्राप्तं हौत्रमेव त्यजेत् । आध्वर्यवं तु "यो होता सोऽध्वर्युः" इत्यनेन प्रापितत्वादनुष्ठेयम् ॥

इत्येकादशं होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम् ॥ ११ ॥

---

१. तै. सं. १. ३. ६. २.    २. परिव्याणं वेष्टनम् ।
३. तै. ब्रा. ३. ६. १. ३.    ४. कुण्डपायिनामयनाख्यः सत्रविशेषः ।

## अथ द्वादशं प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् ॥ १२ ॥

द्वादशाधिकरणमारचयति—

**प्रोक्षण्यासादनं कुर्यादध्वर्युरितरोऽथवा ।**
**आख्ययाऽऽद्यः सादयेति प्रेषितोऽन्योऽस्तु लिङ्गतः ॥१८॥**

**दर्शपूर्णमासयोः** प्रोक्षणीनां केनचित्पात्रेण वेद्यामासादनं श्रुतम् । तदेतद्यजुर्वेदोक्तत्वादाध्वर्यवम् **इति चेत्—**

**मैवम्**; प्रैषमन्त्रविरोधप्रसङ्गात् । "प्रोक्षणीरासादय, इध्माबर्हिरुपसादय" "अग्नीदग्नीन्विहर, बर्हिः स्तृणीहि" इत्यादिष्वाध्वर्यवेषु प्रैषमन्त्रेषु श्रूयमाणमाग्नीध्रसम्बोधनं मध्यमपुरुषश्चाऽन्येन तदनुष्ठाने सत्युपपद्यते । तस्मात् नाऽऽध्वर्यवम् ॥

इति द्वादशं प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् ॥ १२ ॥



## अथ त्रयोदशं प्रैषस्याऽऽध्वर्यवत्वाधिकरणम् ॥ १३ ॥

त्रयोदशाधिकरणमारचयति—

**अग्नीत्प्रेष्येदुताध्वर्युरग्नीदस्त्वविरोधतः ।**
**आख्याविरोधादध्वर्युः प्रैषद्वाराऽर्थकृद्यतः ॥ १९ ॥**

यथा प्रोक्षणीराग्नीध्र आसादयति, तथा प्रैषमन्त्रमप्याग्नीध्र एव पठतु विरोधाभावात् **इति चेत्—**

**मैवम्**; आध्वर्यवसमाख्यायाः पूर्वोदाहृतसम्बोधनमध्यमपुरुषयोश्च विरोधात् । न च प्रोक्षण्यासादनादीनामध्वर्युकर्तृकत्वाभावेऽपि समाख्याविरोधस्तदवस्थ इति वाच्यम् । प्रैषद्वारा प्रयोजककर्तृत्वेऽपि तदविरोधात् । तस्मात् अध्वर्योरेव प्रैषमन्त्रः ॥

इति त्रयोदशं प्रैषस्याऽऽध्वर्यवत्वाधिकरणम् ॥ १३ ॥



## अथ चतुर्दशं करणमन्त्रप्रकाश्यफलस्य याजमानताधिकरणम् ॥ १४ ॥

चतुर्दशाधिकरणमारचयति—

**ममाग्न इति कस्याऽत्र फलं लिङ्गेन वक्तृगम् ।**
**श्रुत्या स्वामिनि न क्रीते लिङ्गं तत्रोपचर्यताम् ॥२०॥**

(१)"ममाऽग्ने वर्चो विहवेष्वस्तु" इत्ययमाहवनीयस्याऽन्वाधाने करणभूतो मन्त्रोऽध्वर्युणा पठ्यते । 'विशिष्टं हवनं येषां यज्ञानां ते विहवास्तेषु वर्चस्तेजसोपलक्षितं यत्फलं तन्ममाऽस्तु' इत्यनेन लिङ्गेन मन्त्रमुच्चारयितुरध्वर्योस्तत्फलम् इति **चेत्—**

**मैवम्**; "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते । न च परिक्रीतस्याऽध्वर्योर्दक्षिणातिरिक्तफलसम्बन्धो न्याय्यः । तस्मात् श्रुतिन्यायाभ्यां विरुद्धं तल्लिङ्गं यजमानपरत्वेनोपचरणीयम् । 'मदीययजमानस्य तद्वर्चोऽस्तु' इति ह्युपचारः । तस्मात् यजमानेन पाठ्येषु "आयुर्दा-अग्नेऽस्यायुर्मे देहि" इत्यादिषु क्रियमाणानुवादिषु (२)प्रत्यगाशीर्मन्त्रेषु श्रुतं फलं यथा याजमानम्, तथैवाऽध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुतमपि फलं याजमानमेव ॥

इति चतुर्दशं करणमन्त्रप्रकाश्यफलस्य याजमानताधिकरणम् ॥ १४ ॥



## अथ पञ्चदशं करणमन्त्रफलस्य ऋत्विग्गामिताधिकरणम् ॥१५॥

पञ्चदशाधिकरणमारचयति—

**मा मा सन्ताप्तमित्येतत्कस्मिन्स्वामिनि पूर्ववत् ।**
**अध्वर्यावस्तु तच्चेन स्वामिकर्मोपयोगतः ॥ २१ ॥**

दर्शपूर्णमासयोराघारहोमार्थमाज्यपूर्णौ(३) स्रुक्स्रुवौ गृहीत्वा नाभिसमीपे हस्तेन धारयति । तत्राऽयं करणमन्त्रोऽध्वर्युणा पठ्यते—(४)"अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्ताप्तं लोकं मे लोककृतौ कृणुतम्" इति । 'भोः (५)स्रुक्स्रुवरूपावग्नाविष्णू युवां नाभिदेशे धारयन्नहमध्वर्युर्मा वामवक्रमिषं युवयोरतिक्रमं न कृतवानस्मि । युवां च मत्तो वियुक्तौ मा भवतम् । ततो मां देहधारिणं मा सन्ताप्तं मम देहे सन्तापं ज्वरादिरूपं मा कुरुतम् । स्थानकृतौ युवामाघारहोमाय स्थानं कुरुतम्' इत्यर्थः । तत्र पूर्वोक्तवर्चोन्यायेन सन्तापाभावोऽपि यजमानस्यैव, न त्वध्वर्योः इति **चेत्—**

**मैवम्**; अध्वर्यावसन्तप्ते सत्यविघ्नेन स्वामिनः कर्म समाप्यते । तस्मात् अध्वर्युगतोऽपि सन्तापाभावो यजमानस्यैव फलमिति नाऽत्र मच्छब्दस्योपचारः ॥

इति पञ्चदशं करणमन्त्रफलस्य ऋत्विग्गामिताधिकरणम् ॥ १५ ॥

---

१. तै. सं. ४. ७. १४. १.  २. स्वात्मनि फलप्रार्थनरूपा मन्त्रा प्रत्यगाशीर्मन्त्राः ।
४. तै. सं. १. १. १२. अत्र स्रुक्स्रुवावग्नाविष्णुत्वेनोपचर्येते ।
३, ५. जुहूपभृताविति युक्तम् ।

अथ षोडशं भद्रादेरुभयगामित्वाधिकरणम् ॥ १६ ॥

षोडशाधिकरणमारचयति—

**भद्रं तन्नौ सहेत्येतत्कस्मिन् स्वामिनि युज्यते ।**
**द्वित्वश्रुत्या द्वयोरेतदध्वर्युयजमानयोः ॥ २२ ॥**

**ज्योतिष्टोमे**—हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोरधस्ताच्चतसृष्वाग्नेय्यादिविदिक्षु चत्वार उपरवनामका गर्ता अरत्निमात्रखाता अधोभागे परस्परं मिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता वर्तन्ते । तेष्वेकस्मिन्नुपरवे यजमानो दक्षिणहस्तं प्रसारयति, तथैवाऽध्वर्युरन्यस्मिन्स्वहस्तं प्रसार्याऽधस्ताद्यजमानहस्तं गृह्णाति । तदा यजमानः 'किमत्र' इत्यनेन मन्त्रेण फलं पृच्छति । अध्वर्युश्च 'भद्रम्' इत्यनेन मन्त्रेणोत्तरं ब्रूते । ततो यजमानः 'तन्नौ सह' इत्यनेन मन्त्रेण तत्फलं स्वकीयत्वेन स्वीकरोति । तस्मात् यजमानस्यैव तत् **इति चेत्**—

**मैवम्**; 'नौ' इत्यनेन, द्विवचनेन 'सह' इत्यनेन चोभयगामितयैव स्वीकारात् ॥

इति षोडशं भद्रादेरुभयगामिताधिकरणम् ॥ १६ ॥

---

अथ सप्तदशं धर्माणां प्राकृतकार्यार्थत्वाधिकरणम् ॥ १७ ॥

सप्तदशाधिकरणमारचयति—

**धर्माणां प्रकृतिस्थानां विकृतावतिदेशतः ।**
**प्राप्तिर्विशेषतो वाऽऽद्यो विशेषस्याऽनिरूपणात् ॥ २३ ॥**
**प्रकृतौ कार्यकृद्धर्मा विकृतौ स्युर्न चेतरे ।**
**यूपावटास्तृतिः कार्यं न हि प्राकृतबर्हिषः ॥ २४ ॥**

दर्शपूर्णमासयोर्वेदिधर्मा बर्हिर्धर्माश्च हविरासादनादयोऽङ्गप्रधानार्था इति पूर्वत्र निर्णीतम् । ते च धर्मा विकृतावतिदिश्यमाना नियामकाभावात्सर्वेऽप्यतिदिश्यन्ताम् **इति प्राप्ते**—

**ब्रूमः**—कार्यमत्र नियामकम् । प्रकृतौ हि हविरासादनं वेदिकार्यम् । तच्च विकृतावपि प्राप्यमाणं स्वसिद्धये खननादीन्वेदिधर्मान् प्रापयति । यूपावटास्तरणरूपं तु कार्यं न प्रकृतावस्ति, दर्शपूर्णमासयोर्यूपावटाभावात् । तच्चाऽऽस्तरणकार्यं विकृतौ विधीयमानमप्यप्राकृतकार्यतया प्राकृतान् लवनादीन् बर्हिस्संस्कारान्न प्रापयति । तस्मात्प्रकृतिगताः कार्यकृद्धर्मा एव विकृतौ प्राप्यन्ते ॥

इति सप्तदशं धर्माणां प्राकृतकार्यार्थत्वाधिकरणम् ॥ १७ ॥

अथाऽष्टादशं लवनस्याऽसर्वार्थताधिकरणम् ॥ १८ ॥

अष्टादशाधिकरणमारचयति—

**यद्बर्हिस्तत्पवित्रार्थं न वाऽऽद्यस्तस्य सम्भवात् ।**
**संस्कृतं स्तरणं क्षीणं पवित्रं त्वन्यतो भवेत् ॥ २५ ॥**

दर्शपूर्णमासयोरामनन्ति—(१)"समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति" इति । तत्र यदेतद्वेदिस्तरणार्थं लवनसंस्कृतं बर्हिः, तेन पवित्रसम्भवादास्तरणवत्पवित्रमपि बर्हिषः कार्यम् इति चेत्—

**मैवम्** ; आस्तरण एव संस्कृतस्य सर्वस्य बर्हिष उपक्षीणत्वात् । न हि 'वेदिं स्तृणाति' इति विहितस्य स्तरणस्याऽकस्माद्बर्हिरेकदेशे सङ्कोचो युक्तः । तस्मात् यथा यूपावटमसंस्कृतेन बर्हिषा स्तृणाति, तथा पवित्रनिष्पत्तिरपि शास्त्रीयलवनादिसंस्काररहितैः परिभोजनीयनामकैर्दर्भैः सम्पादनीया ॥

इत्यष्टादशं लवनस्याऽसर्वार्थताधिकरणम् ॥ १८ ॥

---

अथैकोनविंशं शेषनिधानाधिकरणम् ॥ १९ ॥

एकोनविंशाधिकरणमारचयति—

**पुरोडाशस्य शकलमैन्द्रवायवपात्रके ।**
**अवदध्यात्पुरोडाशो नवोऽथ सवनीयकः ॥ २६ ॥**
**सिद्धस्य यजनार्थत्वान्नवं संपाद्य तत्क्रिया ।**
**सवनीयेन तत्कार्यं संस्कार्यत्वाद्द्वितीयया ॥ २७ ॥**

ज्योतिष्टोमे श्रूयते—(२)"पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति" इति । तत्र सवनीयपुरोडाशस्य शकलं यद्यपि निष्पन्नम्, तथाऽपि तस्य यजनार्थत्वेन संस्कृतबर्हिर्वदुपक्षयान्नूतनं कंचित्पुरोडाशं सम्पाद्य तदीयशकलस्यैन्द्रवायवपात्रप्रक्षेपक्रिया कर्तव्या इति चेत्—

**मैवम्** ; सवनीयपुरोडाशशकलेनैतन्निधानं कर्तव्यम् । कुतः ? संस्कार्यत्वात् ।

---

१. आप. श्रौ. १. ११. ६. साम्यं पृथुत्वे ।

२. आप. श्रौ. १२. २५. ६. ऐन्द्रवायवग्रहस्य भक्षणानन्तरं अप्रक्षालित एव तस्मिन् सवनीयपुरोडाशस्य यागे उपयुक्तस्य खण्डं निक्षिपेदित्यर्थः । एवमग्रेऽपि ।

'शकलं निदधाति' इति द्वितीयया संस्कार्यत्वं गम्यते । इष्टशिष्टस्य हि प्रतिपत्तिरूपः संस्कारः । न चाऽत्र कृत्स्नं यजनार्थम्, अवदानस्येयत्तया पुरोडाशभागस्याऽवशेषितत्वात् । यथाऽत्र पूर्वसिद्धपुरोडाशशकलम्, तथा (१)"धाना आश्विनपात्रे" "पयस्यां मैत्रावरुणपात्रे" इत्यत्राऽपि पूर्वशेषस्यैव प्रक्षेपः ॥

इत्येकोनविंशं शेषनिधानाधिकरणम् ॥ १९ ॥



अथ विंशमुपांशुत्वस्य प्रधानार्थत्वाधिकरणम् ॥ २० ॥

विंशाधिकरणमारचयति—

**काम्या उपांशु यष्टव्याः किं तदङ्गप्रधानयोः ।**
**प्रधान एव वा नाऽत्र विशेषोक्तिरतो द्वयोः ॥ २८ ॥**
**मुख्यानामेव काम्यत्वात्तेष्वेव परिचोदना ।**
**अङ्गानामतथाभावादुपांशुत्वं प्रधानगम् ॥ २९ ॥**

**इदमाम्नायते**—"यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु यष्टव्याः" इति । अथर्ववेदोक्तकर्मवद्यज्ञेषु काम्या इष्टयो गोप्याः । तस्मात्तासामुपांशुत्वं युक्तमित्यर्थः । यथा वेदिधर्माणां बर्हिर्धर्माणां चाऽङ्गप्रधानयोः समानो विधिः, तथोपांशुत्वस्याऽपि । न ह्यत्र कश्चिद्विशेष आम्नात इति चेत्—

**मैवम्**; काम्यत्वस्यैवाऽत्र विशेषनियामकत्वात् । न त्वङ्गानां काम्यत्वमस्ति, करणपौष्कल्यसम्पादकानां तेषां फले साक्षात्सम्बन्धाभावात् । ततः साक्षात्फलसाधने प्रधान एवोपांशुत्वम् । अङ्गेषु तु तत्तद्वेदानुसारेण ध्वनिविशेषः ॥

इति विंशमुपांशुत्वस्य प्रधानार्थत्वाधिकरणम् ॥ २० ॥



अथैकविंशं दृतिनवनीताज्याधिकरणम् ॥ २१ ॥

एकविंशाधिकरणमारचयति—

**नवनीतं श्येन आज्यं मुख्येऽङ्गे वाऽस्तु मुख्यगम् ।**
**विधेयमाज्यमप्राप्तं दृतिस्थनवनीतकम् ॥ ३० ॥**

१. धानाः भ्रष्टा यवाः । पयस्या आमिक्षा ।

**मुख्यः सोमविकारोऽङ्गे चोदकप्राप्तमाज्यकम् ।**
**अनूद्य दृतिसंस्थानं नवनीतगुणो विधिः ॥ ३१ ॥**

श्येने श्रूयते—(१)"दृतिनवनीतमाज्यं भवति" इति । दृतौ चिरं संगृहीतं नवनीतं यस्याऽऽज्यस्य प्रकृतिद्रव्यं तदेतदीदृशमाज्यं मानान्तरेण पूर्वमप्राप्तत्वात्प्रधानकर्मणि विधेयम् इति चेत्—

**मैवम्**; प्रधानश्येनस्य सोमयागविकारत्वेनाऽऽज्यापेक्षाया अभावात् । अङ्गेष्विष्टिविशेषेषु चोदकप्राप्तस्याऽऽज्यस्य प्रकृतिद्रव्यत्वेन यथोक्तनवनीतगुणो विधीयते ॥

इत्येकविंशं दृतिनवनीताज्याधिकरणम् ॥ २१ ॥



### अथ द्वाविंशं श्येनाङ्गानां दृतिनवनीताज्यताधिकरणम् ॥ २२ ॥

द्वाविंशाधिकरणमारचयति—

**सुत्याकालगताङ्गेषु गुणः सर्वेषु वोदितः ।**
**आद्यो वैशेषिकाङ्गत्वाद्वाक्यात्सर्वाङ्गसङ्गतिः ॥ ३२ ॥**

योऽयं श्येनस्याऽङ्गेषु दृतिनवनीतत्वगुणो विहितः, सोऽयं सुत्याकालीनेष्वेव सवनीयपशुतत्पुरोडाशरूपेष्वङ्गेषु, न तु कालान्तरवर्तिदीक्षणीयाद्यङ्गेषु । विमतो गुणः सुत्याकालीनाङ्गमात्रगः, श्येनवैशेषिकत्वात्, पशुसाहित्यवत् । यथा "सह पशूनालभते" इति विहितं पशुसाहित्यं श्येन एव विशेषत्वेनोच्यमानं सुत्याकालीनेष्वेव सवनीयपशुष्ववस्थितम्, तथा नवनीतमपि इति प्राप्ते—

**ब्रूमः**—'यदाज्यं तत् दृतिनवनीतम्' इति वाक्येन सर्वाङ्गताज्यविषयत्वप्रतीतावनुमानं कालात्ययापदिष्टम् । तस्मात् सर्वेष्वङ्गेषु तन्नवनीतम् ॥

इति द्वाविंशं श्येनाङ्गानां दृतिनवनीताज्यताधिकरणम् ॥ २२ ॥



### अथ त्रयोविंशं सवनीयपुरोडाशस्य मांसमयत्वाधिकरणम् ॥ २३ ॥

त्रयोविंशाधिकरणमारचयति—

**शाक्यायने पुरोडाशास्तरसा इति मांसता ।**
**सर्वत्र सवनीये वा, सर्वत्र नवनीतवत् ॥ ३३ ॥**

---

१. दृतिः चर्ममयी भस्त्रा ।

**तरसाः सवनीयाः स्युरिति तत्सन्निधिः श्रुतः ।**
**पुरोडाशस्य मांसत्वं तेष्वेवाऽतो नियम्यते ॥ ३४ ॥**

षट्त्रिंशत्सु संवत्सरेष्वनुष्ठेयं शाक्यानामयनम् । तत्र श्रूयते—(१)"संस्थितेऽहनि गृहपतिर्मृगयां याति, स यान्मृगान्हन्ति, तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति" इति । तत्र यथा नवनीतं सर्वेष्वङ्गेषु निविष्टम्, तथा मांसत्वमपि सर्वेषु पुरोडाशेषु निविशते इति चेत्—

**मैवम्**; तदा हि 'ये पुरोडाशास्ते तरसाः' इति वचनव्यक्तौ व्यवहितान्वयः स्यात् । तरसशब्दपुरोडाशशब्दयोर्मध्ये सवनीयशब्देन व्यवधानात् । इह तु 'तरसाः, सवनीयाः" इत्यनयोः सन्निधिः श्रूयते । तथासति 'ये सवनीयास्ते तरसाः' इत्यनेन सन्निध्यनुगृहीतेन वाक्येन मांसत्वं सवनीयपुरोडाशेष्वेव नियम्यते ॥

इति त्रयोविंशं सवनीयपुरोडाशस्य मांसमयत्वाधिकरणम् ॥ २३ ॥

**इति श्रीमाधवाचार्यविरचिते जैमिनीयन्यायमालाविस्तरे**
**तृतीयाध्यायस्याऽष्टमः पादः ॥ ८ ॥**

**समाप्तश्चाऽयं तृतीयोऽध्यायः ॥ ३ ॥**



१. आप. श्रौ. २३. ११. १२, १३. संस्थिते समाप्ते, अहनि अहस्साध्ये क्रियाकलापे । तरसं मांसम् । प्रतिदिनं तदहःकृत्यं परिसमाप्य गृहपतिः मृगयां गत्वा तत्र हतान् मृगानानीय तेषां मांसैः श्वोभूते सवनीयपुरोडाशान् कृत्वा तैर्यजेत इति विषयवाक्यार्थः ॥

प्राप्तिस्थानम्—

**चौखम्बा संस्कृत पुस्तकालय,**

**बनारस सिटी ।**

# जैमिनीयन्यायमालायास्तृतीयाध्यायान्तायाः

## अर्धश्लोकसूची ।

इति जैमिनीयन्यायमालायास्तृतीयाध्यायान्तायाः
अर्धश्लोकसूची समाप्ता ॥

# जैमिनीयन्यायमालायास्तृतीयाध्यायान्तायाः विषयवाक्यानामुद्धृतवाक्यानां च

# आकरसूची ।

इति तृतीयाध्यायान्ताया जैमिनीयन्यायमालायाः
विषयवाक्यसूची ।



---

* एतच्चिह्नाङ्कितानि वाक्यानि निर्दिष्टस्थलेष्वानुपूर्व्या नोपलब्धानि, किन्त्वर्थतोऽनुवादकानि शाखान्तरीयाणि वेति ध्येयम् ।

## अस्मत्प्रकाशितपुस्तकानां संक्षिप्त-सूचीपत्रम्।

| | | |
|---|---|---|
| १ | अर्थसंग्रहः। मीमांसार्थकौमुद्याख्यया व्याख्यया सहितः। | ०–१४ |
| २ | अधिकरणकौमुदी। श्रीदेवनाथठक्कुरकृता। | १—० |
| ३ | टुपटीका। कुमारिलभट्टपादवि[illegible]ता। | ४—० |
| ४ | तन्त्रवार्त्तिकम्। ,, ,, | यन्त्रस्थ |
| ५ | न्यायरत्नमाला। पार्थसारथिमिश्रविनिर्मिता। | ३–० |
| ६ | न्यायसुधा। त[illegible]वार्तिकव्याख्या श्रीभट्टसोमेश्वरकृता। | २४–० |
| ७ | पूर्वमीमांसाधिकरणकौमुदी। रामकृष्णभट्टाचार्यविरचिता। | १—८ |
| ८ | प्रक[illegible]पञ्चिका। श्री शालिकनाथमिश्रविरचिता। | ५—० |
| ९ | बृह[illegible] ऋजुविमलया विभूषिता। | ४—८ |
| १० | भाट्टचिन्तामणिः। श्री गागाभट्टविरचिता। | ४—८ |
| ११ | भाट्टभाषाप्रकाशः। श्री नारायणतीर्थमुनिविरचितः। | ०–१० |
| १२ | मीमांसाकौस्तुभः [illegible]विरचितः। | १८–० |
| १३ | मीमांसार्थप्रकाशः श्री [illegible]भास्करेण प्रणीतः। | १—० |
| १४ | मीमांसापरिभाषा। नित्यानन्दपन्तकृत टिप्पणी सहिता। | ०—२ |
| १५ | मीमांसान्यायप्रकाशः। सारविवेचिन्याख्यव्याख्यासहितः | २—० |
| १६ | ,, ,, ,, भाट्टालङ्काराख्यव्याख्ययासहितः। | २—८ |
| १७ | मीमांसाबालप्रकाशः। श्रीभट्टशङ्करेण विरचितः। | ३—० |
| १८ | मीमांसानुक्रमणिका। मीमांसामण्डनेन मण्डिता। | ७—८ |
| १९ | विधिरसायनम्। श्री मदप्पय्यदीक्षितविरचितम्। | ३—० |
| २० | वेदप्रकाशः। श्री सत्यज्ञानानन्दतीर्थेन विरचितः। | १—८ |
| २१ | शास्त्रदीपिका। युक्तिस्नेहप्रपूरण्याख्यव्याख्यासहिता। | १—८ |
| २२ | श्लोकवार्त्तिकम्। न्यायरत्नाकराख्यया व्याख्यया सहितम्। | १५–० |
| २३ | कात्यायनश्रौतसूत्रम्। कर्कभाष्यसहितम्। | १३–० |
| २४ | ताण्डयमहाब्राह्मणम्। सायणभाष्यसहितम्। | १५–० |
| २५ | आपस्तम्बधर्मसूत्रम्। उज्ज्वलाख्यया वृत्या संवलितम्। | ४—० |
| २६ | आपस्तम्बगृह्यसूत्रम्। अनाकुला–तात्पर्यदर्शनाख्यव्याख्याद्वयोपेतम्। | ४— |
| २७ | बौधा[illegible]सूत्रम्। श्री गोविन्दस्वामिप्रणीतविवरणोपेतम्। | ४—० |
| २८ | गोभिलगृ[illegible]। सटीकम्। | ३—० |
| २९ | लाट्यायनश्रौतसूत्रम् सटीकम्। | २—० |

---

सर्वविधपुस्तकप्राप्तिस्थानम्—

## जयकृष्णदास हरिदास गुप्तः–

### चौखम्बा संस्कृत सीरीज़ आफिस,

बनारस सिटी।